# सङ्ग्रहशिरोमणिः

## (द्वितीयो भागः)

कुलपतेः डॉ० मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः

व्याख्याकारः सम्पादकश्च

आचार्यश्रीकमलाकान्तशुक्लः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

## सङ्ग्रहशिरोमणिः

लोकपरलोकसाधक-जन्मकार्यविशेष-मुहूर्त्त—सर्वसाधारणजननिवासगृहनिर्माण-विधि—हस्तप्रमाण-भू-वृक्षशल्योद्धार-भूम्याकाशलक्षण - काकप्रभृतिपक्षिचेष्टा - शब्द-अण्ड-निलय-श्वान-शृगाल-चेष्टाशब्द-सरीसृपचेष्टा - अङ्गस्पर्श - बालचेष्टा - कार्य-छिक्कादिशकुनैर्जगतः शुभाशुभ-कलाप-कथन - वृष्टिगर्भजभाविवर्षणसमय - वृक्ष-सस्य - देवमूर्त्ति-प्रसवाग्नि - विकृतिप्रकृति-जन्यफलपरिपाक - कालज्ञानस्तदुपशम - विधान-तिथि-पर्व-व्रतनिर्णय - सन्निपातव्रत-सन्निपाताशौच - दाहाधिकार - प्रभृति-बहुविधविहितधर्मशास्त्रीयैकोनपञ्चाशदधिक-शतसंख्याकव्यवस्था - पवित्रपदार्थ - दूषित-पदार्थ-कूपादिजल-वस्त्र-पात्रादिशुद्धि-मृत्यु-लक्षणादिबहुविषयविशिष्टः पुष्पपराग-सञ्चितमाक्षिकसमः सुमधुरः सर्वकालोपयोगि - लोककल्याणसहायकोऽमृतघट इवालोकनीयोऽयं समुदारैर्महानुभावैरिति ।



M. M. SUDHĀKARADVIVEDI-GRANTHAMĀLĀ

[ Vol. V ]

# SAṄGRAHAŚIROMAṆI

## With the Hindi Commentary

## [ PART TWO ]

FOREWORD BY

**DR. MANDAN MISHRA**

VICE-CHANCELLOR

EDITED BY


**ĀCĀRYA ŚRĪ KAMALĀKĀNTA ŚUKLA**

Sammānita-Ācārya

Sampurnanand Sanskrit University

Varanasi






VARANASI

1997

Research Publication Supervisor –
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.



Published by –
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi – 221 002



Available at –
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi – 221 002



**First Edition** – 1000 Copies
**Price** – Rs. 180.00



Printed by –
**Anand Printing Press**
C 27/170–A, Jagatganj
Varanasi - 221 002.

म. म. सुधाकरद्विवेदि-ग्रन्थमाला
[ पञ्चमं पुष्पम् ]

# सङ्ग्रहशिरोमणिः

## हिन्दी-व्याख्यया समलङ्कृतः

[ द्वितीयो भागः ]

कुलपतेः डॉ० मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः

हिन्दीव्याख्याकारः सम्पादकश्च
**आचार्यश्रीकमलाकान्तशुक्लः**
सम्मानिताचार्यः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी




**वाराणस्याम्**

२०५३ तमे वैक्रमाब्दे  १९१८ तमे शकाब्दे  १९९७ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः –
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।



प्रकाशकः –
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी – २२१ ००२



प्राप्तिस्थानम् –
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी – २२१ ००२



**प्रथमं संस्करणम्** – १००० प्रतिरूपाणि
मूल्यम् – १८०.०० रूप्यकाणि



मुद्रकः –
**आनन्द प्रिंटिंग प्रेस**
सी २७/१७०-ए, जगतगंज
वाराणसी - २२१ ००२

# प्रस्तावना

विश्वविद्यालयस्य म० म० श्रीसुधाकरद्विवेदिग्रन्थमालायां गते महाशिवरात्रिदिने तत्रभवताम् आचार्याणां **श्रीकमलाकान्तशुक्ल-महोदयानां** सम्पादकत्वे **'सङ्ग्रहशिरोमणेः'** प्रथमो भागः प्रकाशितः। सम्प्रत्यस्यैव ग्रन्थस्य हिन्दीटीकासहितो द्वितीयो भागः प्रकाश्यत इति संस्कृतज्ञानां कृते हर्षप्रकर्षस्य विषयः। अस्य द्वितीयभागस्य प्रकाशनेन ग्रन्थोऽप्ययं परिपूर्णतां प्राप्यत इति। ग्रन्थस्यायं द्वितीयः खण्डो ज्यौतिषशास्त्रस्य सर्वाङ्गपूर्णतां प्रकाशयति। वस्तुतोऽस्या विद्याया वेदाङ्गत्वं सर्वैः समादृतम्। तत्र च वैदिकानां कर्मणां कालनिर्धारकता निमित्तम्। ग्रन्थेऽस्मिन् ये विषया विस्तरेण विवेचितास्तेषामवलोक-नेनेदं सुस्पष्टमभिज्ञायते यदस्य प्रवृत्तिर्लोकस्य महते कल्याणायेति। शिरोमणिकारेणास्य शास्त्रस्य महत्तां प्रदर्शयताऽस्य कालविधान-शास्त्रत्वं सर्वेषु वेदाङ्गशास्त्रेषु मूर्द्धन्यत्वञ्च प्रतिपादितम्। महाप्रभोः कालस्य महिमाऽनेन प्रतिष्ठापितः। सोऽयं कालः शुभाशुभरूपो द्विधा। शास्त्रमिदं शुभमुहूर्त्तनिर्देशपूर्वकं कालस्य शुभं स्वरूपं निर्दिशति, अत्र च केवलं लोककल्याणमेव प्रवृत्तिनिमित्तत्वेन विराजते।

ग्रन्थोऽयं सङ्ग्रहो विशिष्टानां दैवज्ञानां तत्त्वज्ञानस्य। ग्रन्थकारः प्रस्तावनायां स्पष्टं स्वकीयं विनयं गुणग्राहकताञ्च एभिः शब्दैरभिव्यनक्ति—

**'मूलग्रन्थान्निबन्धाच्च वाक्यान्याहृत्य यत्नतः।**
**बालबोधाय कुर्वेऽहं सत्सङ्ग्रहशिरोमणिम्'॥**

ग्रन्थेऽस्मिन् विवेचिता विषया अस्य पूर्णतां परिचाययन्ति। सूक्ष्मतमानां जीवनोपयोगिनां कर्मणां कालविषये विस्तरेणात्र चिन्तितम्।गृहप्रवेश-वास्तुपूजा-देवप्रतिष्ठा-मुहूर्त्तनिर्णय-मलमासनिर्णय-सर्वतोभद्रविचार-शकुनविचार-तिथिविचार-फलवर्णनपूर्वकमुल्का-परिवेष-इन्द्रायुध-गन्धर्वनगर-प्रतिसूर्यादिलक्षण-व्रतनियम-ग्रहणनिर्णय-अशौच-निर्णयप्रभृतीनां विभिन्नानां क्रियाकलापानामशुभनिवृत्तिपूर्वकं शुभफलसंसिद्धये विस्तरेण मार्गदर्शनं ग्रन्थकारेण विहितम्। ग्रन्थेऽस्मिन् प्रतिस्थानं प्रतिविषयं च ग्रन्थकारस्य विविधेषु शास्त्रेषु पाण्डित्यं विशेषतश्च धर्मशास्त्रवैदुष्यं स्पष्टतयाऽवलोकयितुं शक्यते। अत्र च धर्मशास्त्र-ज्यौतिष-शास्त्रयोः शाश्वतः सम्बन्धः प्रत्यक्षीकर्त्तुं शक्यते।

संस्कृतविदुषां मनीषिणाञ्च साहित्यसाधनायाः केवलं विश्वस्य कल्याणमेवोद्देश्यमासीत्, अत एवायं विशालतमो वाङ्मयः सार्वदेशिकं सार्वकालिकञ्च गरिमाणं भजते। निश्चप्रचमनेन ग्रन्थेन ज्यौतिष-शास्त्रस्य माहात्म्यं संवर्द्धितम्, प्रतिपादिता च ज्यौतिषशास्त्रस्य लोकोपकारकता।

ग्रन्थोऽयं महाविदुषा जयपुरमहाराजसमादृतेन पण्डित-**श्रीसरयूप्रसादद्विवेदिना** सङ्गृहीत इति विभिन्नासु पुष्पिकासु समुल्लिखि-तम्। सोऽयं द्विवेदिपरिवारोऽयोध्यानिकटस्थपण्डितपुरीवास्तव्यो राजस्थानवर्ति-जयपुरराज्यस्य महाराज्ञा ससम्मानं जयपुरे समानीतः, विशेषतो ज्यौतिषशास्त्रे तन्त्रविद्यायाञ्च निष्णाता आसीदस्य परिवारस्य परम्परा। जयपुरराज्याधिपतिभिरेते विशेषतः सुसम्मानिताः। तेषां विद्यायाः साधनायाश्चानेकविधाः कथाः सम्प्रत्यपि जयपुरे सुप्रसिद्धाः संस्कृतविद्याया गौरवं संपोषयन्ति। महामहोपाध्याय-**श्रीदुर्गाप्रसादद्विवेदि-श्रीगिरिजाप्रसादद्विवेदि**सदृशा विद्वांसोऽस्मिन् परिवारे समभवन्।

वर्तमानेऽपि काले राष्ट्रपतिसम्मानिता महाराजसंस्कृत-कालेजस्य प्राक्तनाः प्राचार्याः **श्रीगङ्गाधरद्विवेदिनो** जयपुरस्य ब्रह्मपुरीनामिकायां वसतौ सरस्वतिपीठरूपे सुप्रसिद्धे पैतृके आवासे विराजन्ते।

स चायं शिरोमणिः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सम्मानितैराचार्यैः पण्डितप्रवर**श्रीकमलाकान्तशुक्ल**महोदयैर्हिन्दीटीकया समलङ्कृत्य सुसम्पादितः। आचार्यैः श्रीशुक्लमहोदयैर्देवरियास्थ-राधाकृष्णसंस्कृत-महाविद्यालयस्य प्राचार्यत्वं सुशोभितं प्रायशो विंशतिवर्षेभ्यः। विश्वविद्यालयस्यास्य ज्यौतिषविभागं संसेवमानाः सम्प्रत्यपि सम्मानितप्राध्यापकत्वेन स्वकीयेनाध्यापनकौशलेन, अनुसन्धानविभवेन च विशिष्टान् पण्डितान् स्नातकांश्च मार्गदर्शनाध्यापनादिभिः समुपकुर्वाणा विश्वविद्यालयस्यास्य गौरवं वर्द्धयन्ति। एते ज्यौतिषशास्त्रस्य स्कन्धत्रस्य विशेषज्ञा महामहोपाध्याय-**श्रीसुधाकरद्विवेदि**प्रभृतीनां विदुषां शिष्या एकत्र ज्यौतिष-धर्मशास्त्रादीनां विशेषज्ञत्वेन, अपरत्र लेखने सम्पादने भाषणे च समानरूपां दक्षतां साधनाबलेन च प्रसिद्धिमादधाना मनीषिसमुदायस्य सम्भ्रान्तानां नागरिकानाञ्च श्रद्धाभाजनतां भजन्ते। इदं हि प्रकाशनं तेषां साधनाया एव प्रतिफलम्।

अस्याः साधनायाः सफलतायै मनीषिप्रवर**श्रीकमलाकान्तशुक्ल**महोदयं प्रति स्वकीयामधमर्णताम् अभिनन्दनाञ्जलिं प्रकाशनाधिकारिणे **डॉ० हरिश्चन्द्रमणित्रिपाठिने** 'आनन्द'– मुद्रणालयव्यवस्थापकाय **श्रीदिवाकरत्रिपाठिने** च धन्यवादान् समर्पयन् प्रकाशनमिदं भगवते विश्वेश्वराय समर्पयामि।

**वाराणसी**
वसन्तपञ्चमी,
वि. सं. २०५३

**मण्डनमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# मङ्गलाभिशंसनम्

अशेषमाङ्गल्यप्रसूनसम्पदं विधूतजन्मार्जितपापसञ्चयम्।
सन्दर्शनोत्पादितविघ्नकाननं नमामि तं साम्बशिवाङ्कलालितम्॥ १॥

सर्वैश्वर्यमयं देवं भुक्तिमुक्तिकरे स्थितम्।
काशीविश्वेश्वरं वन्दे करुणावरुणालयम्॥ २॥

नारायणस्तरङ्गैः स्नपितकुलवधूवासवेश्मानवद्यं
वीचीव्रातैः सरय्वाः कवलितकलुषं श्रोत्रियक्षेत्रमेकम्।
मीमांसान्यायशास्त्राध्ययनपटुतरैर्भूसुरैर्भूषितक्ष्मं
वेदाध्ययनैर्वटूनां मुखरितवलयं मण्डलं देववर्या॥ ३॥

तस्मिन्नेवावनद्यः श्रुतसततरतैः पण्डितैर्मण्डितौका
गण्डक्याः क्षालितक्ष्मः कृतमठमठियाशुक्लनामा चकास्ति।
ग्रामो दूराध्येतैरधिकृतवसतिः शास्त्रचिन्ताभिलाषै-
र्यत्र स्यातां द्विसन्ध्यं हिमगिरिशिखरं प्रेक्ष्यते कौतुकेन॥ ४॥

गर्गस्यर्षेस्तपोभिर्व्यपगतवृजिने मामखोराख्यधाम्नि
विप्रा आप्ताः समस्ता जपनियमपरा ब्रह्मसाक्षादकुर्वन्।
गौरीनाथो हि तेषां पशुपतिनगरीतीर्थयात्राप्रसङ्गाद्
आगत्यास्मिन्न्यवासीत् सवनसमुचिते गर्गवंशावतंसः॥ ५॥

भार्यायां धर्मवत्यां शिवजनि सुषुवे सूनुरत्नं बुधोऽसौ
तेजस्वी च स्वभावात् प्रथितशुभकथोऽभून्नकच्छेदशुक्लः।
लाक्षायां सोऽपि पत्न्यां चतुरुदधिसमानम्बिकादत्तमुख्यान्
सूनून् श्रीसर्वदेवं सहृदयहृदयं सर्वराजस्य सूते॥ ६॥

तुर्यं सूनुञ्च धाम्ना कृतधवलकुलं शेखरं चन्द्रपूर्वं
वेदान्तन्यायविद्यामगमदतितरां शब्दविद्यावनद्ये।
मिश्रोपाह्वात् कुमारात् प्रथमशिवपदाच्चान्यशास्त्रं सचन्द्रः
सूनुं स्त्रीन्मङ्गलायामानयदमलामेककन्याञ्च धन्याम् ॥७॥
दैवज्ञः प्रथमः सुतः स कमलाकान्तोऽस्य सम्पादको
नीतिज्ञो हि जनार्दनः कुलमणिर्लोकप्रियश्चान्तिमः।
विद्यावारिधिसत्सभापतिपदाद् विद्यालवस्याप्तये
काशीं संश्रितवान् प्रसादचरमो यः कालिकामध्यमः॥८॥
विद्यावैभवसम्पन्नो विद्यावारिधिसन्निभः।
विद्यानिवासमिश्रो वै पावनानाञ्च पावनः॥९॥
मार्कण्डेयसमाकीर्तिर्जायते भुवि ते श्रुता।
त्वत्तः प्राप्तलवज्ञोऽहं टीकां कर्त्तुं समुद्यतः॥१०॥
संहितार्णवनिःस्यूतनवनीतसमस्य च।
भागस्यास्य द्वितीयस्य सत्सङ्ग्रहशिरोमणेः॥११॥
बालानां सुखबोधाय विदुषां रञ्जनाय वै।
सुषमां सुषमोपेतां टीकां कर्त्तुं समुद्यतः॥१२॥
कमलाकान्तशुक्लोऽहं प्रार्थयामि मुहुर्मुहुः।
आद्यन्तपठनेनैव रहस्यं समुपपद्यते॥१३॥
माघे मासि सिते पक्षे पञ्चम्यां भूमिवासरे।
वैक्रमीये च वर्षेऽस्मिन् पञ्चाशन्नखसम्मिते॥१४॥
कीर्तिः समर्पिताऽङ्घ्रौ ते विश्वनाथदयार्णव।
शान्तिं मे शाश्वतीं यच्छ प्रार्थयामि पुनः पुनः॥१५॥



# प्राक्कथन

यद्यपि प्रथम भाग में ग्रन्थविषयक चर्चा की गई है, किन्तु प्रथम से पृथक् द्वितीय भाग के मुद्रण से द्वितीय भाग विषयक परिचर्चा की ी आकांक्षा उत्पन्न होने से संक्षिप्त विवरण प्रस्तुत है।

स्कन्धत्रयात्मक महार्णव ज्यौतिषशास्त्र का परिचय आवश्यक प्रतीत होने से प्रथम स्कन्धत्रयों का उद्‌गमाङ्गभूत गणितार्णव सिद्धान्त (तन्त्र) का संक्षिप्त परिचय, गणित स्कन्ध से ब्रह्माण्डोदरवर्ती सृष्ट्यादि प्रलयान्त काल का दिग्देशकालोपयोगि लोकोपकारक अतीत, वर्तमान, भविष्यत्कालिक यथावश्यक तिथि, वार, नक्षत्र, योग, करण, दिनमान, द्वादशलग्न, ग्रहस्पष्ट, दृग्गोचरीय ग्रहस्पष्ट, गुरु-शुक्रादि का उदयास्त, बाल-वृद्धत्व, सूर्य-चन्द्र का ग्रहण, बुध-शुक्र कृत सूर्य-बिम्ब विकृति (धब्बा, म्लान चिह्नविशेष) प्रभृति धर्मशास्त्रोपयोगी पदार्थों का समवायसमवेत वस्तुनिष्ठ है, यथा–

**त्रुट्याद्रिप्रलयान्तकालकलनामानप्रभेदः क्रमात्**

**चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः।**

**भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते**

**सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धः बुधैः॥**

(सिद्धान्तशिरो० अध्यायः १, श्लोकः ६)

द्वितीय जातक (होरा) स्कन्ध, यह स्कन्ध जन्मकुण्डली के आधार पर प्राणिमात्र के अतीत, वर्तमान व आगामी जन्मान्तरों के शुभाशुभ लक्षणों का विस्तृत प्रतिपादन, तात्कालिक प्रश्नलग्न से भी कर्मों

की सिद्धि, असिद्धि का ज्ञान एवं तात्कालिक निमित्त, शकुनों के द्वारा (अंगस्फुरण, तिलक, मशक) शुभाशुभ कथनादि बहुविषयसमवेत बृहदार्णव के रूप में जाना जाता है। यथा –

**यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पंक्तिम्।**

**व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव॥**

अन्य –

**अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्य कस्यचित्।**

**होरा-केन्द्र-त्रिकोणेभ्यस्तस्य विन्द्याच्छुभाशुभम्॥**

यहाँ होरा लक्षण सम्बन्धी वराह के वचन –

होराशास्त्रेऽपि च राशि-होरा-द्रेष्काण-नवांशक-द्वादशभाग-त्रिंशद्भाग-बलाबलपरिग्रहो ग्रहाणां दिक्-स्थान-काल-चेष्टाभिरनेक-प्रकार-बलनिर्धारण-प्रकृति-धातु-द्रव्य-जाति-चेष्टादिपरिग्रहो निषेक-जन्मकाल-विस्मापन-प्रत्ययादेश-सद्योमरणायुर्दाय-दशान्तर्दशाष्टकवर्ग-राजयोग-चन्द्रयोग-द्विग्रहादियोगानां नाभसादीनां च योगानां फलान्याश्रय-भावावलोकन-निर्याण-गत्यनूकानि तत्कालप्रश्नशुभाशुभनिमित्तानि विवाहादीनां च कर्मणां करणम्।

(बृहत्संहिता, सांवत्सरसूत्रा० १७)

आकाश, वायु, जल, भूमि व अग्नि ब्रह्माण्डोदरवर्त्ती स्थावर, जंगम, स्वेदज, उद्भिज, अण्डज, पिण्डज प्रभृति प्राणिमात्र के चेष्टा, आकार-प्रकार, शब्दादि, प्रकृति, विकृति, आकृति, देवप्रतिमा की चेष्टा, अंगभंग के द्वारा जगत् के शुभाशुभ इत्यादि बहुविषयविशिष्टसमवेत संहिता-स्कन्ध के अन्तर्गत अनेक ऋषिकल्प आचार्यों के वचनों का संगृहीत कुसुमपरागवत् यह ग्रन्थ है। संहिता-स्कन्ध का परिचय आचार्य

वराहमिहिर के अनुसार निम्नवत् है–

दिनकरादीनां ग्रहाणां चारास्तेषु च तेषां प्रकृतिविकृतिप्रमाण-वर्णकिरणद्युतिसंस्थानास्तमनोदयमार्गमार्गान्तरवक्रानुवक्रग्रहसमागमचारा-दिभिः फलानि, नक्षत्रकूर्मविभागेन देशेष्वगस्त्यचारः, सप्तर्षिचारः, ग्रहभक्तयो नक्षत्रव्यूहग्रहशृङ्गाटकग्रहयुद्धग्रहसमागमग्रहवर्षफलगर्भ-लक्षणरोहिणीस्वात्याषाढीयोगाः सद्योवर्षकुसुमलतापरिधिपरिवेष-परिघपवनोपत्यकादिग्दाहक्षितिचलनसन्ध्यारागगन्धर्वनगररजोनिर्घातार्घ-काण्डसस्यजन्येन्द्रध्वजेन्द्रचापवास्तुविद्याङ्गविद्यावायसविद्यान्तरचक्र-मृगचक्रश्वचक्रवातचक्रप्रासादलक्षणप्रतिमालक्षणप्रतिष्ठापनवृक्षायुर्वेदो-दगार्गलनीराजनखञ्जनोल्कोत्पातशान्तिमयूरचित्रकधृतकम्बलखड्गपट्टकृक-वाकुकूर्मगोऽश्वेभपुरुषस्त्रीलक्षणान्यन्तःपुरचिन्ता-पिटकलक्षणोपानच्छेद-वस्त्रच्छेदचामरदण्डशयनाऽऽसनलक्षणरत्नपरीक्षादीपलक्षणं दन्तकाष्ठाद्या-श्रितानि शुभाशुभानि निमित्तानि सामान्यानि च जगतः प्रतिपुरुषं पार्थिवे च प्रतिक्षणमनन्यकर्माभियुक्तेन दैवज्ञेन चिन्तयितव्यानि। ............ तस्याश्चाकारवर्णस्नेहप्रमाणादिग्रहर्क्षोपघातादिभिः फलानि भवन्ति।

( बृहत्संहिता, सांवत्सरसूत्राध्यायः २१)

प्रस्तुत इस द्वितीय भाग में २१-२२-२३ व २४वीं प्रभा है।

२१ वीं प्रभा में गृहप्रवेश सम्बन्धी मुहूर्त्त, प्रवेश लग्न सम्बन्धी लग्न-जातक का विचार किया गया है।

२२वीं प्रभा देवप्रतिमा, जलाशय, आरामादि प्रतिष्ठा, संस्कार मुहूर्त्त से समलंकृत है।

२३वीं प्रभा में पञ्चाङ्गशुद्धि के बिना भी शिवघटिका मुहूर्त्त के द्वारा प्रारम्भ कार्य की सफलता हेतु प्रतिज्ञा की गई है, जिसके

सोदाहरण आनयन की व्यवस्था की गई है तथा काल, ऋतु, पशु-पक्षी व मानव के अङ्गस्पर्श, काक, श्वान, गो, शृगाली के शब्द, चेष्टा, अरण्य, ग्राम पशु के शब्द, ग्राम-प्रवेश, पक्षि-प्रसव, निलय प्रभृति के द्वारा जगत् के शुभाशुभ लक्षणों से समवेत यह प्रभा लोक-चामत्कारिक फलों की सूचक है।

तथा २४वीं प्रभा में धर्मसिन्धु प्रभृति अनेक ग्रन्थों के आधार पर तिथिलक्षणपूर्वक तिथियों के द्वारा व्रत, पुण्य पर्वादिकों का विस्तृत विवरण है व संक्रान्तिलक्षण, फल, ग्रहणकालवेध, पुण्य मलमास, क्षयमास का विवरण, विहिताविहित विवेक, आभ्युदयिक श्राद्ध के काल का निर्णय है। मिताक्षरा के त्र्यम्बकीय निर्णय से सूतक-मृतक-अशौच, सन्निपात प्रभृति व्यवस्था, जलाशय, ठोस व द्रव पदार्थ, वस्त्रों के अपवित्र वस्तु से संस्पृष्टजन्य दोष के परिमार्जन की विधि से परिपूर्ण यह प्रभा प्रकाशित है।

॥ इति साम्बशिवार्पणमस्त्विति ॥

**वाराणसी**
वसन्तपञ्चमी,
वि० सं० २०५३
(११.२.१९९७ ख्रैस्ताब्द)

**कमलाकान्त शुक्ल**
सम्मानिताचार्य
सम्पूर्णानन्द संस्कृत विश्वविद्यालय
वाराणसी

# विषयानुक्रमणिका

## एकविंशी प्रभाया:



## द्वाविंशी प्रभाया:

## त्रयोविंशी प्रभायाः

## चतुर्विंशी प्रभायाः

**परिशिष्टम् –**

# अथैकविंशी प्रभा

## ।। अथ गृहप्रवेशप्रकरणम् ।।

तथा च भोजराजः –

**उदगयने पूर्वाह्णे पूजितगृहदैवतो विकीर्णबलिः।**

**यात्राया विनिवृत्तौ विशेत्पुरं नवमगारं वा ।।१।।**

गृहप्रवेश –

वास्तुविधि से वास्तु देवता की पूजा-बलि आदि यथोचित कार्य सम्पादन कर यात्रानिवृत्ति से राजा व गृहस्वामी उत्तरायण व पूर्वाह्ण में नूतन गृह में प्रवेश करें ।।१।।

वसिष्ठोऽपि –

**अथ प्रवेशो नवसद्मनश्च सौम्यायने जीवसिते बलाढ्ये।**

**नवप्रवेशे त्वथ कालशुद्धिर्न द्वन्द्वसौपूर्विकयोः कदाचित् ।।२।।**

नूतन भवन में प्रवेश सौम्यायन, जीव-शुक्र के उदय-बल आदि काल-शुद्धि में शुभ है; किन्तु द्वन्द्वाभय व सपूर्व प्रवेश के लिए कालशुद्धि आवश्यक नहीं है ।।२।।

**अपूर्वसंज्ञः प्रथमः प्रवेशो यात्रावसाने च सपूर्वसंज्ञः।**

**द्वन्द्वाभयस्त्वग्निभयादिजातः प्रवेश एवं त्रिविधः प्रदिष्टः ।।३।।**

प्रथम प्रवेश अपूर्व, यात्रावसान का प्रवेश सपूर्व, अग्निभयादि से नष्ट पुनः नवनिर्मित भवन-प्रवेश द्वन्द्वाभय प्रवेश होता है, इस प्रकार अपूर्व-सपूर्व-द्वन्द्वाभय ये तीन प्रकार का प्रवेश होता है ।।३।।

अथ प्रवेशमासानाह वसिष्ठश्चान्द्रमासपरत्वेन –

**माघेऽर्थलाभः प्रथमप्रवेशे पुत्रार्थलाभः खलु फाल्गुने च।**
**चैत्रेऽर्थहानिर्धनधान्यलाभो, वैशाखमासे पशुपुत्रलाभः॥४॥**
**ज्येष्ठेषु मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च।**
**शुक्ले च पक्षे सुतरां विवृद्ध्यै कृष्णे च यावद्दशमी च तावत्॥५॥**

प्रथम प्रवेश माघ में अर्थलाभ, फाल्गुन में पुत्र-अर्थ का लाभ, चैत्र में अर्थहानि, वैशाख में धन-धान्य लाभ, ज्येष्ठ में पशु-पुत्र लाभ, आषाढादि मासों में हानिप्रद व शत्रुभयकारक है, शुक्ल पक्ष में प्रवेश अतिशय शुभकारक, कृष्ण पक्ष में दशमी तक शुभ होता है॥४-५॥

सौरमासपरत्वेनाह गुरुः –

**कुलीरकन्यकाकुम्भे दिनेशे न विशेद्गृहम्।**
**ग्रामं वा नगरं वापि पत्तनं वा सुराधिपः॥६॥**

ज्योतिःप्रकाशे विशेषः –

**गृहारम्भोदितैर्मासैर्धिष्णवारैर्विशेद् गृहम्।**
**विशेत्सौम्यायने हर्म्यं तृणागारं तु सर्वदा॥७॥**

प्रवेश में सौरमास –

कर्क-कन्या-कुम्भ के सूर्य में गृह-ग्राम-नगर-सामान्य नगरी या देवालय में प्रवेश नहीं करना चाहिए, कुम्भ का सूर्य चैत्रपरक निषिद्ध है, फाल्गुन का नहीं। नूतन गृह में प्रवेश उत्तरायण में, गृहारम्भ-प्रतिपादित मास-नक्षत्र-तिथि-दिन में शुभ है; किन्तु तृण गृह में सर्वदा प्रवेश उचित है॥७॥

प्रवेशनक्षत्राण्याह वसिष्ठः–

**चित्रोत्तराधातृशशाङ्कमित्रवस्वन्तवारीश्वरभेषु नूनम्।**
**आयुर्धनारोग्यसुपुत्रपौत्रसत्कीर्तिदः स्यात्त्रिविधः प्रवेशः॥८॥**

प्रवेश में शुभ नक्षत्र–

चित्रा, तीनों उत्तरा, रोहिणी, मृगशिरा, अनुराधा, धनिष्ठा, रेवती, शतभिषा इनमें तीनों प्रवेश से आयुष्य, धन, आरोग्य, सुपुत्र, पौत्र व यश की प्राप्ति होती है, यह सामान्य वचन है ॥८॥

निषिद्धनक्षत्राण्याह वसिष्ठः–

**अर्कानिलेयादितिदस्रविष्णुऋक्षे प्रविष्टं नवमन्दिरं यत्।**
**अब्दत्रयात्तत्परहस्तयातं शेषेषु धिष्णेषु च मृत्युदं स्यात्॥९॥**

हस्त, स्वाती, पुनर्वसु, अश्विनी, श्रवण नक्षत्रों में नवमन्दिर (नूतन गृह) प्रवेश से तीन वर्ष के अन्दर गृह दूसरे के हस्तगत हो जाता है, इससे और विहित से अतिरिक्त शेष नक्षत्रों में मृत्युभय होता है ॥९॥

जीर्णगृहप्रवेशविषये चोक्तं ज्योतिःप्रकाशे–

**प्रवेशो नूतने हर्म्ये ध्रुवैर्मैत्रैः सुखाप्तये।**
**पुष्यस्वातीयुतैस्तैस्तु जीर्णे स्याद्वासवद्वये॥१०॥**

ध्रुव व मैत्र संज्ञक नक्षत्रों में नूतन गृह में प्रवेश शुभ है और इन नक्षत्रों के साथ पुष्य, स्वाती, धनिष्ठा, शतभिषा में भी जीर्ण गृह-प्रवेश शुभ होता है ॥१०॥

तथा च दैवज्ञवल्लभे–

**चित्रानुराधामृगपौष्णपुष्यस्वातीश्रविष्ठाध्रुववारुणेषु।**
**वारेष्वसूर्य्यक्षितिजेष्वरिक्ततिथौ प्रशस्तो भवनप्रवेशः॥११॥**

अन्य मत से–

चित्रा, अनुराधा, मृगशिरा, रेवती, पुष्य, स्वाती, श्रवण, धनिष्ठा,

ध्रुवगण, शतभिषा नक्षत्रों में सूर्य, मंगल दिन, रिक्ता तिथि छोड़कर भवन में प्रवेश शुभ होता है ।।११।।

प्रवेशे वारफलमाह वसिष्ठः –

**दह्यते प्रविशतां च मन्दिरं वह्निना नियतमेव वह्निभे।**

**ब्रध्नभूमिसुतवासरे तथा शीतरश्मिदिवसे हि वृद्धिदम् ॥१२॥**

कृत्तिका नक्षत्र, रवि, भौम दिन में प्रवेश से अग्नि से गृह भस्म हो जाता है; किन्तु प्रवेश में चन्द्रमा का दिन (सोमवार) वृद्धिकारक है ।।१२।।

**चद्रजार्यसितवासरेषु च श्रीकरं सुखमहार्थलाभदम्।**

**सूर्यसूनुदिवसे स्थिरप्रदं किन्तु चौरभयमत्र विद्यते॥१३॥**

बुध, गुरु, शुक्र के दिनों में प्रवेश से लक्ष्मी-प्राप्ति व महान् अर्थ की सिद्धि होती है, शनिवार का प्रवेश स्थायित्व देता है; किन्तु चौरभय-कारक होता है ।।१३।।

प्रवेशे निषिद्धानाह वसिष्ठः –

**न नैधने भेऽपि न चाष्टलग्ने पञ्चेऽष्टकेऽप्यष्टमशुद्धियुक्ते।**

**कार्यः प्रवेशो न चरांशलग्ने शुभेक्षिते वाऽप्यथ संयुते वा॥१४॥**

**रिक्तामामादग्धतिथिं दिनेशभूसूनुषड्वर्गमिनेन्दुदृष्टिम्।**

**क्रूरग्रहाधिष्ठितविद्धभं च विवर्जनीयं त्रिविधप्रवेशे॥१५॥**

प्रवेश में निषिद्ध –

जन्म लग्न व जन्मराशि से अष्टम लग्न तथा अष्टम राशि में प्रवेश नहीं करना चाहिए, प्रवेश-लग्न में पाँच ग्रह बली व चतुर्थ, अष्टम स्थान शुद्ध शुभदृष्ट-शुभयुक्त भी चर लग्न, चर राशि और चर नवांश, रिक्ता, अमा, मास-दग्ध तिथि, सूर्य, मंगल का षड्वर्ग, सूर्य-चन्द्र की दृष्टि, क्रूरग्रह वेध नक्षत्र तीनों प्रकार के प्रवेश में निषिद्ध हैं, शुभदृष्ट, शुभयुक्त स्थिर लग्न तथा द्विस्वभाव व शुभ दिन प्रवेश में शुभ हैं ।। १४-१५।।

**यः क्षीणचन्द्रोऽन्त्यषडष्टसंस्थः पापेक्षितः पापयुतोऽथवा स्यात् ।**
**कर्त्तुः स्त्रियं हन्ति स वत्सरेण त्रिवर्षतस्सौम्यनिरीक्षितश्च ॥१६॥**

६।८।१२ में पापदृष्ट, पाययुक्त क्षीण चन्द्रमा में प्रवेश होने से एक वर्ष के भीतर गृहस्वामी की स्त्री की मृत्यु होती है और यदि वह चन्द्रमा शुभदृष्ट हो तो तीन वर्ष में वही पूर्व फल होगा ॥१६॥

स्थानशुद्धिमाह गुरुः –

**सप्तमं शुद्धमुद्वाहे यात्रायामष्टमं तथा ।**
**दशमं च गृहारम्भे चतुर्थं सन्निवेशने ॥१७॥**

विशेष –

विवाह लग्न में सप्तम स्थान, यात्रा में अष्टम, गृहारम्भ में दशम व गृहप्रवेश में चतुर्थ स्थान की शुद्धि आवश्यक है ॥१७॥

प्रवेशलग्नान्याह वसिष्ठः –

**कर्त्तुर्विलग्नादथ जन्मराशेर्लग्नस्थितो राशिरिति प्रदिष्टः ।**
**निर्व्याधिदारिद्र्ययशस्कराश्च सुहृत्सुतघ्नो रिपुनाशनश्च ॥**
**कलत्रहन्ता निधनप्रदश्च रोगप्रदः सिद्धिकरोऽर्थदश्च ।**
**क्रमाच्च वैरामयदः क्रमेण सदैव नूनं त्रिविधप्रवेशे ॥१९॥**

अन्य विधान –

कर्ता के जन्म राशि व जन्म लग्न से प्रथमादि राशि व लग्न प्रवेश लग्न में निम्न फल देते हैं –

१. आरोग्य, २. दारिद्र्य, ३. यश, ४. मित्रसुख, ५. पुत्रकष्ट, ६. रिपुनाश, ७. कुलनाश, ८. मृत्यु, ९. रोगभय, १०. सिद्धि, ११. अर्थलाभ, १२. वैर व रोगभय होता है ॥१८-१९॥

नारदोऽपि–

**कर्त्तुर्जन्मभलग्ने वा ताभ्यामुपचयेऽपि[1] वा।**

**प्रवेशलग्ने स्याद् वृद्धिरन्यभे शोकनिःस्वता ॥ २०॥**

कर्ता का जन्म-लग्न व जन्म-राशि या उपचय राशि व लग्न यदि प्रवेश लग्न में हो तो वृद्धि होती है, अन्य राशियों में शोक-भय व निर्धनता आती है ॥२०॥

अथ लग्नशुद्धिमाह वसिष्ठः –

**केन्द्रत्रिकोणायधनत्रिसंस्थैः शुभैस्त्रिषष्ठायगतैः खलैश्च।**

**लग्नान्त्यषष्ठाष्टमवर्जितेन चन्द्रेण लक्ष्मीनिलयः प्रवेशः ॥ २१॥**

प्रवेश लग्न से १।४।७।१०।५।९।२।११।३ स्थानों में शुभग्रह, ३।६।११ स्थानों में पापग्रह व १।६।८।१२ से भिन्न स्थानों के चन्द्रमा में प्रवेश से गृह में लक्ष्मी का निवास होता है ॥२१॥

**प्रवेशलग्नान्निधनस्थितो यः क्रूरग्रहः क्रूरगृहे यदि स्यात्।**

**प्रवेशकर्त्तारमथ त्रिवर्षाद्धन्त्यष्टवर्षैः शुभराशिगश्चेत् ॥ २२॥**

प्रवेश लग्न से अष्टम स्थान में क्रूरग्रह की राशि में क्रूरग्रह हो, तो प्रवेशकर्ता को तीन वर्ष के अन्दर मार डालता है व शुभ राशि में हो तो आठ वर्षों में मारता है ॥२२॥

नारदोऽपि–

**स्थिरलग्ने स्थिरे राशौ नैधने शुद्धिसंयुते।**

**त्रिकोणकेन्द्रस्वत्र्यायसौम्यैस्त्र्यायारिगैः परैः ॥ २३॥**

---

१. तृतीयषडैकादशा उपचयाः।

**लग्नान्त्यार्यष्टमस्थानवर्जितेन हिमांशुना।**

**गृहप्रवेशः शुभदो लग्ने केन्द्रे गुरौ भृगौ॥२४॥**

स्थिर लग्न व स्थिर राशि; अष्टम स्थान शुद्ध, त्रिकोण, केन्द्र, द्वितीय, तृतीय व एकादश में शुभग्रह, ३।६।११ में पापग्रह, १।६।८।१२ से भिन्न स्थान में चन्द्रमा तथा लग्न में गुरु व केन्द्र में शुक्र प्रवेश में शुभ होते हैं (यह श्लोक भी २१-२२ के अनुरूप ही है)॥ २३-२४॥

राजमार्तण्डे विशेषः –

**निन्दिता अपि शुभांशसमेतास्तौलिमेषमकराः सकुलीराः।**

**कर्त्तृभोपचयगाश्च विलग्ने राशयः शुभफलाय भवन्ति॥२५॥**

निषिद्ध भी मेष-कर्क-तुला राशि में यदि शुभांश (शुभग्रहों का अंश) व कर्ता के लग्न-राशि से उपचय राशि, लग्न हों तो ये प्रवेश लग्न में शुभफल देते हैं॥२५॥

अत्र वास्तुपूजामाह नारदः –

**विधाय पूर्वदिवसे वास्तुपूजाबलिक्रियाम्।**

**ततः प्रवेशः कर्त्तव्यः सततं हि शुभार्थिना॥२६॥**

शुभ चाहने वाला प्राणी प्रवेश के पूर्व वास्तु-पूजा व बलि क्रिया पूर्ण करके यदि प्रवेश करता है, तो जीवन सुखी रहता है॥२६॥

वसिष्ठोऽपि –

**वास्तुपूजामकृत्वा यः प्रविशेन्नवमन्दिरे।**

**रोगान्नानाविधान्क्लेशानश्नुते सर्वसङ्कटम्॥२७॥**

वास्तु-पूजा के विना नूतन गृह का प्रवेश अनेकविध रोग, क्लेश, कष्ट उत्पन्न करता रहता है॥२७॥

**निर्माणे मन्दिराणां च प्रवेशेऽत्र विधेऽपि वा।**

**वास्तुपूजा तु कर्तव्या सर्वदा शुभकाङ्क्षिणा॥२८॥**

सर्वदा शुभ चाहने वाले व्यक्ति को निर्माण व प्रवेश दोनों में यथाविधि विहित वास्तु-पूजा करनी चाहिए ॥२८॥

वास्तुपूजामुहूर्त्तम् ऋक्षोच्चये –

**चित्रा शतभिषा स्वाती हस्तः पुष्यः पुनर्वसुः।**

**रोहिणी रेवती मूलं श्रवणोत्तरफाल्गुनी॥२९॥**

**धनिष्ठा चोत्तराषाढा तथा भाद्रोत्तरान्विता।**

**अश्विनी मृगशीर्षं च अनुराधा तथैव च॥३०॥**

**वास्तुपूजनमेतेषु नक्षत्रेषु करोति यः।**

**स प्राप्नोति नरो लक्ष्मीमिति प्राह पराशरः॥३१॥**

वास्तु-पूजन-मुहूर्त्त –

चित्रा, शतभिषा, स्वाती, हस्त, पुष्य, पुनर्वसु, रोहिणी, रेवती, मूल, श्रवण, उत्तराफाल्गुनी, धनिष्ठा, उत्तराषाढ़, उत्तराभाद्रपद, अश्विनी, मृगशिरा, अनुराधा नक्षत्रों में जो वास्तुपूजा करता है, वह निश्चित लक्ष्मी प्राप्त करता है, यह पराशर जी कहते हैं ॥२९-३१॥

प्रवेशे विशेषमाह वसिष्ठः –

**कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं**

**विप्रान् पूज्यानग्रतः पूर्णकुम्भम्।**

**हर्म्यं रम्यं तोरणस्रग्वितानैः**

**स्त्रीभिः स्रग्वी गीतमाल्यैर्विशेत्तत्॥३२॥**

प्रवेश में शुक्र पीछे व सूर्य वाम, ब्राह्मणों की पूजा करके आगे पूर्ण मांगलिक कलश, पुष्पमाला धारण कर तोरणादि पुष्पमालाओं से

सुसज्जित मांगलिक गीत-वाद्य करती हुई स्त्रियों के साथ नूतन घर में प्रवेश करना चाहिए ॥३२॥

अथ वामार्कचक्रोद्धारो ग्रन्थान्तरे –

**[1]रन्ध्रात्पुत्राद्धनादायात्पञ्चस्वर्के स्थिते क्रमात्।**

**पूर्वाशादिमुखं गेहं विशेद्वामो भवेद्यतः॥३३॥**

वामार्क ज्ञान –

यदि मुख्य द्वार पूर्व है तो प्रवेश लग्न में अष्टम स्थान से बारहवें स्थान तक सूर्य वाम रहते हैं, दक्षिण द्वार में प्रवेश लग्न के पाँचवें से पाँच स्थान तक, पश्चिम द्वार में द्वितीय से पाँच, उत्तर द्वार में ग्यारह से पाँच स्थान तक सूर्य वाम रहते हैं ॥३३॥

अथ नन्दादिषु प्रवेशमाह गुरुः –

**नन्दायां दक्षिणद्वारं भद्रायां पश्चिमामुखम्।**

**जयायामुत्तरद्वारं पूर्णायां पूर्वतो विशेत्॥३४॥**

नन्दा (१।६।११) तिथियों में दक्षिण द्वार, भद्रा (२।७।१२) में पश्चिम द्वार, जया (३।८।१३) में उत्तर द्वार, पूर्णा (५।१०।१५) में पूर्व द्वार में प्रवेश शुभ होता है ॥३४॥

---

१. रन्ध्रादिति। यस्मिन् लग्ने प्रवेशः कर्तुमिष्यते तस्माद्यदष्टमं स्थानं ततः पञ्चसु स्थानेषु अर्के स्थिते पूर्वाभिमुखगृहप्रवेशकर्तुर्वामः सूर्यः। ततो लग्नाद्यत्पञ्चमस्थानं ततः पञ्चसु स्थानेषु अर्के स्थिते दक्षिणाभिमुखगृहप्रवेशकर्तुर्वामः सूर्यः। एवं लग्नाद्यद्द्वितीयं स्थानं तस्मात्पञ्चसु स्थानेषु स्थिते सूर्ये पश्चिमाभिमुखगृहप्रवेशकर्तुर्वामः सूर्यः। एवं लग्नाद्यदेकादशं स्थानं ततः पञ्चसु स्थानेषु सूर्ये स्थिते उत्तराभिमुखगृहप्रवेशकर्तुर्वामस्सूर्य इत्यर्थः।

अथ गृहप्रवेशे कलशचक्रं ज्योतिःप्रकाशे –

**भूर्वेदपञ्चकं[1] त्रिस्त्रिः प्रवेशे कलशेऽर्कभात्।**

**मृतिर्गतिर्धनं श्रीः स्याद्वैरं शुक् स्थिरता सुखम् ॥ ३५॥**

**कलश-चक्र**

| १ | ४ | ४ | ४ | ४ | ४ | ३ | ३ | नक्षत्र-संख्या (सूर्य-नक्षत्र से) |
|---|---|---|---|---|---|---|---|---|
| मृति | उद्वास | धन | श्री | वैर | शोक | स्थिरता | सुख | फल |

प्रवेश – सूर्य के नक्षत्र से साभिजित् कलश चक्र में शुभाशुभ ज्ञान कर प्रवेश-मुहूर्त्त निश्चय किया जाय ॥ ३५॥

ग्रन्थान्तरे स्पष्टमाह –

**भान्यष्टौ सूर्य्यभात्षष्ठाद् द्वाविंशाच्चैव भानि षट्।**

**कुम्भचक्रे वरिष्ठानि गेहं प्रविशतां नृणाम् ॥ ३६॥**

संक्षेप में सूर्य के नक्षत्र से पाँच के बाद तेरह तक व इक्कीस के बाद सत्ताइस तक प्रवेश चक्र में नक्षत्र शुभ हैं ॥३६॥

कपाटादिं विना प्रवेशाभावमाह वसिष्ठः –

**यद्वास्तुपूजारहितं त्वदत्तबलिं त्वनाक्षन्नगृहं विरूपम्।**

**कपाटहीनं न विशेद्यतस्तत्सर्वापदामालयमेव तत्स्यात् ॥ ३७॥**

वास्तु-पूजा, पूजित देवों की बलि, विना छाजन, कपाट (फाटक) रहित विरूप (शोभाविहीन) गृह में प्रवेश आपत्तिजनक होता है ॥ ३७॥

---

१. वेदाश्चत्वारस्तेषां पञ्चकं पञ्चवारं चत्वारि भानि लेख्यानीत्यर्थः। मृतिरित्यादीन्यष्टौ क्रमेण फलानीति।

अथ गृहे शयनविधिमाह श्रीपतिः –

**गोधान्यदेवाग्निगुरूपरिष्टात् स्वपेन्न चैवापरसौम्यमूर्ध्ना।**

**न चानुवंशं न जलार्द्रपादः श्रेयोऽभिलाषी पुरुषो न नग्नः॥ ३८॥**

गृह में शयन का विधान –

अग्नि, गो, धान्य, देव, गुरु के ऊपरी भाग, पश्चिम, उत्तर शिर, जलार्द्रपाद व परम्परागत व्यवहार-निषिद्ध व्यवस्था में शयन नहीं करना चाहिए ॥ ३८॥

अथ प्रसङ्गात्सूतीगृहप्रवेशमाह वराहः –

**हस्तादित्यशशाङ्कतिष्यपवनप्राजेशमित्रोत्तरा-**

**चित्राश्विश्रवणेषु वृश्चिकघटौ हित्वा विरिक्ते तिथौ।**

**शुक्राचार्यशनैश्चरज्ञशशिनां बारेऽनुकूले विधौ**

**सद्भिर्वेश्मनि सूतिकागृहविधिः क्षेमङ्करः कीर्त्यते॥ ३९॥**

सूती-गृहप्रवेश –

हस्त, पुनर्वसु, मृगशिरा, पुष्य, स्वाती, रोहिणी, अनुराधा, तीनों उत्तरा, चित्रा, अश्विनी, श्रवण नक्षत्रों में वृश्चिक, कुम्भ लग्न व रिक्ता तिथि छोड़ शुक्र, गुरु, बुध, सोम व शनि दिन, अनुकूल चन्द्रमा, शुभग्रहों के लग्न में सूतिका-गृह में प्रवेश शुभ है ॥ ३९॥

**सूतिकासम्भवे काले सद्य एव प्रवेशयेत्।**

**शुभांशे शुभसंदृष्टौ सूतिकागारवेशनम्॥ ४०॥**

सन्निकट प्रसूत समय देखकर शुभांश, शुभदृष्ट, शुभलग्न में आसन्न-प्रसवा सूतिका सूति-गृह में प्रवेश करे ॥ ४०॥

प्रवेश्यगृहस्य शुभस्वरूपमाह वराहः –

**भूरिपुष्पनिकरं सतोरणं तोयपूर्णकलशोपशोभितम् ।**

**धूपगन्धबलिपूजितामरं ब्राह्मणध्वनियुतं विशेद् गृहम् ॥४१॥**

प्रवेश-योग्य गृह का लक्षण –

अत्यधिक पुष्पों से सुसज्जित, तोरण, वन्दनवार, पूर्ण कलशों से सुशोभित सविधि वास्तुपूजा करके ब्राह्मणों के स्वस्तिवाचन मन्त्रों को सुनते हुए नूतन गृह में प्रवेश करना चाहिए ॥४१॥

**द्विवेदिकुलसम्भूतसरयूकृतसङ्ग्रहे ।**

**शिरोमणौ समाप्ताभूत्प्रभेयं चैकविंशका ॥३११॥**

**॥ इति श्रीसरयूप्रसादसङ्गृहीते सङ्ग्रहशिरोमणौ**
**गृहप्रवेशप्रकाशनामैकविंशी प्रभा समाप्ता ॥२१॥**



# अथ द्वाविंशी प्रभा

## ॥ अथ प्रतिष्ठाप्रकरणम् ॥

यदाह श्रीपतिः –

**अथामरस्थापनमुत्तरायणे स्वदेववारर्क्षतिथिक्षणादिषु ।**

**सिते च पक्षे शशितारयोर्बले विधौ विलग्ने च शुभावलोकिते ॥ १ ॥**

उत्तरायण, शुक्लपक्ष, लग्न में शुभदृष्ट चन्द्रमा, बली चन्द्र, तारा तथा जिस देवता की स्थापना करनी हो उसकी तिथि, वार व नक्षत्रों में देवप्रतिष्ठा शुभदायिनी होती है ॥१॥

लक्षणसमुच्चये हेमाद्रौ लिङ्गमधिकृत्य –

**उत्तराशागते भानौ लिङ्गस्थापनमुत्तमम् ।**

**दक्षिणे त्वयने स्थाप्य त्रिवर्षोर्ध्वे भयं लभेत् ॥ २ ॥**

लिङ्ग की स्थापना उत्तरायण में होनी चाहिए, दक्षिणायन में तीन वर्ष बाद भय (हानि) उत्पन्न हो जाता है ॥२॥

ऋतूनां फलानि शैवसिद्धान्ते –

**लक्ष्मीप्रदं वसन्ते स्याद् ग्रीष्मे च जयशान्तिदम् ।**

**योगदं प्रावृषि प्रोक्तं मोक्षदं शरदि स्मृतम् ॥ ३ ॥**

**हेमन्ते ज्ञानदं चैव शिशिरे बहुभूतिदम् ।**

**मलमासे मुमुक्षूणां मोक्षदं चाघनाशनम् ॥ ४ ॥**

स्थापना में ऋतु का फल –

वसन्त में लक्ष्मीलाभ, ग्रीष्म में विजय, शान्ति, वर्षा में योगसिद्धि, शरद में मोक्ष, हेमन्त में ज्ञानवृद्धि, शिशिर में देवप्रतिष्ठा से अनेक प्रकार की प्रशस्ति व विभूति की प्राप्ति होती है ।।३-४।।

देवविशेषे माधवीये वैखानसः –

**मातृभैरववाराहनरसिंहत्रिविक्रमाः ।**
**महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने ।। ५।।**

दैवोद्देश्यक प्रतिष्ठा –

मातृका (शीतलादि श्री आदि लोकमात्रन्त षोडश मातृका), भैरव, वराह, नरसिंह, वामन, महिषासुरहन्त्री (दुर्गा), इन देवताओं की स्थापना दक्षिणायन में भी होती है ।।५।।

लिङ्गप्रतिष्ठामासा रत्नावल्याम् –

**माघफाल्गुनवैशाखज्येष्ठाषाढेषु पञ्चसु ।**
**मासेषु शुक्लपक्षेषु लिङ्गस्थापनमुत्तमम् ।। ६।।**

लिङ्गप्रतिष्ठा में मास –

माघ, फाल्गुन, वैशाख, ज्येष्ठ, आषाढ इन पाँच मासों के शुक्लपक्ष में लिङ्गप्रतिष्ठा उत्तम होती है ।।६।।

साधारणमासफलानि विष्णुधर्मे –

**माघे[1] कर्त्तुर्विनाशाय फाल्गुने शुभदा भवेत् ।**
**लोकानन्दकरी चैत्रे वैशाखे वरसंयुता ।। ७।**
**आज्ञायुता तथा ज्येष्ठे आषाढे धर्मवृद्धिदा ।**
**श्रावणे धनहीना स्यात्प्रोष्ठपादे विनश्यति ।। ८।।**

---

१. अत्र श्रवणाश्विनयोर्निषेधो मार्गशीर्षविधिश्च विष्णुव्यतिरिक्तविषयः । माघश्रावणभाद्रपदनिषेधः शिवव्यतिरिक्तविषयः ।

**आश्विने नाशमाप्नोति वह्निना कार्त्तिके तथा।**
**सौम्ये सौभाग्यमतुलं पौषे पुष्टिरनुत्तमा ॥ ९॥**
**दोषान्वितधिमासे स्यात्कर्त्तुरात्मान एव च।**
**देव्या माघेऽश्विने मासे उत्तमा सर्वकामदा ॥ १०॥**

सामान्य रूप से मासफल –

विष्णुधर्मोत्तर पुराण के अनुसार माघ की प्रतिष्ठा कर्ता के विनाश के लिए होती है , फाल्गुन में शुभदायिनी, चैत्र में लोकानन्ददायिनी होती है, वैशाख में वरदायिनी, ज्येष्ठ में सम्मानदात्री, आषाढ़ में धर्मवृद्धि देती है, श्रावण में धनहानि, भाद्रपद में देवत्व नष्ट होता है , आश्विन में नाश करती है, कार्तिक की प्रतिष्ठा अग्नि-भयकारिणी, मार्गशीर्ष में विशिष्ट भाग्योदय, पौष में साधारण पुष्टि, अधिमास में अपने में दोष की वृद्धि होती है; किन्तु माघ व आश्विन में देवी की प्रतिष्ठा सर्वकामदा होती है ।। ७-१०।।

प्रतिष्ठायां तिथिफलानि विष्णुधर्मोत्तरे –

**दृढा धनकरी स्फीता तथा प्रतिपदि स्मृता।**
**द्वितीयायां धनोपेता तृतीयायां धनप्रदा ॥ ११॥**
**चतुर्थी हानिदा प्रोक्ता यमस्य स्यात्सुखावहा।**
**विनायकस्य देवस्य तथा तत्र शुभप्रदा ॥ १२॥**
**पञ्चम्यां श्रीयुता कर्त्तुर्वरदा च तथा भवेत्।**
**षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी ॥ १३॥**
**अष्टम्यां धान्यबहुला नवम्यां च विनश्यति।**
**भद्रकाल्याः कृता तत्र कर्त्तुर्भवति तुष्टये ॥ १४॥**

**धर्मवृद्धिकरी ज्ञेया दशम्यां च तथा तिथौ।**
**एकादश्यामर्थदात्री द्वादश्यां सर्वकामदा ॥ १५॥**
**त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति।**
**कृष्णपक्षे पञ्चदश्यां कर्त्तुः क्षयकरी भवेत् ॥**
**पञ्चदश्यां तथा शुक्ले सर्वाभीष्टकरी भवेत् ॥ १६॥**

प्रतिपदा की प्रतिष्ठा स्थायी, विशेष धनदायिनी होती है, द्वितीया में धन-सम्पन्न (धनदा) होती है, तृतीया की प्रतिष्ठा धनप्रदा, चतुर्थी हानिदा है; किन्तु यम व विनायक की प्रतिष्ठा शुभदा है। पञ्चमी की प्रतिष्ठा भी वरदा होती है। षष्ठी में लक्ष्मी, सप्तमी में रोग, अष्टमी में पुत्र-धान्य की प्राप्ति, नवमी में विनाश, किन्तु भद्रकाली की प्रतिष्ठा से कर्त्ता संतुष्ट रहता है। दशमी में धर्मवृद्धि, एकादशी की प्रतिष्ठा अर्थदात्री, द्वादशी-त्रयोदशी की प्रतिष्ठा सर्वकामदा है, चतुर्दशी की प्रतिष्ठा नष्ट हो जाती है, अमावस्या की प्रतिष्ठा नाशकारिणी व पूर्णिमा की प्रतिष्ठा अभीष्टदायिनी होती है ॥११-१६॥

अथ प्रतिष्ठावासरानाह श्रीपतिः –

**तेजस्विनी क्षेमकृदग्निदाहविधायिनी स्याद्वरदा दृढा च।**
**आनन्दकृत्कल्पनिवासिनी च सूर्य्यादिवारेषु कृता प्रतिष्ठा ॥ १७॥**

प्रतिष्ठा में दिन –

रविवार की प्रतिष्ठा तेजस्विनी, सोम – शान्ति, भौम – अग्निभय, बुध – वरदा, गुरु – स्थायित्व, शुक्र – आनन्ददायिनी, शनि में कल्पान्त स्थायिनी होती है ॥१७॥

शनिवारे विशेषमाह भीमपराक्रमः –

**आचन्द्रार्कस्थायिनी तिग्मभासः पुत्रेण स्याद्देवतानां प्रतिष्ठा।**
**सर्वं चैतत्स्यादलं वीर्ययुक्तैरादित्याद्यैः खेचरैः कर्त्तुरुक्तम् ॥ १८॥**

शनि-विशेष –

शनिवार की प्रतिष्ठा सूर्यादि ग्रहों के पूर्ण बली होने पर सूर्य-चन्द्र की भाँति स्थायिनी, यशस्विनी होती है ॥१८॥

सर्वसाधारणप्रतिष्ठानक्षत्राण्याह वसिष्ठः–

**हस्तत्रये मित्रहरित्रये च पौष्णद्वयादित्यसुरेज्यभेषु।**
**तिस्रोत्तराधातृशशाङ्कभेषु सर्वामरस्थापनमुत्तमं स्यात् ॥ १९॥**

प्रतिष्ठा-नक्षत्र –

हस्त, चित्रा, स्वाती, अनुराधा, श्रवण, धनिष्ठा, शतभिषा, रेवती, अश्विनी, पुनर्वसु, पुष्य, तीनों उत्तरा, रोहिणी, मृगशिरा नक्षत्रों में सर्वदेव-प्रतिष्ठा शुभ होती है ॥१९॥

देवविशेषे नक्षत्राण्याह श्रीपतिः –

**रोहिण्युत्तरपौष्णवकरादित्याश्विनीवासवा-**
**नुराधेन्दवजीवभेषु गदितं विष्णोः प्रतिष्ठापनम्।**
**पुष्यश्रुत्यभिजित्सुरेश्वरकयोर्वित्ताधिपस्कन्दयो-**
**मैंत्रे तिग्मरुचेः करे निर्ऋतिभे दुर्गादिकानां शुभम् ॥ २०॥**

देवतोद्देश्यक नक्षत्र –

रोहिणी, तीनों उत्तरा, रेवती, श्रवण, हस्त, पुनर्वसु, अश्विनी, धनिष्ठा, अनुराधा, मृगशिरा, पुष्य में विष्णु की स्थापना होती है। पुष्य, श्रवण, अभिजित् में इन्द्र, ब्रह्मा, अनुराधा में कुबेर, कार्तिकेय की, सूर्य की प्रतिष्ठा हस्त में, मूल में दुर्गा आदि देवियों की प्रतिष्ठा होती है ॥२०॥

सूर्य्यविषये विशेषमाह भीमपराक्रमः –

**मित्रोत्तराभाद्रपदापौष्णादित्येषु योनिभचतुष्के।**
**विदधीत तिग्मरश्मेः स्थापनमिष्टार्थसंसिद्ध्यै ॥ २१॥**

अनुराधा, उत्तराभाद्रपद, रेवती, हस्त – इन चार नक्षत्रों में सूर्य की स्थापना इष्टसिद्धि देती है ।।२१।।

देवीविषये विशेषो यथा मात्स्ये –

**आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।**
**ज्येष्ठाश्रवणरोहिण्यां पूर्वाभाद्रपदे तथा ।। २२ ।।**
**हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा ।**
**अनुराधा श्रुतिस्वाती प्रतिष्ठासु प्रशस्यते ।। २३ ।।**

पूर्वाषाढ़, उत्तराषाढ़, मूल, तीनों उत्तरा, ज्येष्ठा, श्रवण, रोहिणी, पूर्वाभाद्रपद, हस्त, अश्विनी, रेवती, पुष्य, मृगशिरा, अनुराधा, स्वाती – ये नक्षत्र प्रतिष्ठा में शुभ हैं । तीनों उत्तरा से उत्तराषाढ़ भी आ जाता है; किन्तु उत्तराषाढ़ के ग्रहण में वैशिष्ट्य है ।।२२-२३।।

अन्यदेवानां प्रतिष्ठानक्षत्राण्याह श्रीपतिः –

**गणपरिवृढरक्षोयक्षभूतासुराणां**
**प्रमथफणिसरस्वत्यादिकानां च पौष्णे ।**
**श्रवसि सुगतनाम्नो वासवे लोकपानां**
**निगदितमखिलानां स्थापनं च स्थिरेषु ।। २४ ।।**

अन्य देवप्रतिष्ठा –

गणपति समूह (षड्विनायक), यक्ष, भूत, असुर, शेष, सरस्वती आदि देवि[illegible]ों की प्रतिष्ठा रेवती में होती है । श्रवण में बुद्ध भगवान्, धनिष्ठा [illegible] लोकपालों एवं उक्त-अनुक्त सभी देवताओं की प्रतिष्ठा स्थिर नक्षत्र, स्थिर लग्न में होनी चाहिए ।।२४।।

सप्तर्षिप्रतिष्ठामाह श्रीपतिः –

**सप्तर्षयो यत्र चरन्ति धिष्णे कार्या प्रतिष्ठा खलु तत्र तेषाम् ।**
**श्रीव्यासवाल्मीकिघटोद्भवानां तथा स्मृता वाक्पतिभे ग्रहाणाम् ।। २५ ।।**

सप्तर्षि-प्रतिष्ठा –

वर्तमान समय में सप्तर्षि जिस नक्षत्र पर हों, उसी नक्षत्र में उनकी प्रतिष्ठा होनी चाहिए एवं व्यास, वाल्मीकि, अगस्त्य प्रभृति महर्षियों की प्रतिष्ठा पुष्य में होनी चाहिए ।।२५।।

प्रतिष्ठालग्नान्याह श्रीपतिः –

**सिंहोदये दिनकरो मिथुने महेशो नारायणश्च युवतौ घटभे विधाता ।**

**देव्यो द्विमूर्त्तिभवनेषु निवेशनीया क्षुद्राश्चरे स्थिरगृहे निखिलाश्च देवाः ।। २६।।**

सूर्य की प्रतिष्ठा सिंह लग्न में, महेश की मिथुन, नारायण की प्रतिष्ठा कन्या, ब्रह्मा की कुम्भ, देवियों की द्विस्वभाव लग्न, क्षुद्र देवों की चरलग्न व सम्पूर्ण देवों की प्रतिष्ठा स्थिर लग्न में शुभ होती है ।।२६।।

प्रतिष्ठालग्ने ग्रहफलमाह श्रीपतिः –

**केन्द्रत्रिकोणभवमूर्त्तिषु सद्ग्रहेषु चन्द्रार्कभौमशनिषु त्रिषडायगेषु ।**

**सान्निध्यमेति नियतं प्रतिमासु देवः कर्त्तुः सुखार्थसुतसम्पदरोगता च ।। २७।।**

केन्द्र, त्रिकोण, प्रथम व एकादश स्थानों में शुभग्रह, चन्द्र व पापग्रह ३/६/११ इन स्थानों में हों, तो प्रतिष्ठा से निश्चित मूर्त्ति में देवसान्निध्य हो जाता है और कर्ता सुख-शान्ति, अर्थ-सम्पत्ति व आरोग्य का भागी होता है ।।२७।।

**सौम्या लग्नाद्याश्रिता मूर्त्तिपूर्वान्भावान्वीर्यैरुत्कटान् वर्द्धयन्ति ।**

**षष्ठं हित्वा भावमेते हि तत्र शत्रुध्वस्तिं कर्त्तुरुत्पादयन्ति ।। २८।।**

शुभग्रह (मूर्तिपूर्व) लग्नादि द्वादश भावों की अपने बलों से उत्कट

वृद्धि करते हैं और यही शुभग्रह छठवें हों तो शत्रुओं का नाश करते हैं ॥२८॥

**द्विवेदिकुलसम्भूतसरयूकृतसङ्ग्रहे।**
**शिरोमणौ समाप्ताभूत्प्रभा द्वाविंशसंज्ञका॥२९॥**

**॥ इति श्रीसरयूप्रसादसङ्गृहीते सङ्ग्रहशिरोमणौ प्रतिष्ठाकथनं नाम द्वाविंशी प्रभा समाप्ता॥२२॥**

# अथ त्रयोविंशी प्रभा

## ।। अथ प्रकीर्णकप्रभाप्रारम्भः ।।

तत्रादौ सर्वकार्योपयोगिनी शिवद्विघटिका प्रारभ्यते । अथावश्ये पञ्चाङ्गशुद्ध्यभावे शिवमुहूर्त्तानि । यच्चोक्तं रुद्रयामले श्रीदेवीवाक्यम् –

**त्रिपुरहरमुहूर्त्तं केन दृष्टं श्रुतं वा**
**सकलमपि हि दिष्टं शम्भुना भूतहेतोः ।**
**यदि शुभमशुभं वा यादृशं तादृशं वा**
**तदिदमपि नरेन्द्रैः सर्वदा चिन्तनीयम् ।। १ ।।**

पञ्चाङ्गशुद्धि के अभाव में और आवश्यक कार्य उपस्थित होने पर श्रीदेवी ने कहा है कि सर्वोपयोगी भगवान् शङ्कर के शिव-द्विघटिका मुहूर्त्तों को किसी ने देखा या सुना है ? अर्थात् कोई नहीं; किन्तु सभी प्राणियों के हितार्थ सकल मुहूर्त्तों को यथेष्ट भगवान् शङ्कर ने बताया है । इनमें शुभ-अशुभ सभी मुहूर्त्त प्रतिपादित हैं, उसके अनुसार मानव के कल्याणार्थ विचार करना चाहिए ।। १ ।।

**श्रीशम्भो प्राणनाथेश वद मे करुणानिधे ।**
**त्रिपुरस्य वधे प्रोक्ता मुहूर्त्ता ये शुभप्रदाः ।। २ ।।**
**भूतानामुपकारार्थं सर्वकालेष्टसिद्धिदम् ।**
**पुरुषार्थप्रदं ब्रूहि करुणाकर शङ्कर ।। ३ ।।**

श्रीदेवी भगवान् शंकर से प्रार्थना करती हैं कि हे प्रभो ! करुणावरुणालय ! दयासागर ! त्रिपुरवध के लिए जिन मुहूर्त्तों को आप कहे हैं, प्राणियों के कल्याण हेतु सर्वकालिक सिद्धिदायक पुरुषार्थ-साधक उन्हें बतावें ।। २-३ ।।

ईश्वर उवाच –

**शृणु देवि प्रवक्ष्यामि ज्ञानं त्रैलोक्यदीपकम् ।**
**ज्योतिस्सारस्य यत्सारं देवानामपि दुर्लभम् ॥ ४॥**

भगवान् की उक्ति –

हे देवि ! ज्यौतिषशास्त्रसारसमुन्नत देवदुर्लभ उत्तम ज्ञान मैं बताता हूँ, सुनो ॥४॥

**न तिथिर्न च नक्षत्रं न योगं करणं तथा ।**
**कुलिकं यमयोगं च न भद्रा न च चन्द्रमाः ॥ ५॥**
**न शूलं योगिनी राशिर्न होरा न तमोगुणः ।**
**व्यतीपाते च सङ्क्रान्तौ भद्रायामशुभे दिने ॥ ६॥**
**शिवालिखितमित्येतत्सर्वविघ्नोपशान्तये ।**
**कदाचिच्चलते मेरुः सागराश्च महीधराः ॥ ७॥**
**सूर्यः पतति वा भूमौ वह्निर्वा याति शीतताम् ।**
**निश्चलश्च भवेद्वायुर्नान्यथा मम भाषितम् ॥ ८॥**
**तत्रादौ कथयिष्यामि मुहूर्त्तानि च षोडश ।**
**गुणत्रयप्रयोगेण चलन्त्येव अहर्निशम् ॥ ९॥**

तिथि, नक्षत्र, योग, करण, कुलिक, यमघण्ट, भद्रा, चन्द्रबल, शूल, योगिनी, राशि, होरा, यात्राराहु, व्यतिपात, संक्रांति, अशुभ दिन – इन सभी दुर्योगों की शान्ति शिवालिखित इस मुहूर्त्त से हो जाती है। मेरु, सागर, पर्वत कभी अपने स्थान से चल सकते हैं, सूर्य भूमि पर गिर सकते हैं, अग्नि शीतल हो सकता है; किन्तु हमारा कथन मिथ्या नहीं हो सकता है। तब तक तीन (सत्-रज-तम) गुणों व दिनों के आधारभूत उन सोलह मुहूर्त्तों को बताता हूँ– शिवे ! सुनो ॥५-९॥

अथ मुहूर्त्तानि तत्रैव –

रौद्रं श्वेतं तथा मैत्रं चार्वटं च चतुर्थकम्।
पञ्चमं जयदेवं च षष्ठं वैरोचनं तथा ॥१०॥
तुरगं सप्तमं चैव ह्यष्टमं चाभिजित्तथा।
रावणं नवमं प्रोक्तं वालवं दशमं तथा ॥११॥
विभीषणं रुद्रसंज्ञं द्वादशं च सुनन्दनम्।
याम्यं त्रयोदशं ज्ञेयं सौम्यं प्रोक्तं चतुर्दशम् ॥१२॥
भार्गवं तिथिसंज्ञं च सविता षोडशं तथा।
एतानि प्रोक्तकार्येषु नियोज्यानि यथाक्रमात् ॥१३॥

दिन व रात के सोलहवें भाग के समकाल एक मुहूर्त्त का समय होता है। चक्र से क्रम व नाम का बोध हो जाएगा ॥१०-१३॥

अथ मुहूर्त्तकर्म्माणि –

रौद्रे रौद्रतरं कार्य्यं श्वेते कुञ्जरबन्धनम्।
स्नानदानादिकं मैत्रे चार्वटे स्तम्भनं भवेत् ॥१४॥
कार्यं यज्जयदेवसंज्ञकवरे सर्वार्थकं साधयेत्
तद्वैरोचनसंज्ञके प्रभवति पट्टाभिषेकं क्रमात्।
ज्ञात्वैवं तुरदेवनाम्नि विदिते शस्त्रास्त्रकं साधयेत्
स्यात्कार्यमभिजिन्मुहूर्त्तकवरे ग्रामप्रवेशं सदा ॥१५॥
रावणे साधयेद्वैरं युद्धकार्यं च बालवे।
विभीषणे शुभं कार्यं यन्त्रकार्यं सुनन्दने ॥१६॥
याम्ये भवेन्मारणकार्यमप्यसौ
सौम्ये सभायामुपवेशनं स्यात्।
स्त्रीसेवनं भार्गवके मुहूर्त्ते
सावितृनाम्नि प्रपठेत्सुविद्याम् ॥१७॥

श्रीशिवोक्त सोलह मुहूर्त्तों का कार्य-निर्देश –

रौद्र मुहूर्त्त में रौद्र (उग्र) कार्य सफल होता है, श्वेत में हाथी बन्धन (बझाना), मैत्र में स्नान-दानादि कर्म, चार्वट में स्तम्भन (गतिरोध), जयदेव में सर्वार्थसाधन (सर्वकार्यसिद्धि), वैरोचन में पट्टाभिषेक (राजगद्दी आदि पद का शपथ-ग्रहण), तुरदेव में शस्त्र-अस्त्र का घट्टन (साधन) आदि (निर्माण-प्रयोग), अभिजित् मुहूर्त्त में ग्रामप्रवेश, रावण में वैरसाधन, वालव में युद्ध कार्य का आरम्भ, विभीषण में शुभकार्य, सुनन्दन में यन्त्रकार्य (वस्तु-निर्माण, यन्त्रादि सम्बन्धी कार्य), यम में मारण, सौम्य में सभोपवेशन, भार्गव में स्त्रीगमन, सावित्र में विद्या अध्ययन सफल होता है ॥१४-१७॥

## षोडश-मुहूर्त्त-चक्र

| मुहूर्त्त | फल |
|---|---|
| रौद्र | रौद्र कार्य |
| श्वेत | कुञ्जरबन्धन |
| मैत्र | स्नानादि शुभकर्म |
| चार्वट | स्तम्भन |
| जयदेव | सर्वकार्यसिद्धि |
| वैरोचन | शुभपट्टाभिषेक |
| तुरग | शस्त्रसाधन |
| अभिजित् | ग्रामप्रवेश |
| रावण | वैरकार्य |
| वालव | युद्धकार्य |
| विभीषण | शुभकार्य |
| सुनन्दन | यन्त्रचालन |
| याम्य | मारणकर्म |
| सौम्य | सभाप्रवेश |
| भार्गव | स्त्रीसेवा |
| सविता | विद्यारम्भ |

अथ मुहूर्त्तोदयो वारपरत्वेन –

**उदये रौद्रमादित्ये मैत्रं सोमे प्रकीर्त्तितम् ।**
**जयदेवं कुजे वारे तुरदेवं बुधे स्मृतम् ॥१८॥**
**रावणं च गुरौ ज्ञेयं भार्गवे च विभीषणम् ।**
**शनौ याम्यं मुहूर्त्तं च दिवारात्रिप्रयोगतः ॥१९॥**

इन मुहूर्त्तों का दिन के अनुसार प्रारम्भ, यथा – रवि के दिन रौद्र से प्रारम्भ होगा, रात्रि में एकान्तर श्वेत से क्रमशः १६ मुहूर्त्त व्यतीत होंगे ।

सोम के दिन मैत्र से और रात्रि में चार्वट से प्रारम्भ होगा। मंगल के दिन जयदेव व रात्रि में वैरोचन से प्रारम्भ होकर १६ मुहूर्त्त व्यतीत होंगे।

बुध के दिन तुरंग, रात्रि में अभिजित् से १६ मुहूर्त्त व्यतीत होंगे। गुरु के दिन रावण व रात्रि में वालव से, शुक्र के दिन विभीषण व रात्रि में सुनन्दन से, शनि के दिन याम्य व रात्रि में सौम्य से १६ मुहूर्त्त व्यतीत होंगे ॥१८-१९॥

## मुहूर्त्तोदय-चक्र

| रवि | चन्द्र | भौम | बुध | गुरु | शुक्र | शनि | **दिन** |
|---|---|---|---|---|---|---|---|
| रौद्र | मैत्र | जयदेव | तुरदेव | रावण | विभीषण | याम्य | **मुहूर्त्त** |

मुहूर्त्त ज्ञानार्थ उदाहरण –

रवि के दिन दिनमान ३२।४० है तो इसका षोडशांश = ३२।४० ÷ १६ = २ घटी, २ पल, ३० विपल हुआ, इसका घंटात्मक मान = (२।२।३०)५ ÷ २ = ४८ मिनट, १ सेकेंड = १ मुहूर्त्त का मान हुआ। मुहूर्त्त के व्यवहार में समय-ज्ञान हेतु उदाहरण के अनुसार एक मुहूर्त्त = ० घंटा, ४८ मिनट, १ सेकेंड है और रवि के दिन पाँचवाँ जयदेव मुहूर्त्त शुभ है। अतः (०।४८।१) चार से गुणने से = (०।४८।१) × ४ = ३ घं. १२ मि. ४ से. होता है, इसे सूर्योदय (६।१५) में जोड़ा तो (६।१५) + (३।१२।४) = ९।२७।४ हुआ, यह जयदेव मुहूर्त्त के प्रारम्भ का समय हुआ। इसमें १ मुहूर्त्त का मान = ०।४८।१ जोड़ा तो १०।१५।५ यह जयदेव की समाप्ति का समय हुआ। अतः जयदेव मुहूर्त्त उदाहरण के दिन ९।२७।४ से १०।१५।५ तक रहेगा, इसमें अभीष्ट कार्य कर सकते हैं। इस प्रकार अन्य दिन भी सूर्योदय के अनुसार अपने अभीष्ट मुहूर्त्त का ज्ञान कर सकते हैं।

अथ गुणानामुदयः –

**गुरुसोमदिने सत्त्वं रजश्चाङ्गारके भृगौ।**
**रवौ मन्दे बुधे वारे तमो नाडीचतुष्टयम् ॥२०॥**

सत्त्वादि गुणों का उदय –

सोम, गुरु के दिन प्रथम सूर्योदय के समय सत्त्व गुण का उदय होता है, उसके बाद रज, तत्पश्चात् तम गुण एवं दिन-रात्रि में एक गुण पाँच बार आएगा; क्योंकि प्रत्येक का भोगकाल ४ घटी माना गया है।

मंगल, शुक्र के दिन रजोगुण का प्रथम उदय होगा, रवि, बुध व शनि के दिन प्रथम तमोगुण का उदय होगा, एक के बाद दूसरा, दूसरे के बाद तीसरा एवं क्रमिक उदय होता रहता है ॥२०॥

गुणों के ज्ञान का उदाहरण –

एक गुण का भोगकाल – ४ घटी = १ घंटा, ३६ मिनट है और रवि के दिन सूर्योदय का समय ६।१५ है व प्रथम तमोगुण का उदय होता है। अतः सूर्योदय (६।१५) + तमोगुण-भोग १ घंटा, ३६ मिनट जोड़ने पर ७।५१ हुआ, अर्थात् ६।१५ से ७ बजकर ५१ मिनट तक तमोगुण का उदय रहेगा। इसमें १ घंटा, ३६ मिनट जोड़ने पर ७।५१ से ९।२७ तक सत्त्व गुण की सत्ता रहेगी। इस प्रकार सर्वत्र व्यवहार कर गुणों की व्याप्ति का समय स्पष्ट हो जायेगा।

गुणानां वर्णाः –

**सत्त्वं गौरं रजः श्यामं तामसं कृष्णमेव च।**
**इमं वर्णं विजानीयात्सत्त्वादीनां यथोदितम् ॥ २१॥**

सत्त्वादि गुणों का (वर्ण) रंग –

सत्त्व = गौर, रज = श्याम, तम= कृष्ण वर्ण का है ॥२१॥

अथ गुणानां फलम् –

**सत्त्वेन साधयेत्सिद्धिं रजसा धनसम्पदाम्।**
**तमसा छेदभेदादि साधयेन्मोक्षमार्गकम् ॥ २२॥**

सत्त्व में सिद्धि का साधन करें (देव-मन्त्र-यन्त्र आदि सिद्धि), रज में धन-सम्पत्ति का साधन, तम में छेदन-भेदन व मोक्ष-साधन सफल होता है ॥२२॥

**गुणोदय-चक्र**

| सिद्धि | धन-सम्पत्ति | अशुभ कर्म | **कार्य-साधन** |
|---|---|---|---|
| सत्त्वगुण | रजोगुण | तमोगुण | **गुण** |
| गौरवर्ण | श्यामवर्ण | कृष्णवर्ण | **गुण-वर्ण** |
| गुरुवार सोमवार | भौमवार शुक्रवार | रविवार शनिवार बुधवार | **गुणोदय-दिन** |

अथ मुहूर्त्ताङ्गरेखाज्ञानम् –

**शून्यं नभः खादिभिरेव वर्णै-**
**र्विघ्नं धनुर्युग्मगणाधिपाद्यैः।**
**मृत्युस्तथा पादयमादिवर्णैः**
**श्रीविष्णुनामामृतसंज्ञसिद्धिः ॥ २३॥**

अथ रेखास्वरूपम् –

**अमृतश्चोर्ध्वरेखैका कालरेखात्रयं भवेत्।**
**विघ्नमावर्त्तकं ज्ञेयं शून्ये शून्यमिति क्रमः ॥ २४॥**

उपर्युक्त १६ मुहूर्त्तों की अंगरेखा –

शून्य, नभ, ख, अभ्र ये चार शून्य की पर्यायवाची रेखायें हैं।

विघ्न, धनु, युग्म, गणाधिप, ये चार आवर्तक की अंगरेखा हैं। बारह तक मृत्यु, पाद, यम, काल व श्रीविष्णु, अमृतसिद्धि अंगरेखा है, एक

रेखा उपर्युक्त चार नामों से प्रसिद्ध है; किन्तु सभी पर्यायवाची रेखाओं का फल एक ही है, इन रेखाओं का स्वरूप, अमृत का स्वरूप ऊर्ध्वमुख एक रेखा, कालरेखा का स्वरूप तीन ऊर्ध्वरेखा, विघ्न का स्वरूप आवर्त्त व शून्य का स्वरूप शून्य आकृति से समझा जाय ।।२३-२४।।

**रेखाज्ञान-चक्र**

| अमृत-रेखा | काल-रेखा | विघ्न-रेखा | शून्य-रेखा | **रेखा-नाम** |
|---|---|---|---|---|
| सिद्धिकर | मृत्युकर | विघ्नकर | कार्यहानि | **रेखा-फल** |
| श्री<br>विष्णु<br>अमृत<br>सिद्धि | मृत्यु<br>पाद<br>यम<br>काल | विघ्न<br>धनु<br>युग्म<br>गणाधिप | शून्य<br>नभ<br>ख<br>अभ्र | **रेखा-संज्ञा** |

**रेखा-परिचय**

१. ♁ यह अमृतरेखा देव-श्रीवाची शब्दों का बोध कराती है।

२. ♅ यह चिह्न काल, पद, जय व मृत्यु-शब्दवाची है।

३. ᏫᏫ यह चिह्न या रेखा विघ्न, धनु, युग्म व गणेश के पर्यायवाची शब्दों का सङ्केत है।

४. ० यह शून्य, नभ, ख तथा अभ्र शब्दों का संकेत है।

अथ रेखाफलम् –

**शून्ये नैव भवेत्कार्यं विघ्नमावर्त्तके भवेत्।**

**स्यान्मृत्युः कालरेखायां सर्वसिद्धिस्तथामृते ॥ २५॥**

जिस मुहूर्त्त की रेखा का स्वरूप शून्य है, वह मुहूर्त्त कार्यनाशक है। आवर्त्त स्वरूप वाले मुहूर्त्त में विघ्न होता है। कालरेखा वाले मुहूर्त्तों में

मृत्यु व अमृत रेखा स्वरूप के मुहूर्त्तों में सब कार्य की सिद्धि होती है। पंचांगशुद्धि होने पर भी मुहूर्त्त अनुकूल नहीं है तो कार्य की सफलता में विघ्न है ॥२५॥

अथ राशीनां घातगुणाः –

**धनुर्मीनकर्कटानां सत्त्वे घातो विनिर्दिशेत्।**
**तुलालिवृषभमेषाणां घातो रजसि निश्चितम् ॥२६॥**
**कन्यामिथुनसिंहानां कुम्भस्य मकरस्य च।**
**घातस्तामसवेलायां विपरीतं शुभावहम् ॥२७॥**

अथ राशीनां वर्णाः –

**धनुष्कर्कटमीनाख्याः गौरवर्णाः प्रकीर्त्तिताः।**
**वृषमेषतुलाश्चैव वृश्चिकः श्यामवर्णकः ॥२८॥**
**मिथुनो मकरः कुम्भः कन्या सिंहश्च कृष्णकः।**
**गौरश्च म्रियते सत्त्वे श्यामवर्णो रजोगुणे॥**
**कृष्णस्तामसवेलायां म्रियते नात्र संशयः ॥२९॥**

गौरवर्ण व धनु, मीन, कर्क सत्त्वगुण के लिए घातक हैं। श्यामवर्ण व मेष, वृष, तुला, वृश्चिक रजोगुण तथा कृष्णवर्ण व कन्या, मिथुन, सिंह, मकर, कुम्भ राशि तमोगुण के लिए घातक हैं। इन राशियों का वर्ण – धनु, मीन, कर्क गौर, मेष, वृष, तुला, वृश्चिक श्याम, मिथुन, कन्या, सिंह, मकर, कुम्भ कृष्ण वर्ण की राशियाँ हैं। होरा-तन्त्र में प्रतिपादित गुण-धर्म, वर्णों से यहाँ मौहूर्तिक वर्णादि भिन्न हैं। गौरवर्ण सत्त्व में, श्यामवर्ण रज में व कृष्णवर्ण तमोगुण में मृत है ॥२६-२९॥

**विशेष –** जो राशियाँ जिस गुण के लिए घातक हैं, उन राशियों का वर्ण भी वही है, जो उस गुण के लिए मृत है।

## राशि-गुण-चक्र

| सत्त्व | राजस | तामस | गुण |
|---|---|---|---|
| गौर | श्याम | कृष्ण | **वर्ण** |
| धनु<br>मीन<br><br>कर्क | तुला<br>वृष<br>वृश्चिक<br>मेष | कन्या, मिथुन<br>सिंह, कुम्भ<br><br>मकर | **घात-लग्न** |
| गौरवर्ण | श्यामवर्ण | कृष्णवर्ण | **घात-वर्ण** |

अथ क्षयमासाधिमासयोर्व्यवस्था –

**यस्मिन्वर्षे भवेन्मासोऽधिकश्चैव तथा क्षयः।**

**मासेन गृह्यते मासः सर्वकार्यार्थसाधने ॥ ३०॥**

क्षयमासाधिमासों में मुहूर्त्तों की व्यवस्था –

जिस वर्ष में अधिमास हो या क्षयमास हो, उन अधिमास व क्षयमासों में मुहूर्त्तों की व्यवस्था अपने नाम वाले मासों जैसी होगी, कोई भिन्नता नहीं है ॥ ३०॥

अथ मासेषु मुहूर्त्तव्यवस्था –

**माघफाल्गुनचैत्रेषु वैशाखे श्रावणे तथा।**

**नभस्यमासि वाराणां मुहूर्त्तानि यथाक्रमात् ॥ ३१॥**

प्रोक्तमासेषु रव्यादिवारक्रमेण दिनरात्र्यो रेखा –

**रवौ नभःकेशवविघ्नराजो गोविन्दनामा नभ आखुगामी।**

**रात्रौ नृसिंहो युगलं नभः पत् लक्ष्मीशलम्बोदररामसंज्ञौ ॥ ३२॥**

सोमे हरिर्विघ्नपतिः सुरेशः शून्यं च गौरीसुतविष्णुसंज्ञौ।
पदं निशायां खखविष्णुशून्यं युग्मं च नारायणविघ्ननाथौ ॥ ३३॥
भौमे यमौ मा रमणोऽथ युग्मं युग्मं हरिश्चैव गजाननश्च।
नक्तं च विघ्नो द्विपदं मुकुन्दः पदत्रयं श्रीपतिखं नभश्रीः ॥ ३४॥
बुधे धनुः कृष्णयमौ च सौरिः सिद्धिर्द्धनुः सौरियमौ च सिद्धिः।
रात्रौ सुपर्णध्वज एव युग्मं नभोऽथ दामोदरकुञ्जराख्यौ ॥ ३५॥
गुरौ गोपिनाथस्तथा विघ्नराजो नभःकेशवः कुञ्जराख्यस्तथैव।
निशायां पदं नन्दजः सूर्यसूनुर्नभोमाधवश्चापमेकं हरिश्च ॥ ३६॥
शुक्रे कृष्णः स्याद्यमः खं मुरारिर्गौरीपुत्रः श्रीपतिः शून्यमेकम्।
नक्तं कालः कंसहा खं च युग्मं पादद्वन्द्वो वामनः खं च पादौ ॥ ३७॥
शनौ पदं श्रीः खनभो नभःखं नारायणः खं हरिखं हरिश्च।
रात्रौ च शून्यं यमयुग्ममाधवो खविघ्नराजौ नृहरिश्च पादौ ॥ ३८॥

मासों के अनुसार मुहूर्तों की व्यवस्था –

माघ, फाल्गुन, चैत्र, वैशाख, श्रावण, भाद्रपद, इन मासों के रव्यादि दिनों में मुहूर्त्तों की क्रमिक व्यवस्था निम्न है –

उपर्युक्त मासों के वारक्रम व दिन-रात्रि के विभाग से मुहूर्तों के नाम दिए जाते हैं, जो चक्र से स्पष्ट हैं ॥ ३१-३८॥

आश्विनादि मासप्रयुक्त रव्यादि दिन व रात्रि विभाग के अनुसार रेखा – इनमें मुहूर्त्तवाची शब्दों की अक्षर-संख्या व वचन (एकवचन, द्विवचन, बहुवचन) के अनुसार उनके स्थान निर्दिष्ट हैं, यथा –

वर्गैराग्नेयाद्यैः क्रूरग्रहपीडितैः क्रमेण नृपाः।
पाञ्चालो मागधिकः कालिङ्गश्च क्षयं यान्ति ॥१८९॥
आवन्तोऽथानर्त्तो मृत्युं चायाति सिन्धुसौवीरः।
राजा च हारहौरो मद्रेशोऽन्यश्च कौणिन्दः॥१९०॥

ईशान कोण में रेवती, अश्विनी, भरणी नक्षत्रों में मेरुक, नष्टराज्य, पशुराज्य, कीर, काश्मीर, अभिसागर, दरद, तङ्गण, कुलूत, सैरिन्ध, वनराष्ट्र, ब्रह्मपुर, दार्व, डामर, वनराज्य, किरात, चीन, कौणिन्द, भल्ल, पटोल, जटासुर, कुनट, खष, घोष, कुचिक, एकचरण, अनुविश्व, सुवर्णभू, वसुवन, दिविष्ठ, पौरव, चीरनिवासिन्, त्रिनेत्र, मुञ्जाद्रि, गान्धर्व देश हैं ॥१८६-१९०॥

॥ इति मिश्रप्रभायां वराहोक्तकूर्मविभागः ॥

अथ नक्षत्रव्यूहो बृहत्संहितायाम् –

आग्नेये सितकुसुमाहिताग्निमन्त्रज्ञसूत्रभाष्यज्ञाः।
आकरिकनापितद्विजघटकारपुरोहिताब्दज्ञाः॥१९१॥
रोहिण्यां सुव्रतपण्यभूपधनियोगयुक्तशाकटिकाः।
गोवृषजलचरकर्षकशिलोच्चयैश्वर्यसम्पन्नाः॥१९२॥
मृगशिरसि सुरभिवस्त्राब्जकुसुमफलरत्नवनचरविहङ्गाः।
मृगसोमपीथिगान्धर्वकामुकालेखहाराश्च ॥१९३॥
रौद्रे वधबन्धानृतपरदारस्तेयशाठ्यभेदरताः।
तुषधान्यतीक्ष्णमन्त्राभिचारवेतालकर्मज्ञाः॥१९४॥
आदित्ये सत्यौदार्यशौचकुलरूपधीयशोऽर्थयुताः।
उत्तमधान्यं वणिजः सेवाभिरताः सशिल्पिजनाः॥१९५॥
पुष्ये यवगोधूमाः शालीक्षुवनानि मन्त्रिणो भूपाः।
सलिलोपजीविनः साधवश्च यज्ञेष्टिसक्ताश्च ॥१९६॥

अहिदेवे कृत्रिमकन्दमूलफलकीटपन्नगविषाणि।
परधनहरणाभिरतास्तुषधान्यं सर्वभिषजश्च ॥१९७॥
पित्र्ये धनधान्याढ्याः कोष्ठागाराणि पर्वताश्रयिणः।
पितृभक्तवणिक्शूराः क्रव्यादाः स्त्रीद्विषो मनुजाः॥१९८॥
प्राक्फाल्गुनीषु युवतिसुभगगान्धर्वशिल्पिपण्यानि।
कर्पाशलवणमाक्षिकतैलानि कुमारकाश्चापि॥१९९॥
आर्यम्णे मार्दवशौचविनयपाखण्डिदानशास्त्ररताः।
शोभनधान्यमहाधनधर्मानुरताः समनुजेन्द्राः॥२००॥
हस्ते तस्करकुञ्जररथिकमहामात्रशिल्पिपण्यानि।
तुषधान्यं श्रुतयुक्ता वणिजस्तेजोयुताश्चात्र ॥२०१॥
त्वाष्ट्रे भूषणमणिरागलेख्यगान्धर्वगन्धयुक्तिज्ञाः।
गणितपटुतन्तुवायाः शालाक्या राजधान्यानि॥२०२॥
स्वातौ खगमृगतुरगा वणिजो धान्यानि वाततबहुलानि।
अस्थिरसौहृदलघुसत्त्वतापसाः पण्यकुशलाश्च ॥२०३॥
इन्द्राग्निदैवते रत्नपुष्पफलशाखिनः सतिलमुद्राः।
कर्पासमाषचणकाः पुरन्दरहुताशभक्ताश्च॥२०४॥

नक्षत्रों के आश्रित पदार्थ –

श्वेत पुष्प, अग्निहोत्री, मन्त्रविद्, यज्ञशास्त्रविशारद, वैयाकरण, रत्नों के खान में नियुक्त कर्मचारी (आकरिक), नापित, ब्राह्मण, कुम्भकार, पुरोहित, ज्योतिषी – ये सब कृत्तिका के आश्रित हैं।

सुव्रती (व्रतधारी), व्यापारी, राजसमूह (राजा), धनी, योगी, शकटजीवी, गो, वृष (दान्त), जलचर, कृषक, पर्वत, ऐश्वर्यवान् – ये सब रोहिणी नक्षत्र के आश्रित हैं।

सुगन्धद्रव्य, वस्त्र, जलज, पुष्प, फल, रत्नसमूह, वनवासी प्राणी, पक्षी, मृग, सोमपीथी (सोमपानी), गायक (गन्धर्व), कामी, लेखहर (चपरासी) – ये सभी मृगशिरा नक्षत्र के अधीन हैं।

वधिक, बन्धक (प्राणी को बाँधने वाला), असत्यभाषी, परदारगामी, चोर, शठ (परकार्यविमुख), भेद कराने वाला (सम्बन्धविच्छेदक), तुषधान्य (शालीधान), क्रूर, मन्त्रविद् (शाबरमन्त्रज्ञ), अभिचारादि वशीकरण-कार्यकर्ता, वेताल (वाजीगर) – ये सभी आर्द्रा नक्षत्र के आश्रित हैं।

सत्यभाषी, दानशील, शौचाचाररत, अलुब्ध, कुलीन, सुरूपवान्, बुद्धिमान्, यशस्वी, धनी, उत्तम धान्य (कलमशाली, जो एक बार उपाटकर दूसरे स्थान में पुनः रोपा जाय उसे उत्तम कलमशाली धान्य कहते हैं), व्यापारी, सेवक, चित्रकार – ये सब पुनर्वसु के अधीन हैं।

यव, गेहूँ, शालीधान्य, ईख, वनान्न, सचिव, राजा, जलजीवी (धीवरप्राय), साधु, सन्त, याज्ञिक, इष्टिरत, कामनापरक यज्ञकर्ता – ये सभी पुष्य नक्षत्र के आश्रित हैं।

श्लेषा में कृत्रिमद्रव्य (मिश्रितपदार्थ), कन्द, मूल (जड़), फल, कीट (कृमि), सर्प, विष, परधनहारी, तुषधान्य, कायचिकित्सक (वैद्य) – ये सभी पदार्थ हैं।

धनधान्यपरिपूर्ण व्यक्ति, बहुग्रामाधिकारी, पर्वतनिवासी, पितृभक्त, वणिक्, शूर (संग्रामप्रिय), मांसाशी (मांसाहारी), स्त्रीद्वेषी – ये सभी मघा नक्षत्र के आश्रित हैं।

नट, सुभगा स्त्री, गायक, शिल्पी, व्यापारी, कपास, लवण (नमक), मधु, तेल (तिल-तेल), बालक – ये पूर्वाफाल्गुनी के आश्रित हैं।

मृदुव्यवहारी, शौचाचारसंलग्न, लोभरहित, विनयी, नीतिज्ञ, पाखंडी (वेदविहित कार्य-विमुख), दानी, पठनशील, उत्तमधान्य, अतिधनी, कर्मठ व राजा सभी उत्तराफाल्गुनी के आश्रित हैं।

चोर, हाथी, रथी, महामात्र (हस्तिसावक), शिल्पी, व्यापारी, शालीधान्य, वेदपाठी, तेजस्वी व बाजारभाव – ये हस्त के अधीन हैं।

सुवर्णकार (भूषणनिर्माता), जौहरी (रत्नपरीक्षक), रंगरेज (रंगाई करने वाला) लिपिक, गीतविद् गन्ध - (सुगन्धि द्रव्य) निर्माता, गणितज्ञ, कौलिक (वस्त्रनिर्माता), शालाक्य (आँखरोग चिकित्सक), राजभोगोपयोगी धान्य – ये सभी पदार्थ चित्रा के आश्रित हैं।

स्वाती में पक्षी, मृग, अश्व, वणिक्, धान्य, चणकादि, अस्थिरचित्त दुर्बल मानव या प्राणी, तापस, कुशल वणिक् या कुशल वनी, ये पदार्थ आते हैं।

लाल पुष्प, लाल फल व इनके वृक्ष, तिल, मूँग, कपास, उड़द, चना – ये सभी पदार्थ विशाखा के आश्रित हैं ॥१९१-२०४॥

**मैत्रे शौर्यसमेता गणनायकसाधुगोष्ठियानरताः।**
**ये साधवश्च लोके सर्वञ्च शरत्समुत्पन्नम् ॥ २०५॥**
**पौरन्दरेति शूराः कुलवित्तयशोऽन्विताः परस्वहृतः।**
**विजिगीषवो नरेन्द्राः सेनानां चापि नेतारः॥ २०६॥**
**मूले भेषजभिषजो गणमुख्याः कुसुममूलफलवार्त्ताः।**
**बीजान्यतिधनयुक्ताः फलमूलैर्ये प्रवर्तन्ते ॥ २०७॥**

पराक्रमी, गणनायक (मुखिया), साधु, गोष्ठीविद् (सभासद), यानरत (यात्रा व्यवसायी या पत्रवाहक), जनपदप्रसिद्ध साधुपुरुष, शारदीय धान्य, ये सभी अनुराधा के आश्रित हैं। युद्धक (लड़ाकू), कुल-धन-यश से परिपूर्ण, परधनहर्ता (ठग), विजिगीषु, सेनापति – ये सभी ज्येष्ठा के आश्रित हैं।

औषध, वैद्य, गणप्रधान, फूल, फल, कन्द-विक्रयी, सर्वबीज, प्रभूत धनी, फल-मूलोपजीवी (फलाहारी) – ये सभी मूल नक्षत्र के आश्रित हैं ॥ २०५-२०७॥

**आप्ये मृदवो जलमार्गगामिनः सत्यशौचधनयुक्ताः।**
**सेतुकरवारिजीवकफलकुसुमान्यम्बुजातानि ॥ २०८॥**
**विश्वेश्वरे महामात्रमल्लकरितुरगदेवताभक्ताः।**
**स्थावरयोधा भोगान्विताश्च ये चौजसा युक्ताः॥ २०९॥**
**श्रवणे मायापटवो नित्योद्युक्ताश्च कर्मसु समर्थाः।**
**उत्साहिनः सधर्मा भागवताः सत्यवचनाश्च ॥ २१०॥**
**वसुभे मानोन्मुक्ताः क्लीबाश्च सौहृदाः स्त्रियां द्वेष्याः।**
**दानाभिरता बहुवित्तसंयुताः शमपराश्च नराः॥ २११॥**
**वरुणेशे पाशिकमत्स्यबन्धजलजानि जलचरा जीवाः।**
**सौकरिकरजकशौण्डिकशाकुनिकाश्चापि वर्गेऽस्मिन् ॥ २१२॥**

मृदुव्यवहारी, धीवर, जलप्राणी, जलयानव्यापारी, शुचि, लोभरहित, शक्तिशाली, सेतुनिर्माता (अधिकारी, कर्मचारी), जलजीवी, जलोत्पन्न फल, फलोपजीवी – ये सभी पूर्वाषाढ़ नक्षत्र के अधीन हैं।

हस्ति-साधक (हाथी व्यापारी व जंगल में हाथी पकड़ने वाला), मल्ल (पहलवान), हाथी, घोड़ा, देवभक्त, वृक्षादि स्थावर, युद्धकुशल, भोगिन् (भोग-भोगी) व तेजस्वी – ये सभी उत्तराषाढ़ के अधीन हैं।

मायावी, उद्यमी, उत्सवी, धर्मप्राण, भगवद्भक्त, सत्यवक्ता – ये सभी श्रवण के अधीन हैं।

निरहंकारी, क्लीब, स्थिरमैत्री, स्त्रीविरक्त, दानी, बहुधनी, जितेन्द्रिय – ये सभी धनिष्ठा के आश्रित हैं।

पाशी (बन्धक), बंधन करने वाले (मत्स्य बझाने वाले), जलज वस्तु, जलचरप्राणी, जलचरजीवी, वाराहजीवी, रजक (रंगरेज), मद्यजीवी, वधिक (पक्षी पकड़ने वाला)– ये सभी शतभिक् नक्षत्र के आश्रित हैं ॥२०८-२१२॥

आजे तस्करपशुपालहिंस्रकीनाशशठचेष्टाः ।
धर्मव्रतैर्विरहितानि युद्धकुशलाश्च ये मनुजाः॥ २१३॥
आहिर्बुध्न्ये विप्राः क्रतुदानतपोयुता महाविभवाः ।
आश्रमिणः पाखण्डा नरेश्वराः सारधान्यञ्च ॥ २१४॥
पौष्णे सलिलजफलकुसुमलवणमणिशङ्खमौक्तिकाब्जानि ।
सुरभिकुसुमानि गन्धा वणिजो नौकर्णधाराश्च ॥ २१५॥
अश्विन्यामश्वहराः सेनापतिवैद्यसेवकास्तुरगाः ।
तुरगारोहाश्च वणिग्रूपोपेतास्तुरगरक्षाः॥ २१६॥
याम्येऽसृक्पिशितभुजः क्रूरा वधबन्धताडनाशक्ताः ।
तुषधान्यं नीचकुलोद्भवा व्रीहीश्च सत्त्वेन ॥ २१७॥
पूर्वात्रयं सानलमग्रजानां राज्ञां तु पुष्येण सहोत्तराणि ।
सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीबलानाम् ॥ २१८॥
आदित्यहस्ताभिजिदश्विनानि वणिग्जनानां प्रवदन्ति भानि ।
मूलत्रिनेत्रानिलवारुणानि भान्युग्रजातेः प्रभविष्णुतायाम् ॥ २१९॥
सौम्येन्द्रचित्रावसुदैवतानि सेवाजनस्वाम्यमुपागतानि ।
सार्पं विशाखा श्रवणो भरण्यश्चाण्डालजातेरिति निर्दिशन्ति ॥२२०॥
रविरविसुतभोगमागतं क्षितिसुतभेदनवक्रदूषितम् ।
ग्रहणगतमथोल्कया हतं नियतमुपाकरपीडितं च यत् ॥ २२१॥
तदुपहतमिति प्रचक्षते प्रकृतिविपर्ययात्तमेव वा ।
निगदितपरिवर्गदूषणं कथितविपर्ययं समृद्धये ॥ २२२॥

पूर्वाभाद्रपद में चोर, पशुपालन, यागादि रक्षक, क्रूर, कृषक, नीच (अधम कार्यरत), शठ (परकार्यविमुख), धर्मादिरहित, व्रतादि सदाचार-विमुख, बाहुयुद्ध-कुशल – ये सभी आते हैं।

उत्तराभाद्रपद में ब्राह्मण, यज्ञ, सत्पात्र में दानकर्ता, तप, व्रत, ऐश्वर्ययुक्त, आश्रमी (त्यागावस्थायुक्त), पाषण्ड, वेदविरुद्ध कार्य, राजा (मनुष्येश्वर), शारदीधान्य (शाली) – ये सभी आते हैं।

जलोत्पन्न वस्तु (कमलादि), लवण, रत्न, शंख, मोती, पद्मराग, अश्व, कमलपुष्प, सुगन्धद्रव्य या सुगन्धित पुष्प, वणिक्, नाविक – ये सभी रेवती नक्षत्र के आश्रित हैं।

अश्वग्राहक (सौदागर), सेनापति, वैद्य, सेवक, अश्वारोही (घोड़सवार), वणिक्, किरात, सुन्दर, स्वरूपवान्, अश्वपति (अश्वरक्षक) – ये सभी अश्विनी नक्षत्र के अधीन हैं।

रुधिर (मांस खाने वाला प्राणी), उग्र, लूटने-मारने-पीटने में रुचि रखने वाला, तुषधान्य, नीचकुलोत्पन्न, उदारताविहीन – ये सभी भरणी नक्षत्र के आश्रित हैं। पुनर्वसु, हस्त, अभिजित्, अश्विनी नक्षत्र व्यापारियों के हैं, अर्थात् वणिग् वृत्ति का विचार इन नक्षत्रों से करना चाहिए।

मूल, आर्द्रा, स्वाती, शतभिक् नक्षत्र उग्रजातियों के हैं। मृगशिरा, ज्येष्ठा, चित्रा, धनिष्ठा नक्षत्र सेवक व स्वामी के हैं। श्लेषा, विशाखा, श्रवण, भरणी नक्षत्र चाण्डाल जातियों के हैं। जो नक्षत्र सूर्य, शनि से युक्त (क्रान्त), वक्री मंगल के वेधादि से दूषित, ग्रहणविद्ध, उल्काहत, क्षीणचन्द्र से युक्त, कथित पापवर्ग से दूषित हों तो तत्तत्प्राणियों की समृद्धि में बाधक होते हैं॥२१३-२२२॥

**॥ इति मिश्रप्रभायां वाराहोक्तनक्षत्रव्यूहः ॥**

अथ शकुनान्यारभ्यन्ते । तत्रादौ स्वप्नविचारमाह सत्याचार्यः –

**दृष्टश्रुतानुभूतं च पार्थिवं कथितं तथा।**

**भावितं दोषजं चैव स्वप्नं सप्तविधं विदुः॥२२३॥**

स्वप्न-विचार –

पूर्व का देखा, श्रुत, अनुभूत, पार्थिव (पृथ्वीजनित), अपना कहा हुआ, होने वाला, रोग (व्याधिग्रस्त व्यक्ति का देखा हुआ)– ये स्वप्न के सात भेद हैं ॥२२३॥

**तत्र पञ्चविधं पूर्वमफलं कथितं बुधैः।**

**विचार्य्यमन्त्यं द्विविधं दुष्टे शान्तिं समाचरेत्॥२२४॥**

प्रथम पाँच प्रकार का स्वप्न निष्फल होता है, अन्तिम द्विविध स्वप्न का विचार कर अशुभ स्वप्न की यथाविधि शान्ति करनी चाहिए ॥२२४॥

**एकस्यां यदि वा रात्रौ शुभं वा यदि वाशुभम्।**

**पश्चाद्दृश्यो यस्तत्र तस्य पाकं विनिर्दिशेत्॥२२५॥**

एक ही रात्रि में यदि शुभ, अशुभ दोनों प्रकार के स्वप्न दिखाई दें, तो जो बाद वाला स्वप्न होगा, वही विचारणीय है ॥२२५॥

अन्यच्च बृहत्कथायां सूर्यप्रभलम्बके तृतीये तरङ्गे –

**स्वप्नश्चानेकधन्यार्थो यथार्थोऽपार्थ एव च।**

**यः सत्यः सूचयत्यन्यो धन्यार्थः स विधीयते॥२२६॥**

अनेकविध स्वप्नों में धन्यार्थ, यथार्थ, अयथार्थ – ये तीन भेद हैं। इनमें से यथार्थ सत्य है, वही सूचनीय है, धन्यार्थ अर्थवाद जैसा है ॥२२६॥

**प्रसन्नदेवतादेशरूपः स्वप्नो यथार्थकः।**

**गाढानुभवचिन्तादिकृतमाहुरपार्थकम्॥२२७॥**

**रजोमूढेन मनसा बाह्यार्थविमुखेन हि।**

**जन्तुर्निद्रावशः स्वप्नं तैस्तैः पश्यति कारणैः॥२२८॥**

**चिरशीघ्रफलत्वं च तस्य कालविशेषतः।**

**यश्च रात्र्यन्तदृष्टस्तु स्वप्नः शीघ्रफलप्रदः॥२२९॥**

प्रसन्न देवता के आदेश रूप स्वप्न यथार्थ हैं। अर्थात् स्वप्न में प्रसन्न कोई देव जो बात कहता है (आदेश देता है) तो वह स्वप्न यथार्थ (सत्य) है। अत्यन्त चिंता की अनुभूति में यदि निद्रा आ जाय, तो उस स्थिति का स्वप्न अयथार्थ (असत्य) है। रागाभिभूत बाह्यचिंतन से विमुख प्राणी जिस आसक्ति में लिप्त है, उन-उन कारणों से निद्रावशीभूत स्वप्न देखता है, वह चिरकालिक या शीघ्र फलदायी होता है। यदि स्वप्न देखने के बाद सोया नहीं तो रात्रि के अन्त में देखा गया स्वप्न शीघ्रफलदायी है॥२२७-२२९॥

स्वप्नफलपाककालमाह वराहः –

**आद्ये वर्षाद्वत्सरार्द्धाद्द्वितीये पाको वर्षार्द्धार्द्धभागे तृतीये।**

**मासात्पाकः शर्वरीपश्चिमान्त्ये दुष्टादुष्टस्वप्नयोगाद्ध्वेत्सः॥२३०॥**

रात्रि के प्रथम प्रहर के यथार्थ स्वप्न का फल एक वर्ष बाद, द्वितीय प्रहर के स्वप्न का फल ६ मास बाद, तृतीय प्रहर के स्वप्न का फल तीन मास व चतुर्थ प्रहर के स्वप्न का फल एक मास के बाद फलदायी होता है॥२३०॥

पराशरोऽप्याह –

**शुभाशुभस्वप्नविचारमुक्तमयुक्तयुक्तं च समूह्य बुद्ध्या।**

**देशादिवर्णाकृतिसम्पदश्च तत्तत्फलं संपरिकल्पयेच्च॥२३१॥**

पराशर जी के अनुसार – शुभाशुभ स्वप्न विचारक युक्त-अयुक्त, तथ्य-अतथ्य आदि स्वप्नों की स्थिति समझकर देश, जाति व ऐश्वर्य के अनुरूप स्वप्न के फल का निर्देश करना चाहिए॥२३१॥

**पादद्विपादोत्तरपादवृद्ध्या वर्षार्द्धमासत्रयमासकालाः।**

**निशाविभागेषु चतुर्षु दृष्टाः स्वप्ना अनिष्टेष्टफलप्रदाः स्युः ॥ २३२॥**

चार प्रहरों में विभक्त रात्रि में देखा हुआ स्वप्न चतुर्थांश, अर्द्धत्रिपाद व पूर्णफल वर्ष, वर्षार्द्ध, ३ मास, १ मास में अनिष्टेष्ट स्वप्न फलप्रद होता है। रात्रि के प्रहर-वृद्धि के अनुसार उपर्युक्त फल के परिपाक समय की कल्पना की जाय ॥२३२॥

अथ शुभस्वप्नानाह पराशरः –

**स्वाङ्गप्रज्वलनं परोपशमनं शुक्रध्वजालिङ्गक्रृ -**
**त्संयुक्तोऽपि नरैर्निपत्यापि वियत्प्रक्षेपणं दिक्षु च।**
**बद्धो वा निगडैर्ग्रसेच्च दहनं नारीक्षितो बाहुना**
**छत्रं वा द्विरदादिरोहणविधौ दिव्योऽपि च ब्राह्मणः॥ २३३॥**

**दिनकरशशितारभिक्षणस्पर्शनानि**
**विशरणमपि मूर्ध्नः सप्त पञ्च त्रिधा वा।**
**वृषभगृहनगेन्द्रश्वेतसिंहाधिरोहा**
**ग्रसनमुदधिभूमौ भूमिराज्यप्रदानि ॥ २३४॥**

**विपुलरणविमर्दद्यूतवादैर्जयश्च**
**पशुमृगमनुजानां लब्धिरध्यासनं वा।**
**विवसनपरिलोपोऽगम्यनारीगमो वा**
**स्वमरणशिखिलाभः शख्यसंदर्शनं च ॥ २३५॥**

**सितसुरभिमनोज्ञा लेपमाल्याम्बराणां**
**द्विजसुरगुरुराज्ञां दर्शनं ह्याशिषश्च।**
**मणिरजतसुवर्णाम्भोजपात्रेषु भुक्ति -**
**र्घृतदधिपरमान्नं सर्वमेतच्छुभं च ॥ २३६॥**

अपने अंग का जलना, दूसरे की शान्ति अथवा (जलते हुये अपनी शरीर को दूसरे के द्वारा बुझाना) व्यक्तियों के साथ इन्द्रध्वज का

आलिंगन, आकाश से गिरना, दिशाओं में अपना प्रक्षेपण, वेणी-बंधन, अग्नि-ग्रहण (अग्निपान), स्त्री को अपनी बाहों से उठाना, छत्र लगाना या देखना, हाथी पर चढ़ना, पवित्र देदीप्यमान ब्राह्मण, सूर्य-चन्द्र का स्पर्श व त्याग (अथवा अपने शिर का छेद), श्वेत बैल, ग्रह, पर्वत, श्वेत सिंह (श्वेत सिंहासन) पर चढ़ना या इनका आक्रमण या पकड़ना, समुद्र का भूमिग्रसन देखना राज्य-प्राप्ति की सूचना है। विपुल रण का मर्दन, जूआ व वाद्य के साथ जयघोष, पशु, मृग, मानव की प्राप्ति या उन पर चढ़ना, विवसन (नग्न) अगम्या नारीगमन, अपनी मृत्यु, मयूर-लाभ, उत्तम प्रफुल्ल फलित शाखी वृक्ष का दर्शन, श्वेत सुगंध, अनुलेपन व माला, वस्त्र का धारण अथवा प्राप्ति, ब्राह्मण, देवता, गुरु का आदेश, दर्शन या आशीर्वाद, मणि, चाँदी, सुवर्ण, कमल के पात्र में भोजन, घृत, दही, उत्तम पक्वान्न भोजन या दर्शन – उपर्युक्त सभी स्वप्न शुभसूचक हैं ॥२३३-२३६॥

अथ शुभस्वप्ना मुहूर्त्तगणपतौ –

**सद्राजा ब्राह्मणा देवाः सिद्धगन्धर्वकिन्नराः।**
**गुरुः श्वेताम्बरा नारी तेषामाशीश्च दर्शनम् ॥२३७॥**
**प्रासादगजशैलानां श्वेतोक्षासनवाजिनाम्।**
**दर्शनं रोहणं लाभः सिंहस्यारोहणं तथा ॥२३८॥**
**छत्रध्वजसुवर्णाब्जरत्नरौप्यदधीनि च।**
**यवगोधूमसिद्धार्थाः फलं दीपश्च कन्यकाः॥२३९॥**
**श्रीखण्डाक्षतदूर्वेक्षुदर्पणाः पुष्पितद्रुमाः।**
**लाभो वा दर्शनं चैषां लाभः सौख्यं भवेद्यशः॥२४०॥**
**भोजनं रोदनं वीणावादनं नौः प्ररोहणम्।**
**अगम्यागमनं विष्ठालेपनं शस्तमीरितम् ॥२४१॥**
**आरूढो यो हि जागर्ति सपुष्पं फलितं द्रुमम्।**
**दुष्टः श्वेताहिना दक्षे करे स्यात्स महाधनः॥२४२॥**

रुधिरस्नानपाने च सर्पदंशो मृतिर्निजः।
शय्याहर्म्यासनानां च ज्वलनं स्वशिरश्छिदा ॥ २४३॥
रक्तस्रावो जलैः स्नानं मरणं मांसभक्षणम्।
सुरायाः पयसः पानं प्रशस्तं पायसाशनम् ॥ २४४॥
कदलीकल्पवृक्षाश्च तीर्थं गङ्गादिकं सरित्।
तोरणं भूषणं राज्यं स्वान्त्रैश्च ग्रामवेष्टनम् ॥ २४५॥
वेदवाद्यादिनिर्घोषो गर्त्तान्निःसरणं तथा।
दंशो वृश्चिककीटानां तडागोद्यानदर्शनम् ॥ २४६॥
पीतं रक्तं फलं पुष्पं स्वप्ने प्राप्नोति यो नरः।
लभते सोऽचिरात्स्वर्णं पद्मरागमणिं तथा ॥ २४७॥
जयो द्यूते रणे वादे पुरुहूतध्वजेक्षणम्।
आत्मनो बन्धनं शीर्षबाहोरानन्त्यमुत्तमम् ॥ २४८॥
अभिषेककरो विप्रो देवो वा छत्रधारणम्।
कुरुते महिषी सिंही गोगजीस्तन्यपानकम् ॥ २४९॥
स्वनाभौ तृणवृक्षाम्बुपुष्पाणामुद्भवस्तथा।
भुवो भूमिधरस्यापि क्रमणोत्क्षेपणं शुभम् ॥ २५०॥
मणिसौवर्णरौप्याणां पात्रे वाम्भोजिनीदले।
योऽश्नाति पायसं स्वप्ने स राज्यमधिगच्छति ॥ २५१॥
हस्तिनीवडवानाञ्च गवांश्च प्रसवो गृहे।
सिद्धानां भूमिपालानां सुहृदामपि दर्शनम् ॥ २५२॥
उरगो वृश्चिकश्चैव जलौका दंशते यदि।
विषयं चार्थलाभं च पुत्रलाभं च निर्दिशेत् ॥ २५३॥
मनुष्याणां च मांसानि स्वप्नान्ते यश्च भक्षयेत्।
हरितालेऽथवा पङ्के फलं तस्य निगद्यते ॥ २५४॥

पादे पञ्चशतं लाभः सहस्रं बाहुभक्षणे।
राज्यं शतसहस्रं च लभेन्मस्तकभक्षणे॥२५५॥
स्वान्त्रेण वेष्टितो यस्तु गृहो जनपदोऽथवा।
देशो वा मण्डलो राज्यं तस्य स्यादीश्वरो नरः॥२५६॥
गौर्लिङ्गी ब्राह्मणो राजा पिता मित्रं च देवताः।
यद्वदेत्सदसत्स्वप्ने तत्तथैवोपजायते॥२५७॥
पूजितं शिवलिङ्गं च देवता वा यथाविधि।
स्वप्ने दृष्टाः प्रयच्छन्ति नराणां विपुलं धनम्॥२५८॥
त्यक्त्वा तक्रं च कर्पासं श्वेतं सर्वं शुभं मतम्।
सर्वं कृष्णमसद्धित्वा गोदेवांश्च गजद्विजान्॥२५९॥

प्रकारान्तर – स्वप्न में सतुरुष, राजा, ब्राह्मण, देवता, सिद्ध, गन्धर्व, किन्नर, गुरु, श्वेत वस्त्र धारण की हुई स्त्री का दर्शन, देवमंदिर, हाथी, पर्वत, श्चेत बैल, आसन, घोड़ा – इनका दर्शन, इन पर चढ़ना या लाभ, छत्र, ध्वजा, सुवर्ण, कमल, रत्न, चाँदी, दही, यव, गेहूँ, सरसो, फल, दीपक, कन्या, चन्दन, अक्षत, दूर्वा, ईख, दर्पण, पुष्पित वृक्ष – इनका दर्शन या लाभ से द्रव्य लाभ, सुख तथा यश मिलता है। भोजन, रोदन, वीणावादन, नाव पर चढ़ना, अगम्य-गमन व विष्ठा से अनुलिप्त होना शुभसूचक है। फूले-फले वृक्ष पर चढ़कर जागना, दाहिने हाथ में श्वेत सर्प-दंश – महाधनी होने की सूचना है। रुधिर में स्नान, रुधिरपान, सर्पदंश, अपनी मृत्यु-शय्या, महल, आसन का जलना, अपने शिर का कटना, शरीर से रुधिर निकलना, जल से स्नान, मांसभोजन, मद्यपान, जलपान, खीर खाना – ये स्वप्न शुभ होते हैं। केला, कल्पवृक्ष, तीर्थ, गंगादि नदी, तोरण, भूषण, राज्य, शुभ अन्नों से घिरा ग्राम, वेदध्वनि, वाद्यशब्द, गड्ढे से निकलना, बिच्छू, कीट का काटना, तड़ाग-बगीचा दीखना, पीले-लाल फल-फूलों का प्राप्त होना – यह सब देखने से सुवर्ण-मणि आदि उत्तम वस्तु का शीघ्र लाभ, जुआ, विवाद, युद्ध में

विजय तथा इन्द्रध्वज दर्शन, अपना बंधन, अपने शिर व भुज को बहुसंख्यक देखना – ये स्वप्न उत्तम हैं। छत्र धारण किया हुआ, अभिषेक करने वाला ब्राह्मण या देवता, भैंस, व्याघ्री, गो, सिंहनी के दूध का पान, अपनी नाभि से तृण, वृक्ष, जल, पुष्प उत्पन्न होना, पृथ्वी, पर्वत का ऊपर उड़ना – ये स्वप्न शुभ हैं। मणि, सुवर्ण, चाँदी के पात्र, कमल के पत्ते पर खीर खाना या देखना – राज्य अथवा अभीष्ट वस्तु की उपलब्धि है। गो, संन्यासी, ब्राह्मण, राजा, पिता, मित्र, देवता – इनमें कोई स्वप्न में जो भी इष्टानिष्ट बुरा-भला कहे वैसा ही फल मिलता है। शिवलिंग या देवता का यथाविधि पूजन व दर्शन विपुल धनप्राप्ति की सूचना है। मट्ठा व कपास छोड़ सम्पूर्ण श्वेत वस्तु शुभ मानी गई है। गो, देवता, हाथी, ब्राह्मण को छोड़ शेष सभी काली वस्तु अशुभ है ॥२३७-२५९॥

अथाशुभस्वप्ना विष्णुपुराणे –

**मलिनाम्बरधारित्वमभ्यङ्गं पङ्कदिग्धता।**
**उच्चात्प्रपतनं चैव दोलारोहणमेव च ॥२६०॥**
**शक्रध्वजस्य पतनं पतनं शशिसूर्ययोः।**
**देवद्विजादिभूपानां प्रजानां क्रोध एव च॥२६१॥**
**आलिङ्गनं कुमारीणां प्राणिनां चैव मैथुनम्।**
**दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा ॥२६२॥**
**फलापहारश्च तथा शाड्वलानां विशोधनम्।**
**ग्रहाणां चैव भङ्गश्च ग्रहसंमर्द्दनं तथा॥२६३॥**
**क्रीडा पिशाचक्रव्यादवानराश्वतरैरपि।**
**काषायवस्त्रधारित्वं तद्वत्क्रीडनके तथा ॥२६४॥**
**स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्।**
**एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत्॥२६५॥**

अशुभ स्वप्न विष्णुपुराण के अनुसार – मलिन वस्त्रधारी, अभ्यंगलिप्त शरीर, पंकलिप्त व्यक्ति, ऊँचे से गिरना, दोलारोहण, इन्द्रध्वज, सूर्य व चन्द्रमा का गिरना, देव, ब्राह्मण, राजा व प्रजा का क्रोध, कुमारी या किसी प्राणी का आलिंगन व दक्षिण दिशा का गमन व्याधिभय की सूचना है। फल तोड़ना, घास-खर निकालना (उखाड़ना), ग्रहों का भंग (भूमि पर ग्रहों का पतन), ग्रहसंघर्ष, पिशाच, राक्षस (अपक्व मांसभक्षी प्राणी), वानर, अश्वतर (खच्चर) से क्रीड़ा करना या इनकी क्रीड़ा, काषाय-वस्त्र-धारण अथवा काषायवस्त्रधारी से क्रीड़ा करना, तेल-पान या स्नान, लाल मालाधारण अथवा लाल अनुलेपन (उबटन) लगाना – इतने दुःस्वप्न हैं, अथवा अन्य भी प्राकृतिक कार्यविरुद्ध दुःस्वप्न हो सकते हैं ॥२६०-२६५॥

अन्यच्चाह पराशरः –

**कायस्यालेपनं वा कलुषजलमषीगोमयस्नेहपङ्कै -**
**र्दृग्जिह्वादन्तबाहुप्रपतनमथवानर्थशोकप्रदानि।**
**गीतक्रीडितभूषितप्रहसितप्रेताः पिशाचास्तथा**
**वार्केन्द्रध्वजतारकानिपतनं विघ्नस्य हेतोस्ततः॥२६६॥**

दूषित गन्ध जल, मषी, गोमय, तेल व कीचड़ से शरीर में लेपन, जिह्वा, दाँत, बाहु का गिरना, अपने शरीर से अलग होना – ये स्वप्न अनर्थ, शोककारक होते हैं। प्रेत, पिशाचों का गाना, क्रीड़ा, प्रहसन, सूर्य, इन्द्रध्वज, तारा का पतन – ये स्वप्न विघ्न के सूचक हैं ॥२६६॥

वराहमिहिरोऽपि योगयात्रायाम् –

**हरिणारोहे भ्रमणं मृत्युर्न चिरेण शूकरारोहे।**
**उष्ट्रारोहे व्याधिर्वृद्धिः स्यात्कुञ्जरारोहे॥२६७॥**

वराहोक्त स्वप्नफल – सिंह पर सवार होकर घूमना भ्रमण होता है; किन्तु शूकर पर आरोहण से शीघ्र मृत्यु की सूचना है। उष्ट्र पर आरोह (चढ़ना) व्याधि, हाथी पर चढ़ना वृद्धि की सूचना है ॥२६७॥

मार्कण्डेयः –

**वान्त्यां मूत्रपुरीषे तु सुवर्णं रजतं तथा।**
**प्रत्यक्षमथवा स्वप्ने जीवेत दशमासिकम् ॥ २६८॥**
**करालैः विकटैः कृष्णैः पुरुषैरुद्यतायुधैः।**
**पाषाणैस्ताड्यते स्वप्ने सद्यो मृत्युं लभेन्नरः॥ २६९॥**
**केशाङ्गारं तथा भस्म उरगं निर्जलां नदीम्।**
**दृष्ट्वा स्वप्ने दशाहात्तु मृत्युरेकादशे दिने ॥ २७०॥**
**रक्तकृष्णाम्बरधरा गायन्ती हसती यदि।**
**दक्षिणाशां नयेन्नारी स्वप्ने सोऽपि न जीवति ॥ २७१॥**
**यस्तु प्रावरणं शुक्लं स्वप्ने पश्यति मानवः।**
**कृष्णरक्तमपि स्वप्ने तस्य मृत्युरुपस्थितः ॥ २७२॥**
**उपद्रवन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽपि वा।**
**वानरो वा वराहो वा तस्य मृत्युर्न संशयः॥ २७३॥**

मार्कण्डेय मुनि के अनुसार – मूत्र, पुरीष का वमन अथवा सुवर्ण, चाँदी का वमन या प्रत्यक्ष-अप्रत्यक्ष भूलना दिखाई देने पर १० मास आयु शेष की सूचना है।कंकाल, विकराल़ काले पुरुष शस्त्र या पाषाण से मारते हुये दिखाई देने पर शीघ्र मृत्यु का लक्षण है। केश, कोयला, राख, सर्प, निर्जल नदी स्वप्न में दिखाई दे तो दशवें या ग्यारहवें दिन मृत्यु होगी। लाल, काला वस्त्र धारण करके गाती-हँसती हुई स्त्री यदि दक्षिण दिशा में ले जाती हुई अपने को दिखाई देने पर जीवित रहना संभव नहीं है।जो श्वेत, काला, लाल आवरण (चाँदनी) स्वप्न में देखता है, उसके जीने में भी संदेह है। सींग व दाँत वाला प्राणी, वानर, शूकर उपद्रव करते दिखाई दें तो भी जीने में संदेह है ॥२६८-२७३॥

अथाशुभस्वप्नाः मुहूर्त्तगणपतौ –

तैलाभ्यक्तोऽथ दिग्वासा आरूढो महिषं खरम्।
उष्ट्रं कृष्णं वृषं वाश्वं याम्यां गच्छन्न जीवति ॥२७४॥
पाकस्थाने वने रक्तपुष्पाढ्ये सूतिकागृहे।
विकलाङ्गो विशेत्स्वप्ने सोऽसुभिर्विप्रयुज्यते ॥२७५॥
जतुकुङ्कुमसिह्लादिधातवो यस्य मन्दिरे।
पतन्ति तरुतस्तस्य गेहदाहश्च चौरभीः ॥२७६॥
नाभेरन्यत्र गात्रेषु तृणपुष्पद्रुमोद्गमः।
खरोष्ट्रकपिसर्पाद्यैर्यानं स्नेहस्य भक्षणम् ॥२७७॥
कलुषेणाम्बुना मस्या कर्द्दमैर्गोमयेन च।
स्नेहेन वपुषो लेपः कर्द्दमे विनिमज्जनम् ॥२७८॥
पातो दृग्दन्तहस्तस्य जिह्वायाश्चान्त्रयोस्तथा।
एते शोकप्रदाः स्वप्ना दृष्टा हानिकरा अपि ॥२७९॥
स्वप्ने सान्दोलनं गीतं क्रीडितं स्फोटितं तथा।
हसितं भर्त्सितं स्रोतोवहानीरे ह्यधोगतम् ॥२८०॥
सूर्येन्दुध्वजताराणां पातः स्वस्य चितापि वा।
रज्ज्वा छेदः शिरोभागे कांस्यवर्णस्य धारणम् ॥२८१॥
प्रवेशो जननीगर्भे दृष्टमेतदनिष्टदम्।
करवीरमशोकं च लतापाशेन बन्धनम् ॥२८२॥
कृष्णाम्बरधरा योषालिङ्गनं मृत्युकारकम्।
आरुह्य पुष्पितान्वृक्षान्यो विचिन्त्य निजं वपुः ॥२८३॥
भूषयत्यरुणैः पुष्पैः सोऽपि प्राणैर्वियुज्यते।
धृतरक्ताम्बराश्लिष्टो हत्यामाप्नोति मानवः ॥२८४॥

**यस्तु धूमितमात्मानं व्याप्तं धूमेन वेक्षते।**
**भस्माज्यलोहलाभं च स च लक्ष्म्या वियुज्यते॥२८५॥**
**क्रोष्टुकुक्कुटमार्जारगोधावभ्रुभुजङ्गमाः।**
**मक्षिकावृश्चिकादंशा दृष्टाः स्वप्ने न शोभनाः॥२८६॥**

मुहूर्त्तगणपति के अनुसार अशुभ स्वप्न –

तेल लगाकर नग्न भैंस, गर्दभ, ऊँट, काले बैल व काले घोड़े पर चढ़कर दक्षिण जाता हुआ स्वप्न देखे तो भी उसके जीने में सन्देह है। भोजनालय या लाल फूलों से परिपूर्ण वन व सूतिकागृह में अंग-भंग पुरुष प्रवेश करते दिखाई देने पर मृत्यु होती है। जिसके घर में वृक्ष से लाख, केसर, पत्थर व जस्ता आदि धातु गिरे तो उसके घर में आग लगे व चोरी हो।

नाभि को छोड़ किसी भी अंग से तृण-वृक्ष-पुष्प उत्पन्न हो या गदहा, ऊँट, बंदर, सर्प पर चढ़कर यात्रा करे या तेल, घी का पाना या मैल, अशुद्ध जल, स्याही, चर्बी, कीचड़, गोबर, तेल, घी से स्नान करे या कीचड़-दलदल में फँस जाय, नेत्र-दाँत-हाथ गिर जाय व अपनी तीन जीभ दिखाई दे तो शोक-भय आने वाला है। झूलना, गाना, खेलना, फोड़ना, हँसना, ललकारना या नदी में डूबना, अपनी चिता में सूर्य, चन्द्रमा, ध्वजा, तारा का गिरना, रस्सी से शिर कटना, काँसे के वर्ण की कोई वस्तु धारण करना, माता के गर्भ का प्रवेश दुष्ट स्वप्न व रोग-भयदायक हैं। कनेर, अशोक वृक्ष की लताओं (की फाँसी में) से बँध जाना, काले वस्त्र वाली स्त्री का आलिंगन मृत्यु-सूचक है। पुष्पित वृक्ष पर चढ़कर अपने को देखना, लाल पुष्पों से सजाता हुआ देखें तो मृत्युकारक है। लाल वस्त्रधारी पुरुष के शरीर से अपने को लिपटा हुआ देखे तो किसी की हत्या का अभियोग लगता है। अपने को धूम के समान अथवा धूम से लिप्त या भस्म, घी, लोहा व लाख देखे तो लक्ष्मी की हानि होती है। शृगाल (गीदड़), मुर्गा, बिलाव, गोह, नेवला, सर्प, मक्खी, बिच्छू-डंस देखे तो शुभ नहीं है॥२७४-२८६॥

रत्नद्रव्यायुधो यानशय्याश्ववरयोषिताम्।
वस्त्रादिप्रियवस्तूनामपहारोऽर्थनाशकः ॥२८७॥
विवाहोत्सवयोः शोको भ्रंशो वा नखकेशयोः।
कराद्यवयवानां तु छेदने नाशकृद्भवेत् ॥२८८॥
वपनं श्मश्रुकेशानां नेत्ररुक्पतनं तथा।
कूपगर्तदरीध्वान्तविवरेषु न शोभनम् ॥२८९॥

द्रव्य, रत्न, शस्त्र, सवारी (वाहन), शय्या, स्त्री, वस्त्रादि प्रिय वस्तु की चोरी हो जाय या कोई छीन ले तो द्रव्य की हानि होती है। स्वप्न में विवाह उत्सव देखना, शोक, अपने किसी अंग का कटा देखना आत्मा का हनन होता है। मूँछ, दाढ़ी के बाल कटवाना, नेत्ररोग, कूप, गड्ढा, गुफा, अंधकार, बिल में गिर जाना शुभ नहीं होता है ॥२८७-२८९॥

कपोतश्येनगृध्राद्या ऋक्षकौशिकवायसाः।
शृगालशशकश्वानो दृष्टाः स्वप्ने न शोभनाः ॥२९०॥
शष्कुलीकृशराश्राणागुडापूपादिभक्षणम्।
गोमयं चोष्णपानीयं स्वप्ने पीतं न शोभनम् ॥२९१॥
रक्ते पुरीषनेत्रे वा स्रवन्मृत्युमवाप्नुयात्।
रक्तकृष्णानि वासांसि पुष्पाणि च बिभर्त्ति यः ॥२९२॥
पितृकार्यं प्रकुर्वाणो म्रियते स न संशयः।
भूतप्रेतपिशाचाद्यैः श्वपचैः सह संगतः ॥२९३॥
आहतो वाथ तैर्याम्यां स्वल्पाहैर्म्रियते तु सः।
असूर्यं दिवसं रात्रिं विचन्द्राङ्गततारकाम् ॥२९४॥
वृष्टिं योऽकालजां पश्येत्स्वप्ने सोऽपि विनश्यति।
सीसपित्तलकस्तारकांस्यताम्रायसंवपुः ॥ २९५॥

शुष्कवृक्षौषधं शिल्पी दृष्टाश्चैते न शोभनाः।
प्रासादछत्रभूमीन्द्रशिखराणां ध्वजस्य च ॥२९६॥
पतनं शक्रचापस्य नृपराष्ट्रविनाशकृत्।
तारं कोलाहलाह्वाननिन्दाक्रोशादिसम्भवान् ॥२९७॥
विन्याद्राजभयं दंष्ट्रिशृङ्गीकीशाद्यभिद्रवान्।
ये दृष्टाः स्वं प्रति स्वप्नाः स्वस्यैव फलदाश्च ते।
परं प्रति च ते तस्य फलदाः किञ्चिदात्मनि ॥२९८॥

कबूतर, बाज (श्येन), गिद्ध, ऋक्ष (भालू), उल्लू प्रभृति पक्षी तथा शृगाल, खरहा, कुत्ता देखना शुभ नहीं है। कचौड़ी, पूड़ी, पूआ, खिचड़ी, गुड़, पक्वान्न का भक्षण, गोबर, गरम पानी का पीना शुभ नहीं है। विष्ठा, मूत्र में रुधिर निकलता हुआ देखना मृत्युकारक है।

लाल-काला मिश्रित या लाल मात्र धारण करना, श्राद्ध करता हुआ अपने को देखे तो निश्चय मृत्यु होती है।

भूत, प्रेत, पिशाच, श्वपच से मिलना या भूतों के हाथ खींचकर दक्षिण दिशा में ले जाना – यह देखना थोड़े दिनों के अन्तराल से मृत्यु की सूचना है।

बिना सूर्य के दिन अथवा बिना चन्द्र के रात्रि या वर्षा ऋतु के बिना वर्षा देखना मृत्यु होना है। शीशा, पीतल, जस्ता, काँसा, ताँबा, लोहा, राँगा, सूखा वृक्ष, औषधि, बढ़ई देखना अशुभ है। देवमंदिर, छत्र, पर्वत, शिखर, ध्वजा, इन्द्रधनुष का पतन, राज्य का विनाश, उच्च शब्द कोलाहल, बुलाने का शब्द, निन्दा या आक्रोश का शब्द सुनने से राजभय होता है। अपने को भयोत्पन्न करते (डरवाते) हुये सींग वाला पशु व वानरों को देखना अपने लिए हानिकारक है। यदि दूसरे के प्रति देखें तो उसकी विशेष व अपनी थोड़ी हानि है ॥२९०-२९८॥

अथाङ्गस्फुरणं वसन्तराजे –

ब्रूमोऽधुनाङ्गस्फुरणस्य सम्यक् प्रत्येकमध्यक्ष[1]फलप्रभावम् ।
सर्वस्य यत्रावगते स्वदेहादुत्पद्यते कर्मविपाकसंवित् ॥ २९९॥

मूर्ध्नि स्फुरत्याशु पृथिव्यवाप्तिः स्थानप्रवृद्धिश्च ललाटदेशे ।
भ्रूघ्राणमध्ये प्रियसङ्गमः स्यान्नासाक्षिमध्ये च सहायलाभः ॥ ३००॥

दृगन्तमध्ये स्फुरणेऽथ सम्पत्सोत्कण्ठितः स्यात्स्फुरणे दृगादौ ।
जयो दृशोऽधः स्फुरणे रणे स्यात्प्रियश्रुतिः प्रस्फुरिते च कर्णे ॥ ३०१॥

योषित्समृद्धिः स्फुरिते च गण्डे घ्राणे च सौरभ्यमुदौ भवेताम् ।
भोज्येष्टसङ्गावधरोष्ठयोश्च स्कन्धे गले भोगविवृद्धिलाभौ ॥ ३०२॥

स्पन्दो भुजस्येष्टसमागमाय स्पन्दः करस्य द्रविणाप्तिहेतुः ।
स्पन्दश्च पृष्ठस्य पराजयाय स्पन्दो जयायोरसि मानवानाम् ॥ ३०३॥

पार्श्वप्रकम्पे भवति प्रमोदः स्तनप्रकम्पे विषयस्य लाभः ।
कटिप्रकम्पे तु बलप्रमोदौ नाभिप्रकम्पे निजदेशनाशः ॥ ३०४॥

धनर्द्धिरत्र प्रभवे प्रकम्पे दुःखं धनान्तं हृदयस्य चातः ।
स्फिक्पायुकम्पेऽपि च वाहनाप्तिर्वराङ्गकम्पे वरयोषिदाप्तिः ॥ ३०५॥

मुष्के सकम्पे तनयस्य जन्म वस्तौ सकम्पे युवतिप्रवृद्धिः ।
दोषः प्रकम्पे पुनरूरुपृष्ठे ऊरोः पुरः स्यात्सुसहायलाभः ॥ ३०६॥

स्याज्जानुकम्पे ह्यचिरेण सन्धिर्जंघाप्रकम्पेऽपि च लाभनाशः ।
स्थानाप्तिरूर्ध्वं चरणस्य कम्पे यात्रा सलाभाङ्घ्रितलस्य कम्पे ॥ ३०७॥

---

१. अध्यक्षः प्रत्यक्षोपलभ्यमानः ।

**पुंसां सदा दक्षिणदेहभागे स्त्रीणां च वामावयवेषु लाभः।**

**स्पन्दाः फलानि प्रदिशन्त्यवश्यं निहन्ति चोक्ताङ्गविपर्ययेण ॥ ३०८॥**

अंग के स्फुरण का प्रत्यक्ष प्राप्त होने वाला फल कहता हूँ, जो अपने शरीर का कर्मजनित फल होगा।

मूर्ध्निस्फुरण से शीघ्र भूलाभ, ललाट स्फुरण से स्थानप्राप्ति, इत्यादि चक्र (पृष्ठ-८८) से फल स्पष्ट करें।

यह स्पन्दन पुरुष के दाहिने और स्त्री के वामांग के स्फुरण का समान फल है व उक्तांग के विपरीत अवस्था में अवश्य उक्त फल की हानि होती है ॥२९९-३०८॥

अथ मशकतिलकनखचिह्नफलानि वसन्तराजे–

**मशकं तिलकं पिटकं वापि व्रणमथ चिह्नं किमपि कदापि।**

**स्फुरति पदान्यधितिष्ठति यावत्स्यात्पूर्वोक्तं फलमपि तावत् ॥ ३०९॥**

शरीर में मशकादि चिह्नों का फल–

मशा, तिल या किसी प्रकार का कोई लक्षण व्रण (फुंसी) या अन्य प्रकार का चिह्न पूर्वोक्त स्फुरित अंगों में जब तक दिखाई देता है, तब तक स्फुरण अंग संबंधी फल (जो उस अंग के स्फुरण का फल है) होगा; क्योंकि मशकादि चिह्न स्थायी नहीं हैं ॥३०९॥

**बिन्दव उज्ज्वलवर्णा यस्य स्युर्यावन्नखरेषु नरस्य।**

**दुःखं तावन्नश्यति तस्य प्रतिदिनजातसुखातिशयस्य ॥ ३१०॥**

मानव के नखों के ऊपर श्वेत बिन्दु जब तक दिखाई दे, तब तक दुःख की परम्परा बनी रहेगी, चिह्न नष्ट होने के बाद उत्तरोत्तर सुखातिशय की वृद्धि होगी ॥३१०॥

## अङ्ग-स्फुरण-फल-चक्र

| स्थान | फल | स्थान | फल | स्थान | फल |
|---|---|---|---|---|---|
| शिर | शीघ्र भूलाभ | ललाट | स्थान-लाभ | भ्रूमध्य | मित्रागम |
| नासिका व नेत्रों के बीच नेत्रकोणद्वय | सहयोग-लाभ | नेत्रान्तद्वय | सम्पत्ति-लाभ | नेत्र के ऊपर दोनों पलक | अभीष्ट वस्तु-लाभ |
| नेत्र के नीचे दोनों पलक | विजय | कर्ण | प्रियश्रुति | कपोल | स्त्रीप्राप्ति |
| नासिका | सुगन्ध-लाभ | अधरोष्ठ के दोनों भाग | मित्र के साथ भोजन | स्कन्ध | भोगोपलब्धि |
| ग्रीवा | लाभ | भुजा | इष्टसमागम | हस्त | द्रव्य-लाभ |
| पृष्ठ | पराजय | वक्षःस्थल | विजय | उदरक्रोड | प्रमोदप्राप्ति |
| स्तन | विषय-लाभ | कटि | प्रमोद-बल | नाभि | अपनी हानि |
| अन्त्र (आँत) | धन की वृद्धि | हृदय | दुःख | उदर | धनहानि |
| गुदा | वाहन-लाभ | ललाट | वरांगनाप्राप्ति | वृषण | पुत्र-लाभ |
| उरु-पृष्ठ | दोष | उरु के आगे | मित्र-लाभ | जानु | शीघ्र सन्धि |
| जंघा | हानि | चरण के ऊपर | स्थानप्राप्ति | चरणतल | यात्रा करना |

अथ पल्लीपतनसरटारोहणयोः फलम् –

**त्रिबाणाङ्गमुनीशार्कसंमितास्तिथयः शुभाः।**

**वासराः सोमशुक्रेज्यबुधाः शुभकराः सदा॥३११॥**

**पुष्याश्विरोहिणीद्वन्द्वं पुनर्भोफाकरत्रयम्।**

**धनिष्ठान्त्यानुराधाख्यं शतभं च शुभप्रदम्॥३१२॥**

**लग्नेषु मेषसिंहालिमकराश्च धनुस्तुला।**

**इतोऽन्ये विनिषिद्धाः स्युः पल्लीपाते नृणां सदा॥३१३॥**

पल्लीपतन व गिरगिट के आरोह (चढ़ने) का फल –

पल्लीपतन या सरट के आरोहण में ३।५।६।७।११।१२ तिथियाँ, सोम, बुध, गुरु व शुक्र का दिन और पुष्य, अश्विनी, रोहिणी, मृगशिरा, पुनर्वसु, उत्तराफाल्गुनी, हस्त, चित्रा, स्वाती, धनिष्ठा, रेवती, अनुराधा, शतभिषा नक्षत्र एवं सिंह, धनु, वृश्चिक, मकर, तुला लग्न शुभ हैं॥३११-३१३॥

**पल्ल्याः प्रपतने चैव सरटस्य प्ररोहणे।**

**समं फलं विजानीयाद्व्यत्यये निष्फलं भवेत्॥३१४॥**

**दक्षिणाङ्गे शुभं पुंसां वामाङ्गे तु मृगीदृशाम्।**

**सरटस्य प्रपाते च पल्ल्यारोहे वृथा फलम्॥३१५॥**

पल्ली के पतन (गिरने) व सरट के चढ़ने का ही अंग विशेष के समान फल होता है। विपरीत अवस्था (पल्ली के चढ़ने व गिरगिट के गिरने) का कोई फल नहीं है। पतन, आरोहण पुरुष के दाहिने व स्त्री के वाम भाग में शुभ है॥३१४-३१५॥

**जन्मर्क्षे मृत्युयोगे च दग्धे विष्ट्यादिदूषिते।**

**लग्ने पापयुते चन्द्रेऽष्टमेऽरिष्टं प्रजायते॥ ३१६॥**

जन्मनक्षत्र, मृत्यु योग, दग्ध व भद्रा से दूषित तिथि, लग्न में पापग्रह, अष्टम में चन्द्रमा के समय पतन, आरोहण से अरिष्ट की सूचना है॥३१६॥

अथ पल्लीपतनेऽङ्गफलमाह नारदः –

**शीर्षे राज्यश्रियोऽवाप्तिर्नेत्रयोर्भयदर्शनम्॥ ३१७॥**

**नासिकायां तु सौभाग्यं वक्त्रे मिष्टान्नभोजनम्।**

**कण्ठे नित्यं प्रियावाप्तिः स्कन्धयोर्विजयीभवेत्॥ ३१८॥**

**धनलाभो बाहुयुग्मे करयोस्तु व्ययस्तथा।**

**स्तनयुग्मे तु सौभाग्यं हृदि सौख्यविवर्द्धनम्॥ ३१९॥**

**कुक्षौ सत्पुत्रलाभश्च नाभौ सौख्यप्रवर्द्धनम्।**

**पृष्ठे नित्यं महालाभः पार्श्वयोर्बन्धुदर्शनम्॥ ३२०॥**

**कटिद्वयोर्वस्त्रलाभो गुह्ये मित्रसमागमः।**

**जंघयोरर्थहानिः स्याद् गुदे रोगभयं भवेत्॥ ३२१॥**

**ऊरुयुग्मे वाहनाप्तिर्जानुयुग्मेऽर्थसङ्ग्रहः।**

**नीरोगी जंघयोश्चैव पादयोर्भ्रमणं भवेत्॥ ३२२॥**

**स्पर्शमात्रे तयोः सद्यः सचैलं स्नानमाचरेत्।**

**सद्यो दानं प्रकुर्वीत तिलं माषं सदक्षिणम्॥ ३२३॥**

छिपकली-पतन का अंग-विशेष फल –

शीर्ष पर राज्यश्री की प्राप्ति, ललाट पर ऐश्वर्य, कर्ण पर भूषण, नेत्रों पर भय, नासिका पर सौभाग्यवृद्धि, मुख पर मिष्टान्न भोजन, कण्ठ

पर प्रियप्राप्ति, स्कन्धों पर विजय, दोनों भुजाओं पर धनलाभ, दोनों हाथ पर व्यय, दोनों स्तनों पर सौभाग्यप्राप्ति, हृदय पर सुखवृद्धि, कुक्षि पर सत्पुत्रलाभ, नाभि पर सुख, पृष्ठ पर नित्य विशिष्ट लाभ, दोनों पार्श्व (कोख) पर बन्धुदर्शन, कटि भाग पर वस्त्र-लाभ, लिंग पर मित्रसमागम, जंघों पर अर्थहानि, गुदा पर रोगवृद्धि, उरु पर वाहनप्राप्ति, जानु पर अर्थसंग्रह, जंघों पर आरोग्य, चरण पर भ्रमण होता है। दोनों (सरट व पल्ली) के स्पर्शमात्र से सचैल स्नान व सदक्षिणा तिल, उड़द का दान करना चाहिए ॥३१७-३२३॥

सरटफलं वसन्तराजे –

**एकोऽपि दृष्टः सरटः सदैव निहन्ति कार्याणि समीहितानि।**
**यदि द्वितीयो यदि वा तृतीयो दृश्येत स स्याद्धनजीवनाशः ॥ ३२४॥**
**कुर्वन्ति चोच्चैरधिरुह्य चेष्टां स्नानेन शुद्धिः सरटं निरीक्ष्य।**
**पतत्यकस्मात्तु स यस्य मूर्ध्नि शिवाय तस्याद्भुतशान्तिरुक्ता ॥ ३२५॥**

वसन्तराज के अनुसार सरट-फल –

किसी भी कार्य के अवसर पर एक सरट दिखाई दे तो इष्ट कार्य की हानि है। बारी-बारी से एक के बाद दूसरा व दूसरे के बाद तीसरा दीख पड़े तो धन, जीवन दोनों के नाश का भय है। सरट यदि किसी वस्तु के ऊपर चढ़ने की चेष्टा करे तो विशेष हानि है, सरट देखकर स्नान से शुद्धि हो जाती है, अकस्मात् शिर पर गिर जाय तो कल्याणार्थ अद्भुत शान्ति होनी चाहिए, यद्यपि पतन का कोई फल नहीं है, तब भी शान्ति का आदेश है ॥३२४-३२५॥

## पल्लीपतन व सरट आरोहण-फल-चक्र

| स्थान | फल | स्थान | फल | स्थान | फल |
|---|---|---|---|---|---|
| शीर्ष | राज्यश्री | ललाट | ऐश्वर्य | कर्ण | भूषण |
| नेत्रद्वय | भय | नासिका | सौभाग्य | मुख | मिष्ठान्न |
| कण्ठ | नित्य प्रियवस्तु-लाभ | स्कन्धद्वय | विजय | बाहुद्वय | धनलाभ |
| हस्तद्वय | व्यय | स्तनद्वय | सौभाग्य | हृदय | सुखवृद्धि |
| कुक्षि | सत्पुत्र-लाभ | नाभि | सुख | पीठ | नित्य महालाभ |
| पार्श्व | बन्धु-दर्शन | कटि | लाभ | गुह्यस्थान | मित्रागम |
| दोनों जंघा | अर्थहानि | गुदा | रोगभय | ऊरुद्वय | वाहनलाभ |
| जानुद्वय | अर्थलाभ | दोनों जंघा | आरोग्य-लाभ | चरणद्वय | भ्रमण |

खञ्जनशकुनकालमाह वसन्तराजः –

**दृष्ट्वोदितेऽगस्त्यमुनौ सुदेशे सुचेष्टितं खञ्जनकं विदध्यात् ।**
**मन्त्रेण पूजां शिरसा प्रणामं तत्सूचितस्येष्टफलस्य सिद्ध्यै ॥ ३ २ ६ ॥**

खंजन-शकुन –

मुनि अगस्त्य (तारा) के उदय होने-पर उत्तम स्थान में उत्तम चेष्टा करते हुये यदि खञ्जन (खिड़िरिच) दिखाई दे तो उससे (खञ्जनदृष्ट फल) सूचित इष्ट फल-प्राप्ति के लिए निम्न मन्त्र से पूजा व शिर से प्रणाम करना चाहिए ॥३२६॥

मन्त्र –

**त्वं योगयुक्तो मुनिपुत्रकस्त्वमदृश्यतामेषि शिखोद्गमेन ।**
**विलोक्यसे प्रावृषि निर्गतायां त्वं खञ्जनाश्चर्यमयो नमस्ते ॥ ३ २ ७ ॥**

वाराहसंहितायामपि फलम् –

**खञ्जनको नामायं यो विहगस्तस्य दर्शने प्रथमे।**
**प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि ॥ ३२८॥**

बृहत्संहिता के अनुसार खञ्जन फल –

खञ्जन पक्षी के प्रथम दर्शन से मुनियों ने जो फल कहा है, उसे मैं कहता हूँ ॥३२८॥

**स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः।**
**आकण्ठमुखात्कृष्णः सम्पूर्णः पूरयत्याशाम् ॥ ३२९॥**
**कृष्णो गलेऽस्य बिन्दुः सितकरटान्तः सरिक्तकृद्रिक्तः।**
**पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः ॥ ३३०॥**

खंजन के चार भेद से चार नाम हैं –

१. आकार में बड़ा ऊँचा व काला कण्ठ वाला खञ्जन 'भद्र' नाम का है, यह नाम कल्याणवाची है। भद्र खंजन दृष्ट होकर संपूर्ण आशा की पूर्ति करता है तथा सर्वतोभाव से रक्षा करता है।

२. मुख से गले तक काले खञ्जन को 'सम्पूर्ण' नामा कहते हैं, यह वांछित फल पूर्ण करता है।

३. जिसके गले में काला बिन्दु हो, कपोल श्वेत हो, उसे 'रिक्त' खञ्जन कहते हैं, यह रिक्त शून्य फल करता है, सर्वत्र शून्यता रहती है।

४. जो पीत रंग का है, उसे 'गोपीत' नामक खञ्जन कहते हैं। यह दीखने पर क्लेश का सूचक है ॥३२९-३३०॥

**अथ मधुरसुरभिफलकुसुमतरुषु सलिलासयेषु पुण्येषु।**
**करितुरगभुजगमूर्ध्नि प्रासादोद्यानहर्म्येषु ॥ ३३१॥**
**गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे।**
**हस्तितुरङ्गमशालाछत्रध्वजचामराद्येषु ॥ ३३२॥**
**हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु।**
**दधिपात्रधान्यकूटेषु च श्रियं खंजनः कुरुते ॥ ३३३॥**

मीठे फलवाले वृक्ष, सुगन्धित पुष्प वाले वृक्ष, लता, पुण्य जलाशय-स्थान, हाथी, घोड़ा, सर्प के शिर पर प्रासाद, उद्यान, सुन्दर भवन, अट्टालिका, गोशाला, सत्संगभवन, वेदपाठस्थान, यज्ञस्थल, उत्सवस्थान, राजा, ब्राह्मण के समीप, हथिसार, घोड़सार, छत्र, ध्वज, चामर आदि मांगलिक चिह्नों के स्थलों पर सुवर्ण के समीप श्वेतवस्त्र, कमल, नीलोत्पल, पूजास्थल, लेपनादि संस्कृतभूमि पर दधिपात्र, धान्यराशि पर बैठा हुआ खञ्जन देखना शुभफलकारी होता है ॥३३१-३३३॥

**पङ्के स्वाद्वन्नाप्तिर्गोरससम्पच्च गोमयोपगते।**
**शाड्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः॥ ३३४॥**
**गृहपटलेऽर्थभ्रंशो वधे बन्धोऽशुचौ भवति रोगः।**
**पृष्ठे त्वजाविकानां प्रियसङ्गममावहत्याशु॥ ३३५॥**
**महिषोष्ट्रगर्दभास्थिश्मशानगृहकोणशर्करादिस्थः।**
**प्राकारभस्मकेशेषु चाशुभो मरणरुग्भयदः॥ ३३६॥**
**पक्षौ धुन्वन्नशुभः शुभः पिबन्वारि निम्नगासंस्थः।**
**सूर्योदयेऽथ शस्तो नेष्टफलः खञ्जनोऽस्तमये॥ ३३७॥**
**तस्मिन्निधिर्भवति मैथुनमेति यस्मिन्**
**यस्मिंस्तु छर्दयति तत्र तलेऽस्ति काचः।**
**अङ्गारमप्युपदिशन्ति पुरीषणेऽस्य**
**तत्कौतुकापनयनाय खनेद्धरित्रीम्॥ ३३८॥**
**मृतविकलविभिन्नरोगितः स्वतनुसमानफलप्रदः खगः।**
**धनकृदभिनिलीयमानको वियति च बन्धुसमागमप्रदः॥ ३३९॥**

पंक कर्दम के स्थान पर बैठा खञ्जन देखने से स्वादु भोजन मिलता है एवं गोबर पर गोरस, सम्पत्ति (दधि, दूध, घृत) की बहुलता होती है।

दूर्वाप्रचुर स्थान में वस्त्र-प्राप्ति होती है, शकट (गाड़ी) पर देखने से (राजा के लिए) देश का नाश होता है, (सामान्य मनुष्य के लिए क्षोभ-जनक हानि होती है), गृह समूह पर देखने से धन का नाश, चर्म के ऊपर बन्धन, अपवित्र भूमि पर रोग, बकरे के पृष्ठ पर शीघ्र अभीष्ट की प्राप्ति होती है।

भैंस, ऊँट, गदहा, श्मशान, मकान के कोण, धूलसमूह (मिट्टी के ढेर), (वस्तु विक्रय स्थान, भित्ति). भस्म, केश स्थानों में खंजन देखने से रोग व मृत्यु का भय होता है।

पंखों को डोलाते (पंख धुन्वान) हुए देखने से शुभस्थान फल भी अशुभ के रूप में परिणत हो जाता है, नदी या पवित्र जलाशय का जल पीते हुये दृष्ट हो तो अभीष्ट फल की प्राप्ति होती है, उदयकालिक खंजन देखना शुभ व अस्त के समय अनिष्ट फल है।

(नीराजन[1] की समाप्ति के समय जिस दिशा में जाता हुआ खंजन दिखाई दे उस दिशा की यात्रा से शत्रु शीघ्र वश में आ जाता है।)

जिस स्थान में खंजन मैथुन करता है वहाँ निधि है, जहाँ उगलता है वहाँ काँच है, जहाँ वीट करता है वहाँ कोयला है। (प्रत्यक्ष के लिए) उद्दिष्ट स्थान का खनन करके प्रत्यय करें।

मरा खंजन देखने से मृत्यु का भय, अंग-भंग देखने से अपने अंग-भंग का भय, रोगी खंजन देखने से रोगभय, सम्मुख आकर घर में प्रवेश करे तो धनप्राप्ति, आकाश में उड़ते हुये देखने से बंधु-समागम होता है ॥३३४-३३९॥

**नृपतिरपि शुभं शुभप्रदेशे खगमवलोक्य महीतले विदध्यात्।**
**सुरभिकुसुमधूपयुक्तमर्घ्यं शुभमभिनन्दितमेव तेऽतिवृद्धिम् ॥३४०॥**
**अशुभमपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्चने रतः।**
**न नृपतिरशुभं समाप्नुयान्न यदि दिनानि च सप्तमांसभुक् ॥३४१॥**

---

१. नीराजन – सूर्योदयकालिक आरती को कहते हैं।

आवर्षात्प्रथमे दर्शने फलं प्रतिदिनं तु दिनशेषे।
[1]दिक्स्थानमूर्त्तिलग्नर्क्षशान्तदीप्ताभिश्चोह्यम् ॥ ३४२॥
अङ्गारिदीप्तधूमिन्यस्ताश्च शान्तास्ततोऽपरा।
मुक्तप्राप्यैष्यदर्कासु फलं दिक्षु तथाविधम् ॥ ३४३॥
तत्पञ्चमदिशां तुल्यं शुभं त्रैकाल्यमादिशेत्।
परिशेषयोर्दिशोर्वाच्यं यथासन्नं शुभाशुभम् ॥ ३४४॥

राजा शुभ खंजन देखकर शुभप्राप्ति हेतु भूमि पर सुगन्धित पुष्प, चन्दन से अर्घ्य, पूजन व धूप दिखावे तो दृष्ट फल में वृद्धि होती है।

अशुभ खंजन देखने पर एक सप्ताह के अंदर ब्राह्मण, साधु-संत, गुरुजन व देवों की पूजा करके आशीर्वाद ग्रहण करने से अशुभ फल नष्ट हो जाता है।

**विशेष** – खंजन के प्रथम दर्शन का जो फल है, वह एक वर्ष के अंदर फलित (घटित) होता है और बाद में प्रतिदिन के दर्शन का फल उसी दिन सूर्यास्त तक घटित होता है।

दिशा, स्थान, मूर्त्ति (पूर्ववर्णित खंजन स्वरूप), लग्न, नक्षत्रों के अनुसार शुभाशुभ फल का निश्चय करें। अन्य दीप्तादि शान्ता दिशा का भी ऊहापोह करना चाहिए। पक्षी शान्ता, दीप्ता, धूमिता, दग्धा आदि दिशाओं में से किस दिशा में बैठा है और उसके स्वरूप, शब्द, चेष्टा के अनुसार फल का प्रतिपादन करना चाहिए।

पूर्वोक्त रीति से सूर्योदय के प्रथम प्रहर क्रम से अंगारिणी आदि यात्राप्रभोक्त दिशाओं की व्यवस्था के अनुसार खंजन दर्शन के दिशाप्रयुक्त फल का विचार करें।

जैसा कि सूर्योदय के प्रथम प्रहर में ईशानी दिशा अंगारिणी, पूर्वा दीप्ता, अग्नि धूमिता, शेष पाँच दिशा शान्ता होती है, इसी प्रकार प्रहर

---

१. दिक्स्थानमूर्त्यादिलक्षणं यात्राप्रकरणतो बोध्यम्।

क्रम से पूर्वदिशा से अंगारिणी दिशा क्रमशः होती जाएगी। दिन के कालक्रम से जो शांता दिशा होगी, उन्हीं दिशाओं में प्रथम खंजन दर्शन शुभ होगा, शेष तीन दिशा अशुभ हैं ।।३४०-३४४।।

अथ काकरुते वसन्तराजे सूर्योदयफलम् –

**सूर्योदये पूर्वदिशि प्रशस्ते स्थाने स्थितो यो मधुरं विरौति।**
**नाशं रिपोश्चिन्तितकार्यसिद्धिं स्त्रीरत्नलाभं च करोति काकः ।। ३४५।।**
**ध्वांक्षः प्रभाते यदि वह्निभागे विरौति तिष्ठन् रमणीयदेशे।**
**शत्रुः प्रणश्यत्यचिराद्विशस्त्रः प्रयाति योषित्समवाप्यते च ।। ३४६।।**
**रुवन्प्रभाते दिशि दक्षिणस्यां काकः समावेदयतेऽतिदुःखम्।**
**रोगार्त्तमृत्युं परुषस्वरेण रम्येण चेष्टागमयोषिदाप्तिः ।। ३४७।।**
**नैर्ऋत्यभागे च यदि प्रभाते करोति काकः सहसा विरावम्।**
**क्रूरं ततः कर्म किमप्युपैति द्यूतागमे मध्यमिका च सिद्धिः ।। ३४८।।**
**प्रातः प्रतीच्यां यदि रौति काको ध्रुवं तदा वर्षति वारिवाहः।**
**स्त्रीवस्त्रभूभृत्पुरुषागमश्च कलिः कलत्रेण समं तथा स्यात् ।। ३४९।।**
**ध्वांक्षे सशब्दे पवनालयस्थे वस्त्रान्नपानाभिमतागमाः स्युः।**
**पान्थागमो ब्राह्मणवृत्तिनाशः स्यादन्यदेशे गमनं स्वदेशात् ।। ३५०।।**
**दिश्युत्तरस्यां सरवः प्रभाते निरीक्ष्यमाणो बलिभुग्नराणाम्।**
**ददाति दुःखं भुजगाच्च भीतिं दारिद्र्यतां नष्टधनेष्वलाभम् ।। ३५१।।**
**दिगीशवत्यां यदि रौति काक आगच्छतस्तद्वनितान्त्यजाती।**
**व्याधेर्निमित्तं प्रियवस्तुलाभो भवेत्तथा रोगवतोऽवसानम् ।। ३५२।।**
**ब्रह्मप्रदेशे स्थितवायसस्य प्रभातकाले मधुरस्वरेण।**
**अभीप्सितस्यागमनं ध्रुवं स्यात् स्वामिप्रसादो द्रविणस्य लाभः ।। ३५३।।**

काक-शब्द-शकुन –

सूर्योदय के समय पूर्व दिशा में उत्तम स्थान में बैठकर काक यदि मधुर शब्द उच्चारण करता है, तो शत्रु का नाश, चिन्तित कार्य की सिद्धि व स्त्रीरत्न का लाभ होगा।

यदि अग्निकोण में प्रशस्त स्थान में मधुर शब्द करता है, तो बिना शस्त्र शत्रु का नाश व स्त्रीप्राप्ति है।

प्रभातकाल दक्षिण दिशा में परुष स्वर से शब्द करे तो रोग, मृत्यु की सूचना है और यदि मधुर शब्द करे तो इष्ट स्त्री की प्राप्ति होगी।

प्रातःकाल नैऋत्य में सहसा काक शब्द करे, तो क्रूर कर्म होने वाला (आने वाला) है; किन्तु जूआ में आंशिक सफलता मिलेगी। काक यदि प्रातः पश्चिम दिशा में विराव करे तो वर्षा होने वाली है; परन्तु स्त्री से विवाद भी संभव है, काक शब्द करता हुआ वायव्य कोण में बैठा है तो अभीष्ट वस्त्र, अन्नादि का आगम होगा, पथिक आएगा और ब्राह्मण की वृत्ति का नाश तथा अपने देश से अन्यत्र जाने की सूचना है।

यदि प्रातः शब्द (विराव) करता हुआ उत्तर दिशा में दिखाई दे तो दुःख, सर्पभय, दरिद्रता व नष्टद्रव्य का अलाभ है।

यदि प्रातः ईशानकोण में विराव करता है तो अन्य जाति की व्याधि के निमित्त दो स्त्री आएगी, प्रिय वस्तु लाभ व रोग का अवसान होगा, अर्थात् रोगी को रोग से मुक्ति मिल जाएगी, प्रातः ब्रह्मप्रदेश में मधुर शब्द करता हुआ काक दिखाई दे तो अभीष्ट का लाभ व स्वामी के प्रसाद से धन का लाभ होगा। वस्तुतः शब्दार्थ से यह अर्थ सिद्ध नहीं है; परन्तु अभीष्ट लाभ की दृष्टि से फल की संगति हो सकती है ॥३४५-३५३॥

वसन्तराजे काकस्य प्रथमयामफलम् –

**प्राच्यां च यामे प्रथमे सुशब्दः काको भवेच्चिन्तितकार्यसिद्ध्यै।**
**अभीष्टलोकागमनं यथा स्यादिष्टार्थलाभो नियतं नराणाम् ॥३५४॥**

**आग्नेयभागे प्रथमे च यामे स्त्रीलाभविद्वेषि वधौ भवेताम् ।**
**कृतान्तभागे बलिभुग्विरावः स्त्रीलाभसौख्यप्रियसौख्यकारी ॥ ३५५॥**
**नैर्ऋत्यकोणे प्रिययोषिताप्तिर्मिष्टाशनं सिद्ध्यति चिन्तितार्थः ।**
**दिशि प्रतीच्यां विरुतैर्भवितामभ्यर्च्चनीयागमनाम्बुवृष्टी ॥ ३५६॥**
**वायव्यकोणे शुचि सङ्गतिः स्यान्नृपप्रसादोऽध्वगदर्शनं वा ।**
**सौम्ये च भीस्तस्करशोकवार्त्ता सौम्या च वार्त्ता धनलाभवार्त्ता ॥ ३५७॥**
**ईशानकोणेऽभिमतेन सङ्गस्त्रासो हुताशाद्बहुलोकसङ्गः ।**
**ब्रह्मप्रदेशे सुखकामभोगः सन्मानसम्पद्द्रविणेष्टसिद्धिः ॥ ३५८॥**

वसन्तराज के अनुसार काक-विराव –

प्रथम याम में प्रातः पूर्व दिशा में काक यदि मधुर शब्द करता है, तो अभीष्ट व्यक्तियों का आगमन और अभीष्ट वस्तु की प्राप्ति निश्चित है, उसी समय अग्निकोण में शब्द करे तो स्त्रीलाभ व शत्रुभय है, दक्षिण दिशा के काक-विराव से स्त्रीलाभ व प्रिय से सुख मिलेगा ।

नैऋत्यकोण में प्रिय स्त्री की प्राप्ति, मीठा भोजन, अभीष्ट कार्य का लाभ होगा । पश्चिम दिशा के विराव से अभीष्ट व्यक्ति का आगमन व वृष्टि होगी ।

वायव्य में पवित्र व्यक्ति से समागम, राजप्रसाद, अतिथि का दर्शन होगा ।उत्तर में तस्करभय, शोक-वार्ता-श्रवण, शुभ व धनलाभ का संदेश मिलेगा । ईशानकोण में अभीष्ट संगति, ब्रह्मप्रदेश में सुखपूर्वक इच्छित की प्राप्ति, सम्मान, सम्पत्ति व धन का लाभ होगा । ब्रह्मप्रदेश ईशान व पूर्व का मध्य है ॥३५४-३५८॥

अथ काकस्य वसन्तराजे द्वितीययामफलम् –

**प्राच्यां द्वितीये प्रहरे विरावैः काकस्य कश्चित्पथिकोऽभ्युपैति ।**
**चौराद्भयं व्याकुलतातिबद्धी जायेत काचिन्महती च शङ्का ॥ ३५९॥**

हुताशदेशे नियतं कलिः स्यात्प्रियागमाकर्णनयोषिदाप्ती।
याम्ये च भीतिर्महती च वृष्टिः प्रियस्य वैश्यस्य तथागमः स्यात् ॥ ३६०॥
रक्षोदिशि प्राणभयं तथा स्युः स्त्रीभोगलाभाखिलरुक्प्रणाशाः।
भवेत्प्रतीच्यां प्रबलानलाप्तिर्योषागमो वृद्धिसुवर्षणं च ॥ ३६१॥
समीरभागेऽध्वगचौरसङ्गो दूतागमः स्त्रीपिशितान्नलाभः।
सौम्ये धनेष्टागमनं जयश्च रम्ये रवे चौरभयं त्वरम्ये ॥ ३६२॥
महेश्वराशाधिगतश्च काकश्चौराग्निसंत्रासविरुद्धवार्त्ताम्।
ब्रवीति रुक्षै रटितैस्त्वरुक्षैः सभार्यगुर्वागमनं जयश्च ॥ ३६३॥
ब्राह्मप्रदेशे प्रहरे द्वितीये काकः सुशब्दो नृपतिप्रसादम्।
मिष्टान्नभोज्यं च ददाति पुंसां करोत्यसौ चौरभयं कुशब्दः ॥ ३६४॥

काक के द्वितीय याम का फल –

दिन के द्वितीय प्रहर पूर्व दिशा में काक के शब्द से किसी पथिक का आगमन, चोरभय, विशेष व्याकुलता और कोई बड़ी शंका उत्पन्न होगी।

अग्निकोण में झगड़ा, प्रियागम की सूचना, स्त्रीलाभ, दक्षिण में भय, प्रभूत वृष्टि, प्रिय मित्र या वणिक् का आगमन, नैऋत्य में प्राणभय, स्त्रीभोग लाभ और सम्पूर्ण रोग का विनाश होगा, पश्चिम में प्रबल अग्निभय, स्त्री का आगमन और उत्तम वर्षा होगी।

वायव्य के विराव से यात्रा में चौरसंग, सन्देशवाहक, स्त्री, मांस, अन्न का लाभ होगा, उत्तर में मधुर विराव से धन, इष्ट आगमन, विजय व रुक्ष विराव से चौरभय, ईशान में रुक्ष विराव से चोर, अग्निभय, विपरीत वातावरण उत्पन्न और मधुर विराव से सपत्नीक गुरु का आगमन व विजय होता है, ब्रह्मप्रदेश (ईशान-पूर्व का बीच) में यदि काक

मधुर विराव करता है तो राजा का प्रसाद, मिष्ठान्न भोजन मिलता है और रुक्ष शब्द से चौरभय होता है ।।३५९-३६४।।

अथ काकरुतस्य तृतीययामफलं वसन्तराजे—

**ऐन्द्र्यां विरुक्षः प्रहरे तृतीये वृष्टिं तथा चौरभयं ब्रवीति।**
**हृष्टस्तु राजागमनं जयं च करोति यात्रासु च कार्यसिद्धिः ।। ३६५।।**
**अग्नेर्विभागेऽग्निभयं कलिश्च विरुद्धवार्त्ता विकला च यात्रा।**
**भवेद्विरुद्धैर्बलिभुग्विरावैर्जयादिवार्त्ता च भवेद्विशुद्धैः ।। ३६६।।**
**ककुभ्यवाच्यां कुरुते तु तूर्णं रोगं तथाप्तागमनं विहङ्गः।**
**क्षुद्राणि कार्याणि च यान्ति सिद्धिं सर्वाणि सन्मुख्यतया नराणाम् ।। ३६७।।**
**क्रव्याददेशे जलदागमः स्यान्मिष्टान्नलाभो रिपवो नमन्ति।**
**शूद्रागमश्चापि विरुद्धवार्त्ता भवन्ति यात्रासु च कार्यनाशः ।। ३६८।।**
**स्यात्पश्चिमे नष्टधनस्य लाभो दूराध्वयानं सुहृदागमश्च।**
**योषागमाभीष्टजयादिवार्त्ता यात्रासु रम्ये रटितार्थसिद्धिः ।। ३६९।।**
**वातालये दुर्दिनवातमेघाश्चौराप्तिनष्टार्थसमागमौ च।**
**सन्तोषवार्त्ता वरयोषिदाप्तिर्यात्रा रवे स्यान्मधुरे प्रशस्ता ।। ३७०।।**
**यामे तृतीये विरुवीत्युदीच्यां काकोऽर्थलाभो नृपसेवकानाम्।**
**भोज्याप्तिवृद्धी शुभदा च वार्त्ता प्रयाणकं वैश्यसमागमश्च ।। ३७१।।**

तृतीय याम में काकरुत फल—

तीसरे प्रहर पूर्व में रुक्ष शब्द करता हुआ काक वृष्टि व चोरभयसूचक है। यदि मधुर शब्द करता है तो राजा का आगमन, विजय व यात्रा से कार्य की सिद्धि होगी।

विरुद्ध विराव से अग्निकोण में अग्निभय, कलि, विरुद्धवार्ता व यात्रा-भंग होता है, अनुकूल मधुर विराव से विजय, अनुकूल वार्ता व यात्रा सफल होगी, दक्षिण में रोगभय, आप्त (इष्ट) आगमन व क्षुद्र कार्यों की सिद्धि होगी।

नैऋत्य में वृष्टि, मिष्ठान्नलाभ, शत्रुपराजय, शूद्रागम, विरुद्ध वातावरण व यात्रा में कार्यनाश होता है। पश्चिम में सुन्दर विराव से नष्ट धन का लाभ, दूरदेश की यात्रा, मित्रागम, स्त्रीलाभ, इष्टविजय, अनुकूल वातावरण व अर्थ की सिद्धि होगी, वायव्य में दुर्दिनकारी मेघाच्छादन, चौरभय व नष्टार्थ की प्राप्ति, अनुकूल वार्ता, उत्तम स्त्रीप्राप्ति व प्रशस्त यात्रा होगी, उत्तर में काक के मधुर विराव (शब्द) से राजसेवकों से अर्थलाभ, मधुर भोजन की प्राप्ति व अनुकूल वातावरण, वृष्टि व यात्रा में वणिक् समागम, व्यापार उद्देश्यक यात्रा होगी ॥३६५-३७१॥

**दिश्यन्धकारे कुरुते सुशब्दो भोज्यं जयं हानिकली कुशब्दः।**

**ब्रह्मप्रदेशे तिलतन्दुलाभ्यां भोज्यं सताम्बूलमुपादधाति ॥३७२॥**

किसी भी दिशा में अन्धकार के सुशब्द से भोज्य, विजय तथा कुशब्द से हानि व कलि होती है, ब्रह्मप्रदेश में सुशब्द से पानसहित तिल, चावल का सुभोज्य प्राप्त होता है ॥३७२॥

अथ काकरुतस्य चतुर्थयामफलं वसन्तराजे –

**ऐन्द्र्यां तुरीये प्रहरेऽर्थलाभो भूमीशपूजाभयवृद्धिरोगाः।**

**वह्नेर्विभागे भयरोगमृत्युः शिष्टागमो वायसवासितेन ॥३७३॥**

**याम्ये रवे तस्करवैरिभीतिः स्यातां च शिष्टागमरोगमृत्युः।**

**स्याद्यातुधान्यां महती प्रवृद्धिरभीष्टसिद्धिः पथि चौरयुद्धम् ॥३७४॥**

**दिशि प्रतीच्यां प्रहरे चतुर्थे द्विजातिरभ्येति ततोऽर्थलाभः।**

**आयाति योषिद्विजयोऽम्बुवृष्टिः सिद्धिः प्रयाणे नृपविड्वरस्य ॥३७५॥**

**वायव्यभागे करटस्य शब्दैरायाति योषित्प्रियमाननीया।**
**ध्रुवं प्रवासो दिनसप्तकेन शीघ्रागमः स्याद्गमने कृते च॥३७६॥**
**कुबेरभागे पथिकोऽभ्युपैति ताम्बूललाभः कुशलस्य वार्त्ता।**
**वैश्याद्धनाप्तिस्तुरगाधिरूढाद्यात्राविभूत्यै म्रियते च रोगी॥३७७॥**
**स्थाणोर्दिशिस्थैर्बलिभुग्विरावैः सुवर्णवार्त्ता सरुजो विनाशः।**
**ब्रह्मप्रदेशे प्रहरे तु तुर्ये वार्त्ता भवेन्मध्यमिकेष्टसिद्धिः॥३७८॥**

चौथे प्रहर में पूर्व दिशा के काक शब्द से अर्थलाभ, राजा से पूजा, अभय की वृद्धि व रोग सम्भव है।

अग्निकोण के वायस (काक) राव से भय, रोग, मृत्यु सम्भव है और शिष्टागमन भी होगा।

दक्षिण के विराव से चौरभय, शिष्टागम, रोग व मृत्युभय है, नैऋत्य में महती वृद्धि, अभीष्ट सिद्धि, यात्रा, चौर-युद्ध सम्भव है, पश्चिम में ब्राह्मण का आगमन और उनसे लाभ, स्त्री का आगमन, जल की वृष्टि, ताम्बूल का लाभ व राजा की यात्रा में सिद्धि मिलेगी।

वायव्य दिशा के शब्द से प्रिय माननीय स्त्री आती है, सात दिन के अन्दर निश्चय यात्रा होगी तथा शीघ्र सकुशल आना भी है।

उत्तर में कोई पथिक आता है तथा कुशल-मंगल का वार्त्तालाप होगा, वणिक् से धन, घोड़े की सवारी, यात्रा में ऐश्वर्य की प्राप्ति व रोगी की मृत्यु होगी।

ईशान में सुवर्णलाभ, उत्तम व्यक्ति से वार्त्ता, रोगी का विनाश, ब्रह्मप्रदेश में मध्यम यात्रा व इष्टसिद्धि होती है॥३७३-३७८॥

अथ वसन्तराजे स्थानस्थितकाकफलम्—

**निष्कारणं संमिलिता रुवन्तो ग्रामान्ननाशाय भवन्ति काकाः।**
**रोधं च चक्राकृतयो वदन्ति सव्यापसव्यभ्रमणाद्भयं च॥३७९॥**

**विघातमाहुर्बहुवर्गसंस्था रात्रौ रुवन्तो जनताविनाशम् ।**
**लोकं च चञ्चूचरणप्रहारैरुद्वेजयन्तः परचक्रवृद्धिम् ॥ ३८०॥**
**मध्यन्दिने वेश्मनि यस्य काको विरौति रौद्रं विधुनोति चाङ्गम् ।**
**हरन्ति चौरा द्रविणानि तस्य ध्रुवं तथान्यो भवति प्रमादः ॥ ३८१॥**
**रुवन्न हृष्टस्तृणपर्णचक्रो हुताशभीतिं करटः करोति ।**
**स्यात्प्रस्थितस्याप्यथवा स्थितस्य दुःखं प्रभूतं दिवसत्रयेण ॥ ३८२॥**
**छायासु लाभं भुवि भूमिलाभं विघ्नं जले ग्रावणि कार्यनाशम् ।**
**करोति काको विरुवन्नरस्य प्रस्थायिनः स्थानगतस्य वापि ॥ ३८३॥**
**द्वारप्रदेशे रुधिरानुलिप्तो विरौति काकः शिशुनाशनाय ।**
**पक्षौ विधुन्वन्विरुवन्विरुक्षं शान्ते प्रदीप्ते च भवेन्न शस्तः ॥ ३८४॥**

वसन्तराज में स्थानस्थ काक फल –

निष्कारण अनेक काक एक साथ विराव करते हैं तो ग्राम व अन्न का विनाश है व चक्राकार बनाकर बोलते हों तो परचक्र का अवरोध और सव्यापसव्य, दक्षिण-वाम भ्रमण करते हुये बोलते हों तो परचक्र का भय है, अनेक वर्गों में अलग-अलग होकर बोलते हों तो विघात (नाश), यदि अनेक काक रात्रि में बोलें तो लोक व प्रजा की हानि, चंचू व चरण प्रहार से जनसमूह को उद्विग्न करते हुए विराव करें तो शत्रु-चक्र की वृद्धि होगी तथा परिवर्द्धनी शत्रु सेना से अवरोध होगा ।

मध्याह्न में अंग कँपाता हुआ काक जिस घर पर बैठकर बोलता है, तो प्रमाद (हानि) के साथ उसके धन की चोरी होगी, मुख में तृण लेकर सूक्ष्म बोलने से अग्नि का भय होता है और प्रस्थित या घर पर बैठे हुए व्यक्ति को तीन दिन के अन्दर भयंकर दुःख व रोगभय होगा ।

छाया में, भूमि पर बैठकर बोलने से भूमिलाभ, जल में बोलने से विघ्न, ग्रास के साथ बोलता है, तो कार्य का नाश होगा, द्वार पर रुधिर

से अनुलिप्त काक विराव करता है, तो शिशु का नाश होता है और पंखों को कँपाता हुआ शान्ता व प्रदीप्ता दिशा में रुक्ष विराव करता है, तो शुभ नहीं है ॥३७९-३८४॥

**भ्रमन्नधोर्ध्वौ प्रविधाय पक्षौ काकः कुनादः प्रलयं करोति।**
**क्रुद्धोऽधिरूढः करटान्तरं च रोगेण मृत्युं कुरुते नराणाम् ॥३८५॥**
**विरौति कुम्भे मणिकेऽथ वायसः सगर्भवत्याः सुतजन्महेतुः।**
**उड्डीयते कण्टकिनीं च शाखामादाय राजागमनाय काकः ॥३८६॥**
**आज्यान्नविष्ठापिशितादिभिर्यः पूर्णाननोऽभीष्टफलप्रदोऽसौ।**
**मन्त्रादिसिद्ध्यै वणिजादिलाभे शस्तो विवाहादिविधौ च काकः ॥३८७॥**
**इष्टार्थदोऽश्वादिषु वाहनेषु छत्रादिसंस्थस्तदवाप्तिकारी।**
**वध्वागमं जल्पति तोरणादौ हृद्यार्थदो हृद्यतरुस्थितश्च ॥३८८॥**
**वायसः कुलुकुलुध्वनिर्यदा व्याहरेद् भवनसम्मुखस्तदा।**
**अभ्युपैति पथिकस्तदा ध्वनिं सर्वकार्यसुखदं वदन्त्यमुम् ॥३८९॥**
**इदन्त्विहोत्पातयुगं पृथिव्यां महाभयं शाकुनिका वदन्ति।**
**तद्वायसो मैथुनसन्निविष्टो दृश्येत यद्वा धवलः कदाचित् ॥३९०॥**
**उद्वेगविद्वेषभयप्रवासबन्धुक्षयव्याधिधनापहाराः।**
**बुद्धिप्रणाशाकुलतापवादा नृणां भवन्त्यद्भुतदर्शनेन ॥३९१॥**

पंखों को नीचे-ऊपर करता हुआ काक यदि कुनाद (कुशब्द) करता है, तो प्रलय का सूचक (अत्यधिक जनक्षति) है, क्रुद्ध काक एक-दूसरे पर चढ़कर बोलता है, तो रोग से बहुसंख्यक मृत्यु की सूचना देता है।

घड़े के कण्ठ पर बैठकर बोलता है, तो गर्भवती के पुत्रजन्म का कारण है, काँटे वाले वृक्ष की डाली लेकर यदि उड़ता है, तो राजा के आगमन की सूचना है। आज्य, अन्न, विष्ठा, खून से अनुलिप्त पूर्ण मुख से बोलता है, तो अभीष्ट सिद्धि, मन्त्र की सिद्धि, व्यापार से लाभ, विवाहादि कार्यों में ऐसा काक शुभ माना जाता है। घोड़े आदि वाहनों

के ऊपर बोलता है अथवा छत्रादि के आच्छादन पर बैठकर बोलता है, तो उस वस्तु का लाभ होता है जिस पर बैठकर बोलता है।

गृह के तोरण (अग्रभाग) पर बैठकर बोले तो बहू का आगमन और वृक्ष के हृदय (जहाँ से शाखाएँ निकलती हैं) पर बैठकर बोले तो उत्तम वस्तु के लाभ की सूचना है, भवन के सामने कुल-कुल करता है तो पथिक आता है और सर्वत्र सुख का सूचक है। शाकुनिक के अनुसार यह दो उत्पात महाभयंकर हैं – काक मैथुन व श्वेत काक कदाचित् दृष्टिगोचर हो जाँय, तो इसे महोत्पात मानते हैं, इसे देखने से उद्वेग, वैर, भय, प्रवास, बन्धुक्षय, व्याधिभय, धनापहरण, बुद्धिनाश, व्याकुल करने वाली आपदा या महती विपत्ति आती है ।।३८५-३९१।।

**शमाय तत्सूचितदुःखराशेः स्नानं बहिस्तत्क्षणमेव कुर्यात्।**
**आत्मीयशक्त्या च सदक्षिणानि द्विजाय दद्याद्वसनानि तानि ॥३९२॥**
**नयेदहः शेषमपुण्यहान्या शयीत भूमावकृतान्नभक्ष्यः।**
**स्नात्वा प्रभाते विदधीत शान्तिं दद्यात्स्वशक्त्या द्रविणं गुरुभ्यः॥३९३॥**
**हविष्यभोजी न भजेच्च नारीं दिनानि सप्तत्रिगुणानि यावत्।**
**अकाकपातव्रतमादधीत बलिं च दद्याद्बलिभोजनेभ्यः॥३९४॥**
**देशेषु यात्राद्भुतमेतदुग्रमालोक्यते तत्र समापतन्ति।**
**अवृष्टिदुर्भिक्षभयोपसर्गचौराग्निशत्रूद्भवधर्मनाशाः॥३९५॥**

पूर्वसूचित अरिष्ट दुःखराशि की शान्ति के लिए निम्नोद्धृत कार्य का सम्पादन करना चाहिए –

अपशकुन होने के तत्काल बाद घर के बाहर स्नान कर अवशेष समय निराहार रहकर, भूशयन, सदक्षिणा वस्त्र दान करके दूसरे दिन से २१ दिन तक हविष्यान्न भोजन, ब्रह्मचर्य, काक न मारने का व्रत व काकबलि देने से अपशकुनजन्य सर्वारिष्ट की शान्ति हो जाती है।

जिस देश व स्थान में ये अद्भुत (आश्चर्यजनक) उग्र उत्पात दिखाई देते हैं, वहाँ अवर्षण, दुर्भिक्ष, भय, संक्रामक रोग, चौर, अग्नि, शत्रुकृत धर्मनाश प्रभृति आपत्तियाँ आती हैं ॥३९२-३९५॥

अथ काकस्वरफलं वसन्तराजे–

**क्वां क्वामिति क्षेमविधौ विरावः कीं कीमितीष्टाशनपानहेतुः।**
**करोति कूं कूमिति चार्थलाभं क्वं क्वं ध्वनिः काञ्चनलाभमाह ॥ ३९६॥**
**कें केमिति स्त्रीति च योषिदाप्त्यै भोगाय कों कोमिति शब्दितं स्यात्।**
**अपत्यलाभं कुकु इत्यनेन गन्तुः फलं केकव इत्यनेन ॥ ३९७॥**

काक के स्वर का फल –

क्वा-क्वा शब्द क्षेमकारक, कूं-कूं अर्थलाभसूचक, कीं-कीं इष्ट भोजन-पान का द्योतक है, क्वं-क्वं की ध्वनि सुवर्णलाभ का सूचक है, कें-कें शब्द स्त्रीप्राप्ति, पुनः कों-कों स्त्रीप्राप्ति व भोग, कु-कु सन्तान लाभ, के-के से यात्रा में लाभ की सूचना है ॥३९६-३९७॥

**क्रों क्रोमितीदं सुखलाभकारी कुं कुं निनादः प्रियसङ्गमाय।**
**क्रूं क्रूमिति क्रूमिति च त्रयोऽमी क्रां क्रामिति द्वौ च रवौ रणाय ॥ ३९८॥**
**क्रां क्रामिति क्रोरिति च द्विरुक्तं क्रूं क्रूमिति क्रोकुकुहूरितीदम्।**
**रुतं प्रदिष्टं मरणाय नृणां गन्तुर्विनाशं कुरुते खगाख्यः॥ ३९९॥**
**क्रीं क्रीमितीष्टार्थविनाशनाय ज्वल ज्वलेत्यग्निभयाय शब्दः।**
**किकीति कौ काविति यः कथञ्चिन्मुहुर्मुहुः स्यात्स मतो वधाय ॥ ४००॥**
**स्यात्क्वा इतीदं विफलं सदैव मित्राप्तये क्व क्व इतीदृशं च।**
**का का इतीदं च विघातकारि कवेति काको वदति स्वतुष्ट्यै ॥ ४०१॥**
**आहारदोषाय च काकटीति स्यात् टाकुटाकुध्वनितं रणाय।**
**केकेध्वनिष्टाकु चिचिंटिकीति त्रयं त्विदं स्यात्पुरुदूषणाय ॥ ४०२॥**

**यत्क्वा इति त्रिस्तदनु द्विरेतच्छब्दद्वयं स्यान्महते फलाय।**
**कोगित्ययं वाहननाशनं च ददाति हर्षं कुरु कुर्विंतीदम् ॥४०३॥**

क्रों-क्रों विराव सुख व लाभ, कुं-कुं विराव प्रियसंगम, क्रूं-क्रूं-क्रूं ये तीन व क्रां-क्रां ये दो बार का विराव रण-संग्राम का सूचक है, क्रां-क्रां, क्रो-क्रो दो बार, क्रूं-क्रूं-क्रो-कु-कुहू इस प्रकार विराव मृत्यु व यात्रा में हानि का सूचक है।

क्रीं-क्रीं इष्टार्थविनाशक, ज्चल ज्चल शब्द अग्निभयसूचक है, कि-कि-कौ-कौ बार-बार इस शब्द का एक समय में क्रमशः उच्चारण वधं (मानवकृत हत्या) का सूचक, क्वा शब्द निष्फल, क्व-क्व मित्रागम-सूचक है, का-का शब्द विघातकारी, कव– यह अपनी संतुष्टि के लिए बोलता है, काकटि– यह शब्द दूषित आहार का सूचक, टाकु-टाकु शब्द रण- (युद्ध) सूचक, के-के-टाकु-चिचिंटिकि – ये तीनों शब्द पुरुष के दूषित होने की सूचना हैं, क्वा तीन बार, के दो बार के उच्चारण से महान् फल-प्राप्ति की सूचना है, कोका – यह वाहननाश, कुरु-कुरु शब्द हर्ष-सूचक है ॥३९८-४०३॥

**यः क्वा इतीदं विरुतं सुदीर्घं प्लुतस्वरेणोच्चरति प्रमोदात्।**
**उत्साहहीनः श्रमदैन्ययुक्तः स वायसः कार्यविनाशनाय ॥४०४॥**
**सामिषं कवकवेति भोजयेद्वारयेत्कति कतीति चाशनम्।**
**अभ्युपैति रवरुक्षभाषिते प्रोषितः शवशवेति च शब्दः ॥४०५॥**
**स्यात्कलिः करकरध्वनौ नृणां जायते कणकणध्वनौ ज्वरः।**
**आव्रजेत्कुलकुलध्वनौ प्रियः सोदनं कटकटध्वनौ दधिः ॥४०६॥**
**एवं प्रकारा बहवः परेऽपि प्रशान्तदीप्ता बलिभोजनानाम्।**
**भवन्ति शब्दाः खलु तेषु केचिदस्माभिरुक्ताः सुखलक्षणीयाः ॥४०७॥**

क्वा यह दीर्घ या प्लुत स्वर में सहर्ष उच्चारण करे, तो अनुत्साह, श्रम, दैन्य व कार्य का विनाश होता है, मांस के टुकड़े के साथ कव-

कव शब्द भोजन कराता है व कति-कति से भोजन प्राप्त होता है, शव-शव रुक्ष उच्चारण प्रवास कराता है, कर-कर मनुष्यों में कलि का सूचक, कण-कण से ज्वर, कुल-कुल ध्वनि से प्रिय का आगमन, कट-कट ध्वनि से दधि-भात का भोजन मिलता है। इस प्रकार अन्य भी अनेक भेद हैं, जो प्रशान्त दिशा, दीप्तादि दिशा व बलि भोजन देने के अवसर के अनुसार शब्द होते हैं; परन्तु यहाँ लक्षणप्राप्त शब्दों के उच्चारण का निर्देश किया गया है ॥४०४-४०७॥

अथ श्वाशकुनं यथा वाराहीसंहितायाम् –

**सूर्य्योदयेऽर्वाभिमुखो विरौति ग्रामस्य मध्ये यदि सारमेयः।**
**एको यदा वा बहवः समेताः शंसन्ति देशाधिपमन्यमाशु ॥४०८॥**
**सूर्योन्मुखः श्वानलदिक्स्थितश्च चौरानलत्रासकरोऽचिरेण।**
**मध्याह्नकालेऽनलमृत्युशंसी सशोणितः स्यात्कलहोऽपराह्णे ॥४०९॥**
**रुवन्दिनेशाभिमुखोऽस्तकाले कृषीबलानां भयमाशु धत्ते।**
**प्रदोषकालेऽनलदिङ्मुखस्तु धत्ते भयं मारुततस्करोत्थम् ॥४१०॥**
**उदङ्मुखश्चापि निशार्द्धकाले विप्रव्यथां गोहरणं च शास्ति।**
**निशावसाने शिवदिङ्मुखश्च कन्याभिदूषानलगर्भपातान् ॥४११॥**
**उच्चैः स्वराः स्युस्तृणकूटसंस्थाः प्रासादवेश्मोत्तमसंस्थिता वा।**
**वर्षासु वृष्टिं कथयन्ति तीव्रामन्यत्र मृत्युं दहनं रुजश्च ॥४१२॥**
**प्रावृट्कालेऽवग्रहेऽम्भोऽवगाह्य प्रत्यावृत्यै रेचकैश्चाप्यभीक्ष्णम्।**
**आधुन्वन्तो वा पिबन्तश्च तोयं वृष्टिं कुर्वन्त्यन्तरे द्वादशाहात् ॥४१३॥**
**द्वारे शिरो न्यस्य बहिः शरीरं रोरूयते श्वा गृहिणीं विलोक्य।**
**रोगप्रदः स्यादथ मन्दिरान्तर्बहिर्मुखः शंसति बन्धकीं ताम् ॥४१४॥**

श्वान-शकुन –

एक या अनेक श्वान एक साथ सूर्योदय के समय पूर्वाभिमुख ग्राम के बीच में रोते हों तो वर्तमान के विरुद्ध शीघ्र देश का स्वामी कोई दूसरा होगा, सूर्याभिमुख होकर अग्निकोण में रोते हैं, तो शीघ्र चोर व

अग्नि का भय होगा, यदि ऐसा ही मध्याह्न काल में हो तो अग्नि व मृत्यु का भय है। अपराह्न में कलह, अस्त के समय सूर्याभिमुख रोदन से शीघ्र कृषक के भय की सूचना है (खेती में आपत्ति सम्भाव्य है), प्रदोष के समय (प्रदोषो रजनीमुखम्) अग्निकोणाभिमुख प्रचण्ड वायु व तस्कर का भय सम्भावित है। अर्धरात्रि में उत्तराभिमुख रोदन से ब्राह्मण को कष्ट व गो के अपहरण का सूचक है, रात्रि के अवसान (अन्त) में ईशानकोण की तरफ मुख करके रोदन से कन्या के दोष, अग्निभय व गर्भपात का सूचक है।

तृणसमूह, प्रासाद, मकान या उत्तम भूमि पर उच्चस्वर से रोने पर वर्षा ऋतु में घोर वृष्टि, अन्य ऋतु में मृत्यु, अग्नि व रोग-भय है।

वर्षा समय में वृष्टि अवरोध होने पर जल का अवरोध कर पार्श्व को बदलकर अर्थात् जलप्रवाह का अवरोध पार्श्व बदल करके बार-बार जल कँपाता (डोलाता) या जल पीता हुआ यदि श्वान दिखाई दे, तो अवग्रह बाधा होते हुए भी १२ दिन के अन्दर वृष्टि होगी। अर्थात् श्वान बार-बार अपने शरीर से भूमि पर लोटते (इधर-उधर अपने शरीर को बदलते) हुए अथवा जल का आलिंगन (मन्थन जैसा) करते हुए या जल पीते हुए दिखाई दे तो बाधा होते हुए भी १२ दिन के अन्दर वृष्टि होगी।

श्वान घर के द्वार पर शिर, शरीर बाहर कर गृहिणी को देखकर रोता है, तो रोग व शरीर अन्दर, मुख बाहर कर गृहिणी को देखकर रोता है, तो 'गृहिणी वेश्या जैसी है' का सूचक है ॥४०८-४१४॥

**कुड्यमुक्तिरतिवेश्मनो यदा तत्र खानकभयं भवेत्तदा।**
**गोष्टमुक्तिरतिगोग्रहं वदेद्धान्यलब्धिमपि धान्यभूमिषु ॥४१५॥**
**एकेनाक्ष्णा साश्रुणा दीनदृष्टिर्मन्दाहारो दुःखकृत्तद्गृहस्य।**
**गोभिः सार्द्धं क्रीडमानः सुभिक्षं क्षेमारोग्यं चाभिधत्ते मुदं च ॥४१६॥**

वामं जिघ्रेज्जानु वित्तागमाय स्त्रीभिः साकं विग्रहो दक्षिणं चेत्।
ऊरुं वामं चेन्द्रियार्थोपभोगाः सव्यं जिघ्रेदिष्टमित्रैर्विरोधः ॥४१७॥
पादौ जिघ्रेद्यायिनश्चेदयात्रां प्राहार्थाप्तिं वाञ्छितां निश्चलस्य।
स्थानस्थस्योपानहौ चेद्विजिघ्रेत्क्षिप्रं यात्रा सारमेयः करोति ॥४१८॥
उभयोरपि जिघ्रणे हि बाह्वोर्विज्ञेयो रिपुचौरसम्प्रयोगः।
अथ भस्मनि गोपयीत भक्षान् मांसास्थीनि च शीघ्रमग्निकोपः ॥४१९॥
ग्रामे भषित्वा च बहिः श्मशाने भषन्ति चेदुत्तमपुंविनाशः।
यियासतश्चाभिमुखो विरौति यदा तदा श्वा निरुणद्धि यात्राम् ॥४२०॥
उकारवर्णेन रुतेऽर्थसिद्धिरोकारवर्णेन च वामपार्श्वे।
व्याक्षेपमौकाररुतेन विद्यान्निषेधकृत्सर्वरुतैश्च पश्चात् ॥४२१॥

श्वान घर की भित्ति का पैर से उत्खनन करता (खनता-खोदता) है, तो सन्धिभेद का भय, (परस्पर) दुःख या चोरी का भय , गोशाला भित्ति के उत्खनन से गोहरण (गोचोरी), धान्य भूमि के उत्खनन से धान्य की प्राप्ति होगी।

एक आँख में आँसू, थोड़ा खाया (मूर्च्छित-सा) दीन, दुःखी दिखाई दे, तो उस घर के लिए दुःख की सूचना है और गो के साथ क्रीडा करे तो सुभिक्ष, कल्याण, आरोग्य व आनन्द की सूचना है।

श्वान जाते समय वाम जानु को सूँघता है, तो धनागम होगा, दाहिने जानु के सूँघने से स्त्रियों के साथ विग्रह (झगड़ा) होगा, वाम ऊरु को सूँघता है तो इन्द्रिय-भोगोपलब्धि है व दाहिने ऊरु को सूँघता है तो इष्ट-मित्रों से वैर होगा।

यात्रा के समय श्वान चरणों को चूमता (सूँघता) है तो यात्रा का अवरोध (निषेध) करता है, यात्रा के अवरोध (रोकने) से घर पर ही अभीष्ट अर्थ का लाभ होगा, यात्रा के लिए तत्पर होने के समय यदि पैर के जूते को सूँघता है, तो शीघ्र यात्रा करने की अनुमति देता है, दोनों भुजाओं को सूँघता है तो शत्रु व चोर के प्रयोग की सूचना है।

भोज्य (अपूप आदि) मांस पदार्थ राख में छिपाता है तो शीघ्र अग्नि का भय होने वाला है।

ग्राम में बोलकर पुनः श्मशान में बोलता है तो ग्रामप्रधान की मृत्यु की सूचना है, जाने के लिए उत्सुक के सम्मुख भौंकता हो तो यात्रा का अवरोध चाहता है।

ऊकार अक्षर प्रतीत हो, यदि ऐसा बोलता है तो अर्थोपलब्धि है अथवा यात्रा करने वाले के वाम भाग में ओकार के उच्चारण से रोता है तो भी अर्थ की सिद्धि होगी, औकार शब्दोच्चारण से रोता है, तो व्याकुलता की सूचना देता है, यात्री के पीछे किसी भी वर्ण का उच्चारण कर रोता है तो यात्रा-निषेध चाहता है ॥४१५-४२१॥

**खं खेति चोच्चैश्च मुहुर्मुहुर्ये रुवन्ति दण्डैरिव ताड्यमानाः।**
**श्वानोऽभिधावन्ति च मण्डलेन ते शून्यतां मृत्युभयं च कुर्युः॥४२२॥**
**प्रकाश्यदन्तान्यदिलेढि सृक्विणी तदाशनं मिष्टमुशन्ति तद्विदः।**
**यदाननं चावलिहेन्न सृक्विणी प्रकृत्तभोज्येऽपि तदान्नविघ्नकृत् ॥४२३॥**
**ग्रामस्य मध्ये यदि वा पुरस्य भषन्ति संहत्य मुहुर्मुहुर्ये।**
**ते क्लेशमाख्यान्ति तदीश्वरस्य श्वारण्यसंस्थो मृगवद्विचिन्त्यः॥४२४॥**
**वृक्षोपगे क्रोशति तोयपातः स्यादिन्द्रकीले सचिवस्य पीडा।**
**वायोगृहि सस्यभयं गृहान्तः पीडा पुरस्यैव च गोपुरस्थे॥४२५॥**
**वसुन्धरायाः कमपि प्रदेशं मूर्ध्ना स्पृशन्यद्यवलोकते श्वा।**
**ध्रुवं तदा तत्र महानिधानमस्तीति सिद्धैः कथितं रहस्यम्॥४२६॥**
**दक्षिणं यदि करोति चेष्टितं दक्षिणेन चरणेन मण्डलः।**
**लाभदो यदि पदा समाचरेद् वामकेन खलु तन्न लाभदः ॥४२७॥**

श्वान बार-बार उच्च स्वर में खं-खं विराव करते हैं अथवा गोले परिधि के रूप में दौड़ते हैं, तो ग्राम की शून्यता (बहुमरण) की सूचना देते हैं।

श्वान दाँत निकालकर जीभ से ओठ को चाटते हैं तो भोजन मिलेगा, इसकी सूचना देते हैं, यदि मात्र मुख चाटते हैं, जीभ नहीं ऐंठते हैं, तो भोजन उपस्थित होने पर भी विघ्न सूचित है।

पुर, नगर या ग्राम के बीच में अनेक संख्या में एकत्रित होकर बार-बार बोलते हैं, तो ग्राम, पुर या नगर के स्वामियों के लिए क्लेश की सूचना है। अरण्यनिवासी कुक्कुरों का विचार मृग की भाँति करना चाहिए।

श्वान वृक्ष के समीप क्रोशता है तो जलपात (वृष्टि) की सूचना है, अर्गला के समीप क्रोश (श्वानरव) से मन्त्री की पीड़ा की सूचना है, गृह के भीतर या वायव्य में यदि क्रोशति (आक्रोश रव) करते हैं, तो खेती (सस्य) की हानि है, पुर-द्वार, नगर-द्वार पर भौंकते हैं, तो पुर-नगर की पीड़ा की सूचना है, शय्या के समीप बोलते हैं तो शय्या के स्वामी का भंग, यात्री के पीछे के शब्द (आक्रोश) से यात्री के लिए भय है, जन-सन्निधान के वाम भाग में शब्द से शत्रु का भय होगा।

जिस भूमि को शिर से स्पर्श कर बार-बार देखता है वहाँ निधि है, ऐसा सिद्धों का कहा हुआ रहस्य है, यदि श्वान की चेष्टा अपने दाहिने से होती है और दाहिने चरण से मण्डल बनाता है तो लाभ, यदि वैसा ही वामावर्त वाम पैर से मण्डल की चेष्टा करे तो लाभ की हानि है ॥४२२-४२७॥

**मूत्रं विधायाभिमुखं प्रयाति यो जागरूकः शुभदो नराणाम्।**
**कार्येषु सर्वेष्वपि सर्वकालं न मूत्रयन्ती शुनकी प्रशस्ता ॥४२८॥**
**स्थाने मनोज्ञे विदधाति मूत्रं सन्तुष्टचित्तः शुभचेष्टितः श्वा।**
**रम्यो रवो यः सरमासुतोऽसौ करोत्यभिप्रेतपदार्थलाभम् ॥४२९॥**

श्वान सावधानी से मूत्र करके सम्मुख जाता है तो सभी शुभ कार्यों के लिए शुभ है; किन्तु शूनी (कुतिया) के लिए मूत्र करना शुभ नहीं है।

सन्तुष्ट शुभचेष्टायुक्त श्वान यदि उत्तम स्थान में मूत्र करता है और श्वानशिशु रमणीक शब्द करता है तो अभीष्ट पदार्थ का लाभ है ॥४२८-४२९॥

अथ शृगालशकुनं वाराहीसंहितायाम् –

**श्वभिः शृगालाः कथिताः फलेन विशेष एषां शिशिरे मदाप्तिः ।**

**हूहूरुतान्ते परतश्च टाटा पूर्णस्वरोऽन्ये कथिताः प्रदीप्ताः ॥४३०॥**

**लोमासिकायाः खलु कक्वशब्दः[1] पूर्णः स्वभावप्रभवस्य तस्याः ।**

**येऽन्ये स्वरास्ते प्रकृतेरपेताः सर्वे च दीप्ता इति संप्रदिष्टाः ॥४३१॥**

**भेभेति शिवा भयङ्करी भोभो व्यापदमादिशच्च सा ।**

**मृतिबन्धनिवेदिनी फिफा हूहू आत्महिता शिवास्वरे ॥४३२॥**

शृगाल-शकुन –

श्वान की चेष्टा आदि से सम्बन्धित फल के समान शृगाल का भी फल है; किन्तु कुछ विशेष प्रतिपाद्यं निम्न है –

शृगालों को शिशिर ऋतु में काम की जागृति होती है, इसलिए शिशिर में उनकी चेष्टा निष्फल है । शृगाली का हूहू शब्द के बाद में टाटा शब्द पूर्णस्वर है, अन्य सभी शब्द प्रदीप्त (क्रूर) कहे गए हैं ।

यहाँ लोमशिका (लोमड़ी) का कक्व शब्द पूर्ण स्वभावजन्य है, इससे भिन्न शब्द स्वाभाविक नहीं हैं, वे सभी प्रदीप्त फलापेक्षित हैं ।

शृगाली का पूर्व व उत्तर का रुत (शब्द) प्रशस्त है और उसका शान्त रव सर्वत्र शान्ता दिशा में शुभंफलद है, पूर्वोक्त प्रदीप्तादि दिशाओं के अनुसार शान्ता दिशा की शृगाली का शान्त रव सर्वथा शुभ है ।

धूमिताभिमुखी शिवा का क्रूर शब्द उस दिशा के अधिपति का नाश करता है ।

---

१. फलार्थकशब्दः ।

दिशाओं के स्वामी –

पूर्व दिशा का राजा, अग्निकोण का राजपुत्र (कुमार), दक्षिण दिशा का सेनापति (नेता), नैर्ऋत्यकोण का दूत, पश्चिम का श्रेष्ठी, वायव्यकोण का चर (गूढ़पुरुष), उत्तर का ब्राह्मण, ईशानकोण का हथिसार, शस्त्रागार का अध्यक्ष स्वामी है एवं क्षत्रियादि पूर्वादि दिशाओं के क्रमशः स्वामी हैं– पूर्व का क्षत्रिय, दक्षिण का वैश्य, पश्चिम का शूद्र व उत्तर का ब्राह्मण स्वामी है।

शिवा का भे-भे शब्द भयंकर है, भो-भो शब्द विशेष आपत्तिकारक है, फि-फि शब्द मृत्यु व बन्धन का सूचक है, हू-हू शब्द शिवा के अपने हितार्थ में है ॥४३०-४३२॥

**शान्ता त्ववर्णात्परमा रुवन्ती टाटामुदीर्णामिति वाश्यमाना।**
**टेटे च पूर्वं परतश्च थेथे तस्याः स्वतुष्टिप्रभवं रुतं तत् ॥४३३॥**
**उच्चैर्घोरं वर्णमुच्चार्य्य पूर्वं पश्चात्क्रोशेत्क्रोष्टुकस्यानुरूपम्।**
**या सा क्षेमं चाह वित्तस्य प्राप्तिं संयोगं वा प्रोषितेन प्रियेण ॥४३४॥**

शिवा शान्ता दिशा में मधुर शब्द के उच्चारण में यदि प्रथम अकार ह्रस्व का उच्चारण करके बाद में आकार का उच्चारण करती है तथा वह रोने वाला शब्द यदि टा-टा है अथवा पूर्व (पहले) टे-टे, बाद में थे-थे उच्चारण (शब्द) आत्मतुष्टि हेतु होता है।

यदि शृगाली प्रथम क्रूर शब्द का उच्चारण कर बाद में शृगाल के स्वाभाविक शब्द का उच्चारण करे, तो क्षेमकारक है। फल– लब्ध का पालन, वित्त का लाभ, विदेश गए व्यक्ति से मिलाप व क्षेम है ॥४३३-४३४॥

वसन्तराजे च शिवाचेष्टाफलम्–

**करोति फेफे इति सर्वदिक्षु यदा तदा स्थानविघातयुद्धे।**
**शिवा विधत्ते क्षुभिता त्वसंख्यान् रौद्रान्स्वरान्मुञ्चति चेदुपेक्षा ॥४३५॥**
**निरन्तरं रौति च सर्वदिक्षु समन्दकारुण्यरवातुरा चेत्।**
**अपत्यमोहेन युता शृगाली त्यक्तस्पृहा सा कथितेह तज्ज्ञैः ॥४३६॥**

**स्थित्वा प्रदीप्ते ककुभो विभागे ज्वालामुखी फेत्कुरुतेऽतिरौद्रम्।**
**ग्रामस्य पार्श्वे प्रकरोति नाशं तस्याथवा तिष्ठति यश्च मध्ये ॥४३७॥**
**ग्रामस्य मध्यं समवाप्य यस्य ज्वालामुखी मुञ्चति फेत्कृतानि।**
**स शून्यतां गच्छति निश्चयेन लोकस्य वा स्यादसुखं प्रभूतम् ॥४३८॥**

वसन्तराज के अनुसार शिवारुत-चेष्टा –

यदि शिवा फे-फे शब्द चारों दिशा में करती है तो युद्ध में स्थान का विघात (हानि) है, क्षुभित (सन्तप्त) शिवा असंख्य क्रूर (भयावह) शब्दों का उच्चारण करती हैं तो वह शब्द उपेक्ष्य है।

सभी दिशाओं में निरन्तर मन्द, करुणपरक (कारुणिक) या आतुरता से भरे शब्दों का विराव करती है, तो अपनी सन्तति के मोह का त्यागसूचक है, यह विशेषज्ञों का मत है।

ग्राम के समीप प्रदीप्ता दिशा में ज्वालादिङ्मुखी होकर रौद्र फेत्कार करती है तो उस ग्राम या ग्राम के मध्य में निवास करने वाले अथवा ग्रामप्रधान के नाश की सूचना है। जिस ग्राम के बीच में ज्वालामुखी (ज्वलन्ती दिशामुखी) शिवा फेत्कार करती है, उस ग्राम की शून्यता (संहार) अथवा देश के लिए प्रभूत (अत्यधिक) [illegible]नि की सूचना है ॥४३५-४३८॥

**ग्रामान्तिके सप्तदिनानि यावन्महाभयोत्पादितफेत्कृतेन।**
**विरौति चेत्तत्कुरुते शृगाली तद्वासिलोकस्य भयप्रभूतम् ॥४३९॥**
**मध्यंदिने यावदहानि पञ्च शिवा समीपे नगरस्य यस्य।**
**विरौति घातं विदधाति तस्य भयं च वह्निप्रभवं प्रभूतम् ॥४४०॥**
**पञ्चार्द्धरात्राणि कथञ्चिदेषा क्रूरा रवा व्याहरते शृगाली।**
**यस्यान्तिके तं बहवो हठेन मुष्णन्ति चौरा जनसन्निवेशम् ॥४४१॥**
**स्थानस्य यस्योपगता समीपं शिवा प्रगे पञ्चदिनानि यावत्।**
**जाते भृशं प्रोच्चरते तदा स्यान्महन्नराणां महती च हानिः ॥४४२॥**

सुरक्षितस्यापि मनुष्यलक्षैर्ग्रामस्य शीघ्रं ग्रहणं विधत्ते।
त्रयं दिनानां दिवसावसाने शिवा रटन्ती परुषस्वरेण ॥४४३॥
दिक्ष्वारटन्ती सकला सुरौद्रं भ्रमत्यखिन्ना परितः पुरं चेत्।
शृगालजाया खलु तद्ब्रवीति युद्धं महत्तत्र तथाभिघातम् ॥४४४॥
ज्वाला विमुञ्चत्यतिरौद्रनादा समाकुला धावति या समन्तात्।
रोमाञ्चकम्पौ जनयत्यकस्मात् कुर्याच्छिवा सा युवराजपातम् ॥४४५॥
रोमोद्गमं या जनयत्यकस्मात् फे इत्यतिक्रूररवा नराणाम्।
मूत्रं पुरीषं चतुरङ्गमाणां सा सर्वदा स्यादशिवा शिवेह ॥४४६॥
तरङ्गिणीरोधसि सौम्यरूपांस्त्रीन्पञ्च वा मुञ्चति या निनादान्।
शिवाशिवां तां नृपतित्वदात्रीं वन्देत देवीमभिवन्दनीयाम् ॥४४७॥
श्मशानभूमौ दिनमध्यभागे मध्ये रजन्याश्च गृहाग्रदेशे ।
या रौति तस्यै बलिमर्घ्ययुक्तं भक्त्या प्रदद्याद्यदि भद्रमिच्छेत् ॥४४८॥
सर्वेषु कार्येषु समुद्यतेषु बलिः शिवाया विनिवेदनीयः।
गृह्णाति यस्मिन्विषयेऽभ्युपेत्य देवी बलिं यच्छति तत्र सिद्धिम् ॥४४९॥

ग्राम के समीप निरन्तर सात दिन तक फे-फे भयंकर शब्द करने वाली शिवा ग्रामवासियों के प्रभूत (विशेष) भय की सूचना देती है, अर्थात् अनिष्टकारी घटना घटने वाली है।

मध्याह्न में ग्राम के समीप पाँच दिन अनवरत फेत्कार करती है तो उस ग्राम का विघात (नाश) व प्रभूत अग्निभय है, पाँच दिन अर्धरात्रि के समय क्रूर शब्दोच्चारण करती है तो हठात् चोर-दस्यु उस गाँव को लूट लेते हैं, सार्वजनिक भीषण डकैती की सूचना है।

जिस ग्राम के समीप पाँच दिन तक कठोर (उग्र) शब्दोच्चारण करती है, तो ग्राम के बहुसंख्यक व्यक्तियों की बहुत बड़ी हानि होती है, दिन के अवसान (रात्रिमुख) में तीन दिन तक कठोर शब्द रटती शृगाली लाखों पुरुषों से सुरक्षित भी ग्राम के पराधीन होने की सूचना देती है।

ग्राम की सभी दिशाओं (चारों तरफ) में कठोर शब्दोच्चारण करती प्रसन्न मुद्रा में भ्रमण करती है तो भयङ्कर संग्राम व अनेकों व्यक्ति मारे जाने की पूर्वसूचना है।

ज्वाला (अग्नि) उगलती भयंकर, रौद्र, शरीर को रोमांच व मन को भयभीत कर देने वाले शब्दों का उच्चारण करती हुई व्याकुलता से चारों तरफ दौड़ने वाली शिवा अकस्मात् युवराज की मृत्यु की सूचना देती है।

शिवा के रोमांचकारी फे-फे शब्दों के श्रवण मात्र से मानव, पशु मूत्रोत्सर्ग व विष्ठा (पुरीषोत्सर्ग) कर देते हैं, तो वह शब्द सर्वदा देश के लिए अमांगलिक विनाश का सूचक है।

सेना के मार्ग में सौम्यरूप तीन या पाँच बार उच्चस्वर से विराव करती है, तो राज्य प्राप्त होने की पूर्व सूचना देने वाली वन्दनीय देवी शिवा को सतत नमस्कार है।

मध्याह्न में श्मशान भूमि या अर्धरात्रि में घर के सामने शब्द करने वाली शिवा को अपने कल्याण हेतु भक्ति से पूज्यार्घ्य व बलि देना चाहिए।

शुभ फल की उत्सुकता से कार्य के पूर्व शिवा-बलि[1] निवेदन करना चाहिए, यदि निवेदित बलि शिवा ग्रहण कर लेती है, तो क्रियमाण कार्य में अवश्य सिद्धि मिलेगी ॥४३९-४४९॥

अथ छिक्काशकुनफलं वसन्तराजे –

**अथ क्षुताख्यं शकुनं क्रमेण महाप्रभावं प्रतिपादयामः।**
**त्रस्यन्ति यस्माच्छकुनाः समस्ता मृगाधिनाथादिव वन्यसत्त्वाः ॥४५०॥**
**सर्वस्य सर्वत्र च सर्वकालं क्षुतं न कार्ये क्वचिदेव शस्तम्।**
**जाते क्षुते तेन न किञ्चिदेव कुर्य्याच्क्षुतं प्राणहरं गवां तु ॥४५१॥**

---

१. राजा द्वारा दिये गये बलि के ग्रहण की दिशा के अनुसार उस दिशा की यात्रा विजय देने वाली होगी।

**निषिद्धमग्रेऽक्षणि दक्षिणे च धनक्षयं दक्षिणकर्णदिशे।**
**तत्पृष्ठभागे कुरुतेऽरिवृद्धिं क्षुतं कृकट्यां शुभमादधाति ॥४५२॥**
**भोगाय वामे श्रवणस्य पृष्ठे कर्णे च वामे कथितं जयाय।**
**सर्वार्थलाभाय च वामनेत्रे जातं क्षुतं स्यात्क्रमतोऽष्टधैवम् ॥४५३॥**
**क्रमान्निषेधं गमनस्य विघ्नं कलिं समृद्धिं क्षुधमुग्ररोगम्।**
**करोति रोगक्षयमर्थलाभं दीप्तादिदिक्षु क्षुतमुद्गतं सत् ॥४५४॥**
**प्रागन्यपुंसः परतः परस्मात्पुनः पुनर्वा तत एव यातम्।**
**वृद्धाच्छिशोर्वा कफतो हठाद्वा जातं क्षुतं कोऽपि वदत्यसत्यम् ॥४५५॥**
**आद्यन्तयोर्न स्वपने प्रशस्तं क्षुतं प्रशंसन्ति न भोजनादौ।**
**भवेत्कथञ्चिद्यदि भोजनान्ते भवेत्तदान्याहनि भोज्यलाभः ॥४५६॥**

छिक्काशकुन वसन्तराज के अनुसार --

अत्यन्त प्रभावशाली छिक्काशकुन का प्रभाव प्रतिपादन किया जाएगा, जिससे समस्त शकुन त्रस्त हैं, जैसे सिंह से आरण्य मृग त्रस्त रहते हैं। सभी प्राणियों का सर्वकालिक क्षुत (छींक) सभी कार्यों में शुभ नहीं है, अपितु क्षुत प्राणघातक है। सम्मुख व दक्षिण आँख के समीप छींक निषिद्ध है। दाहिने कान के पास के छींक से धन की हानि, दाहिने कान के पीछे का छींक शत्रुवृद्धि व कटि के समीप शुभकारी है। वाम कान के समीप, वाम कान के पीछे का छींक जयसूचक है। वाम नेत्र के समीप का छींक सर्वार्थलाभकारी है– ये आठ प्रकार के क्षुत हैं।

गमन (यात्रा) में विघ्न, कलि, समृद्धि, क्षुधापीड़ा, उग्ररोग, रोगक्षय, अर्थलाभ– ये दीप्तादि[1] दिशाओं का क्षुत (छींक) क्रम से उपर्युक्त फलकारक है।

प्रथम किसी पुरुष के छींक का विचार कर कार्य करें, पुनः उसी पुरुष का बार-बार छींक व अन्य किसी की एक बार छींक उत्तरोत्तर

---

१. दीप्ता दिशा यात्रा व गृहप्रकरण में प्रतिपादित है।

अशुभ होती है; परन्तु वृद्ध, बालक या हठात् की गई छींक निष्फल होती है – ऐसा कुछ आचार्यों का मत है। शयन के आदि, अन्त व भोजन के प्रारम्भ की छींक शुभ नहीं है। भोजन के बाद की छींक से दूसरे दिन पुनः भोजन मिलेगा अथवा दूसरे दिन किसी प्रकार भोजन मिल सकता है ॥४५०-४५६॥

**आदौ क्षुतं चेच्छकुनैस्ततः किं पश्चाक्षुतं चेच्छकुनैस्ततः किम्।**
**जातानजातान्शकुनान्निहन्ति क्षुतं क्षणेनात्र न संशयोऽस्ति ॥४५७॥**

कार्यारम्भ के समय यदि छींक हो जाता हो तो अन्य शकुन के बल की क्या आवश्यकता है? कार्य के अन्त में छींक निष्प्रयोजन होने से शकुन विचार से क्या लाभ, अर्थात् कुछ नहीं; क्योंकि क्षणमात्र का क्षुत जात, अजात सभी शकुन के फल को नष्ट कर डालता है, इसमें कोई संशय नहीं है। अतः छींक का विचार सर्वप्रथम है ॥४५७॥

मुहूर्त्तगणपतौ विशेषः –

**औषधेऽध्ययने वादे वाहने शयनेऽशने।**
**बीजवापे बुधैः प्रोक्तं शोभनं सप्तसु क्षुतम् ॥४५८॥**
**मृत्युर्वह्निभयं हानिस्तुष्टिर्द्रव्यागमः सुखम्।**
**क्लेशोऽर्थागमनं प्रोक्तं दिक्षु छिक्काफलं क्रमात् ॥४५९॥**
**यामार्द्धं पूर्वतोऽष्टासु दिक्षु प्रोक्तफलं दिशेत्।**
**आद्येऽर्द्धप्रहरे पूर्वमपरार्द्धेऽग्निदिक्क्रमात् ॥४६०॥**

भोजन, शयन, अध्ययन, बीजवपन (बीज बोना), औषध-सेवन, निर्माण, वाद-विवाद, वाहन पर चढ़ना इत्यादि सात स्थानों में छींक शुभ है। पूर्वादि आठ दिशाओं में आठ अर्धयाम (प्रहर के आधे समय) के अनुसार छींक का फल, प्रथम प्रहरार्ध में पूर्व छींक में मृत्युभय, दूसरे प्रहरार्ध में अग्निकोण की छींक से अग्निभय, तीसरे प्रहरार्ध में दक्षिण छींक से हानि, चौथे में नैऋत्य छींक से तुष्टि (सन्तोष), पाँचवें में पश्चिम

छींक से द्रव्यलाभ, छठें प्रहरार्ध में वायव्य छींक से सुख, सातवें प्रहरार्ध में उत्तर छींक से क्लेश, आठवें प्रहरार्ध में ईशान के छींक से अर्थागम होता है ।।४५७-४६०।।

अथोपश्रुतिशकुनं वसन्तराजे –

**अभीष्टदुष्टार्थफलं नराणामुक्तं समालोकनमत्र सम्यक् ।**
**आलोकयामोऽद्य सुनिश्चितार्थामुपश्रुतिं कार्यविनिश्चयाय ।।४६१।।**
**लोके प्रसुप्ते विजने च मार्गे तिस्रस्तरुण्यस्सहिताः कुमार्य्या ।**
**स्रग्दीपनैवेद्यविलेपनाद्यैर्गणाधिनाथं विधिनार्च्चयेयुः ।।४६२।।**
**ततोऽन्नमानं कुडवादिकं यत्तदक्षतैस्ताः परिपूरयेयुः ।**
**ओं चण्डिकायै नम इत्यनेन मन्त्रेण सम्मन्त्र्य च सप्तवारान् ।।४६३।।**
**सम्मार्जनीकाण्डकृताववेष्टे विनायकं तत्र निवेशयेयुः ।**
**ततो व्रजेयुर्गणनायकं तं स्त्रियो गृहीत्वा रजकालयान्तम् ।।४६४।।**
**अग्रेऽथ तस्याक्षतमुष्टिमात्रं परिक्षिपेयुः शुचिभूमिभागे ।**
**प्रयोजनं भावि विभाव्य तूष्णीमाकर्णयेरन्नजलोदितानि ।।४६५।।**
**ईरितं रजकगेहवर्तिना यन्नरेण वचनं स्त्रियाऽथवा ।**
**तद्भवत्यवितथं प्रयोजने भाविनीति कथयन्ति सूरयः ।।४६६।।**

पूर्वोक्त शकुन से मानव के अभीष्ट इष्ट व दुष्ट फल का प्रतिपादन किया गया है, जिसके अनुसार होने वाले कार्य का इष्टा-निष्ट फल के निश्चय हेतु पुनः उपश्रुति द्वारा दृढ़ करने का विधान प्रस्तुत है।

लोक (जन) के सो जाने (निस्तब्ध वातावरण, निर्जन मार्ग होने) पर तीन युवतियों के साथ कुमारी द्वारा पुष्पमाला, दूर्वा, दीप, नैवेद्य से गणेश जी की विधिपूर्वक पूजा करने के बाद स्त्रियाँ अन्न माप करने वाले उपलब्ध कुडवादि (मापक पात्रविशेष 'लीलावती' के अनुसार) पात्र को "ॐ नमश्चण्डिकायै" इस मन्त्र से सात बार अभिमन्त्रित चावलों से भर देवें, यह पात्र व पूर्वपूजित गणेश को साफ-सुथरे किसी बाँस के पात्र

में रख पात्रसहित गणेश को लेकर धोबी के घर के समीप जावें और उनके (गणेश जी के) सामने पवित्र भूमि पर एक मुट्ठी चावल छींटकर रजक (धोबी) के घर में अन्न-जल सम्बन्धी कहे जाने वाले शब्द ध्यान से सुनें, जैसी बात सुनी जाएगी, उसी के अनुसार उद्देश्य कार्य का फल निश्चय होगा, यदि कोई बात नहीं सुनी गई तो उद्देश्य कार्य की सिद्धि नहीं होगी ।।४६१-४६६।।

**अत्रैव कार्ये पुनरेवमन्ये वदन्ति तत्प्राक्तनमानभाण्डम् ।**
**भाण्डान्तरस्योपरि सन्निदध्युः पाषाणखण्डेन ततोऽपि दध्युः ।।४६७।।**
**विन्यस्य तस्योपरि मार्जनीं च तिस्रः कुमारीसहितास्तरुण्यः ।**
**तत्सर्वमादाय जने प्रसुप्ते चाण्डालगेहान्तिकमाश्रयेयुः ।।४६८।।**
**पूर्वोदितां तत्र विधिं विधाय दत्तावधानाः शृणुयुस्ततस्ताः ।**
**चाण्डालगेहे यदि कोऽपि किञ्चिद् ब्रवीति कार्येऽपि तथावधार्यम् ।।४६९।।**

इसी उपश्रुति के सम्बन्ध में कुछ लोगों के कथन के अनुसार पूर्व का तण्डुल-पूर्ण पात्र किसी दूसरे भाण्ड के ऊपर रखकर पत्थर के टुकड़े से उसे ढक दे, उसके ऊपर मार्जनी (झाड़ू) रखे और उसे लेकर वे तरुणियाँ कुमारी के साथ चाण्डाल के घर के समीप जाकर पवित्र भूमि पर रखें और एक मुट्ठी चावल गणेश जी के सामने छिड़ककर सावधानी से चाण्डाल के गृह की बात सुनें। चाण्डाल के घर में यदि कोई कुछ कहता है, वैसी ही कार्यसिद्धि समझें (यह सभी कार्य लोक की सुप्तावस्था, निस्तब्ध वातावरण के समय पूर्ववत् किया जाएगा)। फल वचन के अनुसार समझें, कुछ भी न सुनाई देना कार्य की असफलता का सूचक है ।।४६७-४६९।।

**प्रदोषकाले यदि वा प्रभाते लोके क्वचित्केचन भाषमाणे ।**
**उपश्रुतिः कार्यसमुद्यतेन सार्वत्रिकी वा परिभावनीया ।।४७०।।**
**यद्बालकेनोक्तमनूदितेन तत्स्यादसत्यं न युगान्तरेऽपि ।**
**उपश्रुतेर्नान्यदिहास्ति किं तत् सत्यं सुबोधं शकुनं जनानाम् ।।४७१।।**

**वदन्ति वामं रुदितं प्रशस्तमदृश्यदेहो यदि रोदितः स्यात् ।**
**निन्दन्त्यवामं पथि सर्वकामान् श्रुतं विधत्ते रुदितं रजन्याम् ॥ ४७२॥**
**मृत्युः सुतानां रुदितेन पृष्ठे लाभो भवेत्तस्य निवर्त्तनेन ।**
**मृत्युस्तथाग्रे रुदितेन गन्तुः सिद्धिं विधत्ते रुदितं रिपूणाम् ॥ ४७३॥**
**उग्रं भवेद्रोदनमग्रभागे भयं भवेद्वह्निविभागभूते ।**
**नैऋत्यकोणे रणमार्गरोधो वायव्यकोणे रुदितं समृद्ध्यै ॥ ४७४॥**
**पृष्ठाग्रयोर्दक्षिणवामयोश्च सिद्धिः सदा तोरणरोदनेन ।**
**शुभोऽपि सम्यग्यदि रोदनार्थो ज्ञातो विभाव्यः स पुनस्तथापि ॥ ४७५॥**

सायं, प्रदोष या प्रभात समय में जनश्रुति (ध्यान से सुने, कौन किससे क्या कह रहा है) के अनुसार कार्य की सिद्धि-असिद्धि का निश्चय करे, अथवा उपश्रुति का फल सार्वजनिक उद्देश्य से विचार करे। यदि कोई बालक अप्रासंगिक या उन्मुक्त कोई बात कहता है तो वह निश्चय सत्य होगी, उसे युगान्तर में भी असत्य होना संभव नहीं है, उपश्रुति से भिन्न कोई भी शकुन सत्योत्पादक नहीं है, रोने वाले दिखाई न दें और उनका रोदन अपने वाम भाग में सुनाई दे, तो शुभ है व दाहिने अशुभ है, रात्रि में कथित-श्रुत यथावत् कार्यकारी होता है, रात्रि की सुनी हुई शुभ अथवा अशुभ वार्ता के अनुसार बात कार्यसाधक होती है।

यात्रा या कार्य आरम्भ के पूर्व बच्चों का पीछे का रोदन मृत्युकारी, कार्यावसान या यात्रानिवृत्ति के समय पीछे का रोदन लाभकारी है। यात्री के सामने रोदन मृत्युदायक तथा शत्रुओं के सामने रुदन लाभकारी होता है।

सामने का रोदन उग्र, अग्निकोण का रोदन भय, नैऋत्यकोण का रोदन युद्ध के मार्ग का अवरोधक है, वायव्यकोण का रोदन समृद्धि-हेतुक है। पीछे, सामने, दक्षिण, वाम व तोरण (मकान के अग्रभाग)

का रोदन शुभ है। यदि रोदन का तात्पर्य ज्ञात हो तो शुभ समझें, अन्यथा उपर्युक्त फल होता है ॥४७०-४७५॥

अथाङ्गविद्याफलं वाराहीसंहितायाम् –

**दैवज्ञेन शुभाशुभं दिगुदितं स्थानाहृतानीक्षता**
**वाच्यं प्रष्टृनिजापराङ्गघटनां चालोक्य कालं धिया।**
**सर्वज्ञो हि चराचरात्मकतयासौ सर्वदर्शी विभु-**
**श्चष्टे व्याहृतिभिः शुभाशुभफलं सन्दर्शयत्यर्थिनाम् ॥४७६॥**

**स्थानं पुष्पसुहासिभूरिफलभृत्सुस्निग्धकृत्तिच्छदा**
**सत्पक्षिच्युतशस्तसंज्ञिततरुच्छायोपगूढं समम्।**
**देवर्षिद्विजसाधुसिद्धनिलयं सत्पुष्पसस्योत्क्षितं**
**सत्स्वादूदकनिर्मलत्वजनिताह्लादं च सच्छाड्वलम् ॥४७७॥**

**छिन्नभिन्नकृमिखातकण्टकिप्लुष्टरुक्षकुटिलैर्न सत्कुजैः।**
**क्रूरपक्षियुतनिन्द्यनामभिः शुष्कशीर्णबहुपर्णवर्मभिः ॥४७८॥**

**श्मशानशून्यायतनं चतुष्पथं तथा मनोज्ञं विषमं सदोषदम्।**
**अवस्कराङ्गारकपालभस्मभिश्चितं तुषैः शुष्कतृणैर्न शोभनम् ॥४७९॥**

**प्रव्रजितनग्ननापितरिपुबन्धनसूनिकैस्तथा श्वपचैः।**
**कितवयतिपीडितैर्युतमायुधमाध्वीकविक्रियैर्न शुभम् ॥४८०॥**

**प्रागुत्तरैशाश्च दिशः प्रशस्ताः प्रष्टुर्न वाय्वग्नियमाम्बुरक्षः।**
**पूर्वाह्णकालेऽस्ति शुभं न रात्रौ सन्ध्याद्वये प्रश्नकृतोऽपराह्णे ॥४८१॥**

अंगविद्या वाराही-संहिता के अनुसार –

प्रश्न की दिशा, स्थान, कथन, साथ की वस्तु व प्रश्नकर्ता के अपने व दूसरे के शरीर की घट्टना, स्पर्श, चेष्टा, समय को बुद्धि से विचार कर शुभाशुभ कहना चाहिए; क्योंकि अचर, चरात्मक, सर्वज्ञ, सर्वदर्शी, विभु, स्वामी आत्मा आत्मस्वामी जीव है, प्रभु प्रश्नकर्ता के शरीर

के स्पर्श, चेष्टा, इच्छा, कथन के आधार पर अर्थी के शुभाशुभ फल दिखाते हैं।

सर्वज्ञ, विभु, ईश मानव के अंगस्पर्शादि चेष्टा, कथन व काल के माध्यम से शुभाशुभ फल प्रकट करते हैं, अतः दैवविद् उक्त सर्वचेष्टा का भलीभाँति विचार कर यथाकाल फल का उपदेश करें।

पुष्प-फल समूहों से परिपूर्ण स्निग्धत्वक् (छाल) पत्रों से युक्त, प्रशस्त नाम वाले देव-पलाश, पिप्पल, वटादि वृक्षों की घनी छाया, देव, ऋषि, साधु, सिद्ध, ब्राह्मणों का आवास, मनोहर सस्योपेत, कुसुम, दूर्वादि युक्त प्रशस्त भूमि, स्निग्ध, स्वादु, मधुर, निर्मल जलादि से सुन्दर प्रतीत होने वाला जलाशय स्थान, पूर्वोत्तर व ईशान दिशा व पूर्वाह्ण काल प्रश्न के लिए पूर्ण शुभदायक हैं। रात्रि, दोनों सन्ध्या, अपराह्ण व वायव्य, अग्नि, दक्षिण, नैऋत्य, पश्चिम दिशा शुभ नहीं हैं। छिन्न-भिन्न (फटा-टूटा), कीट-भक्षित, काँटायुक्त, जरा-रुक्ष, कान्तिरहित, टेढ़े (उन्नतोन्नत), गृध्र, श्येनादि क्रूर पक्षियों से सेवित, कुत्सित नाम वाले तथा जिसके अधिक पत्ते व छाल नीरस सूख चुके हैं, ऐसे वृक्षों की छाया के नीचे प्रश्न का शुभाशुभ उत्तर नहीं देना चाहिए।

श्मशान, देवशून्य (देवरहित), चतुष्पथ, अप्रसन्न, विषम, निम्नोन्नत, विवर, ऊषर, बालुकायुक्त, टूटा-फूटा, कूड़ा-कतवारयुक्त, कोयला, राख, तुष, केश से युक्त स्थान प्रश्न के लिए उपयोगी नहीं है।

तापस, नग्न (विवस्त्र), नापित, शिल्पी, शत्रु, कारागार, हिंसास्थान, श्वपच (चाण्डाल), कितव (धूर्त), रोगस्थान (अस्पताल), शस्त्रस्थान, मधुशाला, विक्रयशाला इन स्थानों या इनके समीप प्रश्न नहीं करना चाहिए ॥४७६-४८१॥

**यात्राविधाने हि शुभाशुभं यत् प्रोक्तं निमित्तं तदिहापि वाच्यम्।**
**दृष्ट्वा पुरो वा जनताहृतं वा प्रष्टुः स्थितं पाणितलेऽथ वस्त्रे ॥४८२॥**

अथाङ्गान्पूर्वोष्ठस्तनवृषणपादं च दशना
भुजौ हस्तौ गण्डौ कचगलनखाङ्गुष्ठमपि यत्।
सशङ्खं कक्षांसश्रवणगुदसंधीतिपुरुषे
स्त्रियां भ्रूनासास्फिग्वलिकटिसुलेखाङ्गुलिचयम् ॥४८३॥
जिह्वाग्रीवापिण्डिके पार्ष्णियुग्मं जङ्घे नाभिः कर्णपाली कृकाटी।
वक्रं पृष्ठं जत्रुजान्वस्थिपार्श्वं हृत्ताल्वक्षीमेहनोरस्त्रिकं च ॥४८४॥
नपुंसकाख्यं च शिरो ललाटमाश्वाद्यसंज्ञैरपरैश्चिरेण।
सिद्धिर्भवेज्जातु नपुंसकैर्नो रुक्षक्षतैर्भग्नकृशैश्च पूर्वैः ॥४८५॥
स्पृष्टे वा चालिते वापि पादाङ्गुष्ठे च रुग्भवेत्।
अङ्गुल्यां दुहितुः शोकं शिरोघाते नृपाद्भयम् ॥४८६॥
विप्रयोगमुरसि स्वगात्रतः कर्पटाहतिरनर्थदा भवेत्।
स्यात्प्रियाप्तिरभिगृह्य कर्पटं पृच्छतश्चरणपादयोजितुः ॥४८७॥
पादाङ्गुष्ठेन विलिखेद्भूमिं क्षेत्रोत्थचिन्तया।
हस्तेन पादौ कण्डूयेत्तस्य दासीमया च सा ॥४८८॥

यात्रा में जो शुभाशुभ शकुन है, वह यहाँ पर भी विचारणीय है।

सामने जनसमूह से प्राप्त या प्रश्नकर्ता के हाथ में स्थित या वस्त्र में धृत वस्तु को देखकर शुभाशुभ फल का उपदेश करें।

उरु, ओष्ठ, स्तन, वृषण, चरण, दाँत, भुज, हस्त, कपोल देश, कण्ठ, नख, अंगुष्ठ, स्कन्ध, श्रवण (कान), गुदा, सर्वांगसन्धि – ये अंग पुरुषसंज्ञक हैं। भ्रू, नाक, स्फिक्, त्रिवली, कटि, हाथ की रेखा, अंगुली, जिह्वा, ग्रीवा, जंघा, दोनों पार्ष्णि, पिण्डि के जंघा का पृष्ठभाग, नाभि, कर्णपाली, कृकाटी (ग्रीवा का पृष्ठभाग) ये अंग स्त्रीसंज्ञक हैं।

मुख, पृष्ठ, जत्रु (उरु, कक्ष की संधि), जानु, अस्थि, पार्श्व हृदय, तालु, नेत्र, लिङ्ग, वक्षस्थल, कटि का पृष्ठभाग, वलि प्रदेश, शिर, ललाट, ये सब अंग नपुंसकसंज्ञक हैं।

प्रश्नकर्ता इनमें पुरुषसंज्ञक अंगों का स्पर्श करता है, तो शीघ्र सिद्धि होगी, स्त्रीसंज्ञक अंगों के स्पर्श से विलम्ब से सिद्धि होती है, नपुंसकसंज्ञक अंगों के स्पर्श से कभी भी सिद्धि नहीं होती है।

पूर्वोक्त अंग कृशित, स्फुटित, रुक्ष, भंग (प्रहारक्षत) हों और उनका स्पर्श हो तो कार्य सफल नहीं होता है।

प्रश्न के समय अंगुष्ठ के स्पर्श से प्रश्नकर्ता को नेत्र का रोग होगा, अंगुली के स्पर्श से कन्याशोक, शिर पीटता हुआ प्रश्न करे तो राजभय, वक्षस्थल के स्पर्श से वियोग, अपने शरीर का वस्त्र गिरना अनर्थकारी होता है। एक चरण के वस्त्र से द्वितीय चरण ढकता है तो प्रिय की प्राप्ति है, पैर के अँगूठे से भूमि पर लिखता है या हाथ से चरण खुजलाता है, तो चिन्ता दासी बना देती है ॥४८२-४८८॥

**तालभूर्जपटदर्शनेऽशुकं चिन्तयेत्कचतुषास्थिभस्मगम्।**
**व्याधिराश्रयति रज्जुजालकं वल्कलं च समवेक्ष्य बन्धनम् ॥४८९॥**
**पिप्पलीमरिचशुण्ठिवारिदै रोध्रकुष्ठवसनाम्बुजीरकैः।**
**गन्धमांसिशतपुष्पया वदेत् पृच्छतस्तगरकेण चिन्तनम् ॥४९०॥**
**स्त्रीपुरुषदोषपीडितसर्वाध्वसुतार्थधान्यतनयानाम्।**
**द्विचतुष्पदक्षितीनां विनाशतः कीर्त्तितैर्दृष्टैः ॥४९१॥**
**न्यग्रोधमधुकतिन्दुकजम्बूप्लक्षाम्रवदरिजातिफलैः।**
**धनकनकपुरुषलोहां शुकरूप्योदुम्बराप्तिरपि करगैः ॥४९२॥**
**धान्यपरिपूर्णपात्रं कुम्भः पूर्णः कुटुम्बवृद्धिकरौ।**
**गजगोशुनां पुरीषं धनयुवतिसुहृद्विनाशकरम् ॥४९३॥**
**पशुहस्तिमहिषपङ्कजरजतव्याघ्रैर्लभेत संदृष्टैः।**
**अविधननिवसनमलयजकौशेयाभरणसंघातम् ॥४९४॥**

तालपत्र (भोजपत्र) देखने से नष्ट वस्त्र का चिन्तन करता है, केश, तुष, अस्थि, भस्म देखने से व्याधि होती है, प्रष्टा रोगग्रसित है। पक्षी

बझाने वाला जाल, वल्कल देखे या लेकर आवे तो बन्धन कहना। पीपरि के देखने से दोषयुक्त स्त्री की चिन्ता है, मिर्च से दोषयुक्त पुरुष की चिन्ता, रोग देखने से रोगी या मरे हुए की चिन्ता है। मुस्ता नागर-मोथा से सर्वनाश, लोध्र से अर्थनाश, कुष्ठ (औषध) से पुत्रनाश, वस्त्र से अर्थनाश, अम्बु (धनिया) से धान्यनाश, जीरा से पुत्रनाश, गन्धमणि (हींग) से दो सींगवाले पशु (बकरी) के नाश की चिन्ता, सौंफ से चतुष्पद की चिन्ता, तगर से भूमिनाश चिन्ता, इनके देखने व उच्चारण से विनाशहेतुक प्रश्न है।

वट का फल व जायफल हाथ में लेकर प्रश्न करे, तो धन की प्राप्ति है। महुआ के फल से सुवर्णलाभ, तेन्दुआ (फलविशेष) के फल से द्विपद पुरुषलाभ, जामुन के फल से लोहा, पाकड़ के फल से वस्त्र का लाभ, आम के फल से चाँदी का लाभ, गूलर से ताँबा का लाभ, धान्यपूर्ण पात्र, पूर्णकुंभ (भरा घड़ा) से कुटुम्ब की वृद्धि होती है। पशुओं में हाथी के विट से धन, गोबर से युवती, श्वान के विट से मित्र का नाश होगा, पशु दर्शन से कम्बल (ऊनी वस्त्र), हाथी से धनागम, महिष से रेशम वस्त्रलाभ, कमल से चन्दनलाभ, चाँदी से कौशेय (रेशमी वस्त्र), व्याघ्र से भूषण का लाभ है (यह इनके देखने या उच्चारण का फल है) ॥४८९-४९४॥

**पृच्छा वृद्धश्रावकसुपरिव्राट्दर्शने नृभिर्विहिता।**
**मित्रद्यूतार्थभवा गणिका नृपसूतिकार्थकृता॥४९५॥**
**शाक्योपाध्यायार्हतनिर्ग्रन्थनिमित्तनिगमकैवर्तैः।**
**चौरचमूतिवणिजां दासीयोधापणस्थवध्यानाम्॥४९६॥**
**तापसे शौण्डिके दृष्टे प्रोषितः पशुपालनम्।**
**हृद्गतं पृच्छकस्य स्यादुञ्छवृत्तौ विपन्नता॥४९७॥**
**इच्छामि प्रष्टुं भण पश्यत्वार्यः समादिशेत्युक्ते।**
**संयोगकुटुम्बोत्था लाभैश्वर्योद्गता चिन्ता॥४९८॥**

निर्दिशेति गदिते जयाध्वगा प्रत्यवेक्ष्य मम चिन्तितं वद।
आशु सर्वजनमध्यगं त्वया दृश्यतामिति च बन्धुचौरजा॥४९९॥
अन्तःस्थेऽङ्गे स्वजन उदितो बाह्यगे बाह्य एवं
पादाङ्गुष्ठाङ्गुलिकलनया दासदासीजनः स्यात्।
जंघे प्रेष्यो भवति भगिनी नाभितो हृत्स्वभार्या
पाण्यङ्गुष्ठाङ्गुलिचयकृतस्पर्शने पुत्रकन्ये॥५००॥
मातरं जठरे मूर्ध्नि गुरुं दक्षिणवामकौ।
बाहू भ्राताथ तत्पत्नी स्पृष्ट्वैवं चौरमादिशेत्॥५०१॥
अन्तरङ्गमवमुच्य बाह्यगः स्पर्शनं यदि करोति पृच्छकः।
श्लेष्ममूत्रसकृतस्त्यजन्नधः पातयेत्करतलस्थवस्तु चेत्॥५०२॥
भृशमवनामिताङ्गपरिमोटनतोऽप्यथवा
जनधृतरिक्तभाण्डमवलोक्य च चौरजनम्।
हृतपतितक्षतस्मृतविनष्टविभग्नगतो-
न्मुषितमृताद्यनिष्टरवतो लभते न हृतम्॥५०३॥

कापालिक दर्शन से मित्र, द्यूत (जूआ), अर्थ का लाभ है। यति के देखने से वेश्या, राजा, प्रसूता का प्रश्न है और उसमें सफलता मिलेगी।

शाक्य देखने से चोर सम्बन्धी प्रश्न, शाक्य विशेष आश्रमी उपाध्याय से सेनापति का प्रश्न है, आश्रम विशेष सन्त, जो मात्र श्रद्धा का पात्र है, उसे देखने से वणिक्कृत प्रश्न है। निर्ग्रन्थि दैवज्ञ के देखने से योद्धाकृत प्रश्न, निगम (वेदान्ती) दर्शन से व्यापारी का प्रश्न, धीवर से वध्यकृत चिन्ता है।

तापस परदेशीय प्रश्न, शौण्डिक सुरापायी-सुराविक्रयी से पशुपालन की चिन्ता, शिलोञ्छवृत्ति से विपन्नार्थ चिन्ता।

पूछने की इच्छा करता हूँ, कहिये, ऐसे प्रश्न से कुटुम्ब की चिन्ता का प्रश्न है। आप देखें, ऐसा कहने से लाभ सम्बन्धी प्रश्न है। समादिश

(आदेश दें) ऐसा पूछने पर ऐश्वर्य की चिन्ता है, निर्देश – यह कहने पर मार्ग या जय सम्बन्धी चिन्ता है, विचार कर मेरे हृदय की चिन्ता कहें, ऐसे प्रश्न से बन्धुकृत चिन्ता है। शीघ्र देखिये, ऐसे प्रश्न से चोर के सम्बन्ध की चिन्ता है।

आभ्यन्तर के अंग का स्पर्श करे, तो आत्मीय जन चोर है, बाह्य अंगों के स्पर्श से बाह्य चोर है, चरण के अंगुष्ठ तथा पैर की अंगुलियों के स्पर्श से नौकरानी अथवा नौकरानी का पुत्र चोर है। जङ्घा के स्पर्श से दूत (प्रेष्य), कर्मकार चोर है। नाभि से भगिनी, हृदय से भार्या, हाथ के अंगुष्ठ के स्पर्श से पुत्र, हाथ की अंगुलियों के स्पर्श से कन्या चोर है। उदर के स्पर्श से माता, शिर से गुरु, दोनों भुजों में दाहिने से भ्राता, वाम से उसकी पत्नी चोर है।

बाह्य अंगों का स्पर्श कर तत्काल थूकना, पेशाब, पैखाना करता है या हाथ की वस्तु का त्याग करता है, तों चोरी की वस्तु नहीं मिलेगी, शरीर को मोड़ता है व मोड़ने से चर्र शब्द निकले (चरचरा जैसा करता है) तो तत्काल घृतरिक्त घट, चोर को देखकर तथा हृत, पतित, क्षत, स्मृत, विनष्ट, विभिन्न उन्मिषित, मृत, इस प्रकार अनिष्ट शब्द श्रवण से हृत (नष्ट) वस्तु नहीं मिलती है ॥४९५-५०३॥

**निगदितमिदं यत्तत्सर्वं तुषास्थिविषादिकैः**
**सह मृतिकरं पीडार्त्तानां समं रुदितक्षुतैः।**
**अवयवमपि स्पृष्ट्वान्तःस्थं दृढं मरुदाहये-**
**दतिबहु तदा भुक्तान्नं संस्थितः सुहितो भवेत् ॥५०४॥**

**ललाटस्पर्शनाच्छूकदर्शनाच्छालिजौदनम्।**
**उरः स्पर्शात्षष्टिकान्नं ग्रीवास्पर्शे च यावकम् ॥५०५॥**

कुक्षिकुचजठरजानुस्पर्शे माषाः पयस्तिलयवाग्व
आस्वादयतश्चोष्ठौ लिहतो मधुरं रसं ज्ञेयम्।
विस्पृक्के स्फोटयेज्जिह्वामाम्ले वक्त्रं विकूणयेत्
कटुतिक्तकषायोष्णैर्हिक्वेत्ष्ठीवेच्च सैन्धवे ॥५०७॥
श्लेष्मत्यागे शुष्कतिक्तं तदल्पं श्रुत्वा क्रव्यादं प्रेक्ष्य वा मांसमिश्रम्।
भ्रूगण्डौष्ठस्पर्शने शाकुनं तद् भुक्तं तेनेत्युक्तमेतन्निमित्तम् ॥५०८॥
मूर्ध्नि गलकेशहनुशंखकर्णजंघं वस्तिं च स्पृष्ट्वा।
गजमहिषमेषसूकरगोशशमृगमांसयुक्तम् ॥५०९॥
दृष्टे श्रुतेऽप्यपशकुने गोधामत्स्यामिषं वदेद्भुक्तम्।
गर्भिण्या गर्भस्य च निपतनमेवं प्रकल्पयेत्प्रश्ने ॥५१०॥

पूर्वोक्त श्लोक ५०२ व ५०३ में नष्ट चिन्ता के सम्बन्ध में अंगों, वस्तुओं के उच्चारण के साथ तुष, अस्थि, विष, रोदन, क्षत, अंगहीन वस्तु के उच्चारण से रोगपीड़ित व्यक्ति की मृत्यु होती है। अर्थात् स्पष्ट प्रश्न के समय कफ, मूत्र, पुरीष का उत्सर्ग (त्याग), केश, अस्थि, तुष, भस्म, विषादि अशुभ वस्तुओं के दर्शन या उच्चारण, छिन्न-भिन्न, व्यापन्न (आर्त), हत, मृत, किसी अंग में क्षत, जरा, वृद्ध, ताड़ित, रोदन आदि शब्दों के श्रवण से रोगी की मृत्यु होगी।

प्रष्टा अन्तस्थ (आभ्यन्तर) अवयव को स्पर्श कर वायु निकालता (जम्हाई, अपान, डकार से वायु निस्सरण) प्रश्न करे, तो अधिक अन्न खाकर अग्नितृप्त (मृत) हो गया है– ऐसा कहना चाहिए।

ललाट स्पर्श, शूक धान्यस्पर्श (यव गेहूँ मटर चना आदि) से पृच्छक शालितण्डुल का भात खाया है– यह कहना चाहिए। उरः (वक्षस्थल) स्पर्श से साठी के चावल का भात खाया है, ग्रीवा के स्पर्श से यवान्न भक्षण किया है।

कुक्षि के स्पर्श से माषान्न, स्तन स्पर्श से दूध-भात, उदर स्पर्श से तिल-चावल (तिल-भात), जानुस्पर्श से यावक (हलुआ), जीभ से ओठ चाटते हुए यदि प्रश्न करे तो मधुररस भोजन किया है। जीभ ऐंठता है तो आम्ल, मुख खुजलाता है, तो कटुपदार्थ, हिचकी करता है तो कषाय, थूकता है तो मिश्रितान्न भोजन किया है।

प्रश्नकर्ता कफ थूकता है तो नीरस, सूखा, तिक्त, थोड़ा खाया है, मांसाहारी प्राणी को देखकर या उसके नाम श्रवण से मांसमिश्रित भोजन किया है। भ्रू, कपोल, ओष्ठ के स्पर्श से पक्षी का मांस खाया है। शिर स्पर्श से गज का, गला के स्पर्श से भैंस, केश स्पर्श से बकरे का मांस, दाढ़ी स्पर्श से शूकर-मांस, अंस (स्कन्ध) स्पर्श से गोमांस, कर्ण स्पर्श से शश-मांस, जंघा स्पर्श से मृग-मांस, गुदा स्पर्श से महिष-मांस खाया है, अपशकुन देखने व सुनने से गोधा या मत्स्य भक्षण किया है, एवमेव गर्भ-प्रश्न में अपवित्र वस्तु देखने या सुनने से गर्भपात होता है ॥५०४-५१०॥

**स्त्रीपुंनपुंसकाख्ये दृष्टेऽनुमिते पुरःस्थिते स्पृष्टे।**
**तज्जन्म भवति पानान्नपुष्पफलदर्शने च शुभम् ॥५११॥**
**अङ्गुष्ठेन भ्रूदरं वाङ्गुलिं वा स्पृष्ट्वा पृच्छेद्गर्भचिन्ता तदा स्यात्।**
**मध्वाज्याद्यैर्हेमरत्नप्रवालैरग्रस्थैर्वा मातृधात्र्यात्मजैश्च ॥५१२॥**
**गर्भयुता करगे स्याद्दुष्टनिमित्तवशात्तदुदासः।**
**कर्षति तज्जठरं यदि पीठोत्पीडनतः करगे च करेऽपि ॥५१३॥**
**घ्राणाया दक्षिणे द्वारे स्पृष्टे मांसोत्तरं वदेत्।**
**वामे द्वौ कर्ण एवमाद्विचतुर्म्नः श्रुतिस्तने ॥५१४॥**
**वेणीमूले त्रीन्सुतान्कन्यके द्वे कर्णे पुत्रान्पञ्च हस्ते त्रयं च।**
**अङ्गुष्ठान्ते पञ्चकं चानुपूर्व्या पादाङ्गुष्ठे पार्ष्णियुग्मेऽपि कन्याम् ॥५१५॥**

**इति निगदितमेतद्गात्रसंस्पर्शलक्ष्म प्रकटमभिमताप्त्यै वीक्ष्य शास्त्राणि सम्यक् ।**
**विपुलमतिरुदारो वेत्ति यः सर्वमेतन्नररतिजनताभिः पूज्यतेऽसौ सदैव ॥ ५१६॥**

गर्भिणी के प्रश्न में यदि सामने या पीछे स्त्री दिखाई दे अथवा स्त्री के उच्चारण स्मरण से कन्या का जन्म एवं इसी प्रकार पुरुष से पुत्र-जन्म, नपुंसक से नपुंसक का जन्म कहना चाहिए, पेय, अन्न, भोजन पदार्थ, फल का दर्शन शुभ सुख प्रसव का द्योतक है। स्त्री अपने अँगूठे से भ्रू, उदर, अंगुली स्पर्श करके प्रश्न करे तो गर्भ है, अथवा मधु, घी, पुरुषवाचक, शुभ फल, सुवर्ण, मणि, माता, धात्री, पुत्र-प्रभृति सभी सामने हों या इनके नाम के उच्चारण में गर्भ कहना चाहिए।

हाथ से उदर स्पर्श कर प्रश्न करे तो स्त्री गर्भवती है, प्रश्न के समय नष्ट, क्षुभित, भग्न, विनष्ट, दग्ध, क्षीरादि के दर्शन से गर्भपात होता है, अथवा पीठ मर्दन करते हुए उदर खुजलाती है तो भी गर्भपात है, हाथ को हाथ से स्पर्श कर पूछे तब भी गर्भपात होता है।

अंगुष्ठ से नासिका के दाहिने स्रोत का स्पर्श करे तो एक मास बाद गर्भधारण होगा। वाम स्रोत के स्पर्श से एक या दो वर्ष बाद गर्भधारण होगा। वाम कर्ण के स्पर्श से भी दो वर्ष बाद गर्भधारण होगा, कान के दाहिने भाग के स्पर्श से दो मास, दोनों स्तन स्पर्श से चार मास में गर्भधारण होगा, वेणी (केशकलाप) मूल का स्पर्श करके यदि प्रश्न करती है तो तीन पुत्र व दो कन्या को जन्म देगी, दोनों हाथ के स्पर्श से तीन पुत्र, कनिष्ठ अँगुली से लेकर क्रमशः अंगुष्ठ तक स्पर्श करने से क्रमशः एकादि पाँच पुत्रों का जन्म होगा। यथा मात्र कनिष्ठा के स्पर्श से एक, अनामिका से दो, मध्यमा से तीन, तर्जनी से चार, अंगुष्ठ से पाँच, पैर के अँगूठे व दोनों पार्ष्णि के स्पर्श से एक कन्या का प्रसव होगा। अभीष्ट फल हेतु शास्त्रों को भलीभाँति देखकर शरीर के अंगों के स्पर्श से जनित लक्षणों से फलों का उल्लेख किया गया

है। उदार बुद्धिमान् मनुष्य इनको जानकर यदि सावधानी से उत्तर देता है, तो जन समुदाय से सर्वदा पूजित रहेगा ॥५११-५१६॥

अथ छायापुरुषदर्शनं समरसारे –

**प्रातः पृष्ठगते रवावनिमिषं छायां गले स्वां चिरं**
**दृष्ट्वोर्ध्वं नयनेन यत्सिततरं छाया नरं पश्यति।**
**तत्कर्णांसमरास्यपार्श्वहृदयाभावेक्षणेऽर्क्काश्वदिग्-**
**भूरामाक्षिसमाः शिरोविगमने मासांस्तु षड् जीवति॥५१७॥**
**हृद्रन्ध्रदृष्ट्या मुनिसंख्यमासान् द्विदेहदृष्टौ तु मृतिस्तदैव।**
**सम्पूर्णदृष्ट्या तु न वर्षमध्ये रोगो मृतिर्वेति वदन्ति सत्यम्॥५१८॥**

समरसार के अनुसार छाया-पुरुष-दर्शनफल –

प्रातः सूर्य के पीछे जाने पर अपनी छाया के अगले भाग को एकटक चिरकाल तक देखकर ऊपर आकाश में देखने से कानरहित श्वेत छाया (अपना प्रतिबिंब) दिखाई देता है, तो १२, स्कन्धरहित से ७, हाथरहित से १०, मुखरहित से १, पार्श्वरहित से ३, हृदयरहित से २ मास, शिर के अभाव में ६ मास तक जीवित रहने की सूचना है। हृदय में छिद्र से ७ मास, दो शरीर दिखने से शीघ्र मृत्यु है। सम्पूर्ण दृष्टि से वर्ष केअन्दर रोगी नहीं मरेगा – ऐसा कहना चाहिए। संत लोग इसे सत्य कहते हैं ॥५१७-५१८॥

अथ स्वस्यारिष्टज्ञानं यामले योगाध्याये –

**यस्य सूर्यस्वरोऽजस्रं षोडशाहं वहेत्तदा।**
**सद्यो मृत्युस्ततो न्यूने न्यूनाहमिति मासके॥५१९॥**
**एवं वामस्वरे सौख्यं तयोर्नाशे मृतिः क्षणात्।**
**निष्प्रभं भास्करं पश्यन्म्रियते दशभिर्दिनैः॥५२०॥**

जाग्रत्पश्यति यः स्वप्नं सोऽपि वर्षं न जीवति।
भमालां चन्द्रगं चिह्नमपश्यन्नैव जीवति ॥५२१॥
न विन्देत्कर्णघोषं यो नासाग्रं रसनां भ्रुवम्।
मेढ्रं वामं न पश्येद्यः षण्मासात्स न जीवति ॥५२२॥
मणिबन्धं ललाटस्थं यदि सूक्ष्मं न पश्यति।
यो दुर्गन्धं विना हेतुर्निःश्रीको वाति दीप्तिमान् ॥
कृशाङ्गः स्थूलदेहः स्यात् स्थूलोऽकस्मात्कृशस्तथा ॥५२३॥
क्षरत्केशनखो वापि स्रवद्वामेक्षणोऽपि वा।
ध्रुवं विष्णुपदं चैवारुन्धतीं मातृमण्डलम् ॥५२४॥
अपश्यन्मृत्युमाप्नोति षण्मासान्नैव संशयः।
विपर्यये स्वभावस्य निर्गन्धे दीपधूमके ॥५२५॥
कफो मज्जति यस्याप्सु पङ्कादौ खण्डितं पदम्।
स्नातस्य प्रागुरः शुष्येद्धूमालिः स्याच्च मूर्द्धनि ॥५२६॥
जिह्वाशोफश्च कम्पश्च ताम्बूले रागहीनता।
वाणी सगद्गदा यस्य तस्य मृत्युर्न संशयः ॥५२७॥

अपने अरिष्ट का ज्ञान –

जिसका दाहिना स्वर निरन्तर सोलह दिन तक चलता रहे तो शीघ्र, न्यून से न्यून संख्यक दिन क्रम से एक मास में मृत्यु होगी। इस प्रकार वाम स्वर से सुख व दोनों स्वरों के अभाव में तत्क्षण मृत्यु होगी। सूर्य का निस्तेज दिखाई देना १० दिन में मृत्यु की सूचना है। जागते हुए स्वप्न देखने वाला एक वर्ष तक नहीं जीता है। चन्द्रबिम्बगत चिह्न व अरुन्धती सहित सप्तर्षि-मंडल को न देखने वाला नहीं जीता है, कान से न सुनने व नासाग्र से सुगन्ध न मालूम होने से शीघ्र मृत्यु है। अपना वाम मेढ्र जो नहीं देखता, वह ६ मास तक नहीं जीता है। मणिबन्ध को ललाट पर लगाकर उसे सूक्ष्म रूप में जो नहीं देखता है, दीप्तिमान

को प्रकाशहीन देखता है, बिना कारण दुर्गन्ध का घ्राण हो, अकस्मात् कृश स्थूल व स्थूल कृश हो जाय, केश व नख गिर जाँय व वाम नेत्र के नष्ट होने पर विष्णु पद में ध्रुव व ऋषिमण्डल में अरुन्धती को न देखने वाला ६ मास में मरता है, इसमें कोई सन्देह नहीं है। स्वभाव के विपरीत गन्ध में निर्गन्ध व निर्गन्ध में गन्ध, दीप बुझने पर निर्गन्ध, जिसका कफ जल में डूब जाय, कीचड़ में खण्डित चरण चिह्न, स्नान के बाद पहले छाती सूख जाय, शिर पर धूम्रराशि दिखाई दे, जीभ में सूखापन व कम्प, पान में नीरसता, राग का अभाव, गद्गद वाणी – ये सब लक्षण सद्यः (शीघ्र) मरने का है ॥५१९-५२७॥

अथ वर्षापरीक्षा वाराहीसंहितायाम् –

**अन्नं जगतः प्राणाः प्रावृट्कालस्य चान्नमायत्तम्।**
**यस्मादतः परीक्ष्यः प्रावृट्कालः प्रयत्नेन ॥५२८॥**
**तल्लक्षणानि मुनिभिर्यानि निषिद्धानि तानि दृष्ट्वेदम्।**
**क्रियते गर्गपराशरकाश्यपवात्स्यादिरचितानि ॥५२९॥**
**दैवविदवहितचित्तो द्युनिशं यो गर्भलक्षणे भवति।**
**तस्य मुनेरिव वाणी न भवति मिथ्याम्बुनिर्देशे ॥५३०॥**
**किं वातः परमन्यच्छास्त्रं ज्यायोऽस्ति यद्विदित्वैव।**
**प्रध्वंसिन्यपि काले त्रिकालदर्शी कलौ भवति ॥५३१॥**
**केचिद्वदन्ति कार्त्तिकशुक्लान्तमतीत्य गर्भदिवसाः स्युः।**
**न तु तन्मतं बहूनां गर्गादीनां मतं वक्ष्ये ॥५३२॥**
**मार्गशिरशुक्लपक्षप्रतिपत्प्रभृतिक्षपाकरेऽषाढाम्।**
**पूर्वां वासमुपगते गर्भाणां लक्षणं ज्ञेयम् ॥५३३॥**
**यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत्स चन्द्रवशात्।**
**पञ्चनवतेर्दिनशते तत्रैव प्रसवमायाति ॥५३४॥**

सितपक्षभवाः कृष्णे शुक्ले कृष्णा द्युसम्भवा रात्रौ।
नक्तं प्रभवाश्चाहनि सन्ध्यायाश्च सन्ध्यायाम्॥५३५॥
मृगशीर्षाद्या गर्भा मन्दफलाः पौषशुक्लजाताश्च।
पौषस्य कृष्णपक्षेण निर्दिशेच्छ्रावणस्य सितम्॥५३६॥
माघसितोत्था गर्भाः श्रावणकृष्णे प्रसूतिमायान्ति।
माघस्य कृष्णपक्षेण निर्दिशेद्भाद्रपदशुक्लम्॥५३७॥
फाल्गुनशुक्लसमुत्था भाद्रपदस्यासिते विनिर्देश्याः।
तस्यैव कृष्णपक्षोद्भवास्तु ये तेऽश्वयुक् शुक्ले॥५३८॥
चैत्रसितपक्षजाताः कृष्णेऽश्वयुजस्य वारिदा गर्भाः।
चैत्रासितसम्भूताः कार्तिकशुक्लेऽभिवर्षन्ति॥५३९॥

जगत् का प्राण अन्न है और अन्न वर्षा से आप्लावित है, इसलिए सर्वप्रथम वर्षा हेतु वर्षा ऋतु की परीक्षा आवश्यक है। गर्ग, पराशर, कश्यप, वात्स्यायन, वसिष्ठ व देवल प्रभृति महर्षियों ने वैज्ञानिक ढ़ंग से वर्षा के लक्षणों को प्रतिपादित किया है, उसी को देखकर वक्ष्यमाण लक्षणों का उद्धरण दिया जा रहा है, जो दैवज्ञ अविचलचित्त सावधानी से वर्षा के गर्भ के लक्षणों का परिज्ञान करके वर्षा समय का उपदेश करता है, मुनियों जैसी उसकी वाणी कभी असफल नहीं होती है।

प्रतिदिन क्षीयमाण शास्त्र-परम्परा धर्मों वाले इस कलियुग में भी सर्वशास्त्रशिरोमणि ज्योतिषशास्त्र का अवगाहन करने वाला प्राणी (व्यक्ति) त्रिकालदर्शी माना जाता है।

सिद्धसेन प्रभृति आचार्यों केअनुसार कार्तिक शुक्ल पूर्णिमा से वर्षा के गर्भ का दिन प्रारम्भ होता है; किन्तु यह मत साधु संग्रहीत न होने से गर्ग, पराशर, वसिष्ठ प्रभृति महर्षियों के मत का प्रतिपादन करूँगा।

मार्गशीर्ष शुक्ल प्रतिपदा से चन्द्रमा जिस समय पूर्वाषाढ़ नक्षत्र पर विराजमान होंगे उसी समय से वर्षागर्भ के लक्षणों का परिज्ञान करना चाहिए।

चन्द्रमा के जिस नक्षत्र में वर्षा का गर्भधारण (आकाश मेघाच्छन्न) होता है, उसके १९५ दिन में उसी चन्द्र नक्षत्र में प्रसव होगा (पानी बरसेगा)– ऐसा कहना चाहिए। गर्भधारण का लक्षण आकाश का मेघाच्छन्न होना है, न कि बरसना। विशेष – गर्भधारण के दिन से १९५ अहर्गण (दिनगण) होने पर गर्भधारण नक्षत्र में चन्द्रमा के आ जाने से ही प्रसव होता है, अन्यथा यह चान्द्रमान से नहीं किन्तु सावन मान से १९५ दिन की गणना करनी चाहिए, तभी वाणी सत्य होगी।

शुक्लपक्ष में उत्पन्न गर्भ १९५ दिन के बाद, कृष्णपक्ष में व कृष्णपक्ष के गर्भ से १९५ दिन के बाद शुक्लपक्ष में, गर्भनक्षत्रगत चन्द्रमां में वर्षा का प्रसव होता है; परन्तु दिन में उत्पन्न गर्भ का रात्रि व रात्रिप्रभव गर्भ का दिन में प्रसव होता है, सायंसन्ध्या समय के गर्भ का प्रातःसन्ध्या व प्रातःसन्ध्या समुद्भव गर्भ का सायंसन्ध्या में प्रसव होता है।

मार्गशीर्ष शुक्ल व पौष शुक्ल संभव गर्भ (मन्दफल) थोड़ा बरसता है। पौष कृष्णपक्ष का गर्भ श्रावण शुक्ल व माघ सितपक्ष समुद्भव गर्भ का श्रावण कृष्णपक्ष में प्रसव होता है। फाल्गुन शुक्ल का भाद्रपद कृष्ण व फाल्गुन कृष्ण का गर्भ आश्विन शुक्लपक्ष में प्रसूत होता है। चैत्र शुक्लपक्ष जनित गर्भ आश्विन कृष्णपक्ष में व चैत्र कृष्णपक्ष का गर्भ कार्तिक शुक्ल में जल देता है। विशेष – वृष्टि में शुक्लादि मास लेना चाहिए, यथा चैत्र शुक्ल व वैशाख कृष्ण चैत्र मास होगा ॥५२८-५३९॥

**पूर्वोद्भूताः पश्चादपरोत्थाः प्राग्भवन्ति जीमूताः।**
**शेषास्वपि दिक्ष्वेवं विपर्ययो भवति वायोश्च॥५४०॥**

**ह्लादिमृदूदक्शिवशक्रदिग्भवो मारुतो वियद्विमलम्।**
**स्निग्धसितबहुलपरिवेषपरिवृतौ हिममयूखार्कौ॥५४१॥**

पृथुबहुलस्निग्धघनं घनसूचीक्षुरकलोहिताभ्रयुतम्।
काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम्॥५४२॥
सुरचापमन्दगर्जितविद्युत्प्रतिसूर्यकाः शुभासन्ध्या।
शशिशिवशक्राशास्थाः शान्तरवाः पक्षिमृगसंघाः॥५४३॥
विपुलाः प्रदक्षिणचराः स्निग्धमयूखा ग्रहा निरुपसर्गाः।
तरवश्च निरुपसृष्टाङ्कुरा नरचतुष्पदाहृष्टाः॥५४४॥
गर्भाणां पुष्टिकराः सर्वेषामेव योऽत्र तु विशेषः।
स्वर्तुस्वभावजनितो गर्भविवृद्धौ तमभिधास्ये॥५४५॥
पौषे समार्गशीर्षे सन्ध्यारागोऽम्बुदाः सपरिवेषाः।
नात्यर्थं मृगशीर्षे शीतं पौषेऽतिहिमपातः॥५४६॥
माघे प्रबलो वायुस्तुषारकलुषद्युती रविशशाङ्कौ।
अतिशीतं सघनस्य च भानोरस्तोदयौ धन्यौ॥५४७॥
फाल्गुनमासे रुक्षश्चण्डः पवनोऽभ्रसंप्लवाः स्निग्धाः।
परिवेषाद्याश्च सकलाः कपिलस्ताम्रो रविश्च शुभः॥५४८॥
पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः।
घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे॥५४९॥

मेघ व वायु लक्षण –

गर्भकाल में यदि पूर्व का वायु है तो प्रसव काल में पश्चिम का वायु होगा, एवमेव गर्भकालिक वायु के पृष्ठ की दिशा का वायु प्रसव काल में होगा, यह निश्चय है। सभी दिशा के वायु के सम्बन्ध में यह विपर्यय होता रहेगा। गर्भ के समय मन्दसुखस्पर्श व उत्तर, ईशान व पूर्व दिशा का वायु शुभ होता है। आकाश स्वच्छ निर्मल, सूर्य, चन्द्र, घन, शुक्ल, स्निग्ध परिवेश से परिपूर्ण, आकाश घन स्निग्ध, शुक्ल, कृष्ण भासा-भासित बहु विस्तृत मेघ से आच्छादित हो, सूची व क्षुरा का आकार,

लोहित वर्ण, काक के अंडा की आकृति – ये सब गर्भ के लक्षण शुभ हैं। पूर्वापर परिधि खंड के समान इन्द्रधनुष मधुर गर्जन (मेघध्वनि मन्द व मधुर) द्वितीय सूर्य जैसा क्षणिक विद्युत् दमक (चमक) पक्षी मृगादि आरण्यक पशु समूहों (झुंड) में उत्तर, ईशान व पूर्व की दिंशाओं में अपनी शरणस्थली बना, सूर्य से विमुख दिशा के अभिमुख मधुर शान्त स्वर से निवास करते हों। स्वच्छ प्रकाशमान विस्तृत बिम्ब नक्षत्र ग्रहमंडल उत्तरीय मार्ग से अपना चार बनाए हों। निर्बाध अंकुरित वृक्ष व लतायें, मानव व चतुष्पद (गोवंश) प्रसन्नचित्त हों, ये सभी लक्षण गर्भ के पुष्टिकारक हैं। मार्गशीर्ष शुक्ल से वैशाख तक पूर्वोक्त लक्षण, गर्भपुष्टि के लिए शुभ हैं। इस प्रकार अन्य ऋतु में उत्पन्न स्वाभाविक गर्भपुष्टि का लक्षण कहूँगा।

पौष, मार्गशीर्ष में सन्ध्या राग के समान परिवेष सहित मार्गशीर्ष में सामान्य शीत और पौष में अतिहिमपात सहित मेघ होना गर्भ का शुभ लक्षण है।

माघ में प्रचण्ड वायु हिमपात से परिच्छन्न कान्ति सूर्य, चन्द्रमा के अतिशीत का प्रभाव, उदयास्त में सूर्य का मेघाच्छन्न होना गर्भ का शुभ लक्षण है।

फाल्गुन में रुक्ष, प्रचण्ड वायु मेघसमुद्भव स्निग्ध परिवेष की आभा से भासित पीत, ताम्र सूर्य व चन्द्रमा के होने पर गर्भ का शुभ लक्षण है।

चैत्र में वायु, वर्षा व परिवेष युक्त मेघ गर्भ का लक्षण शुभ होता है। वैशाख में वायु, जल, विद्युत्, गर्जनयुक्त मेघ का लक्षण गर्भ के लिए शुभकारी है ॥५४०-५४९॥

**मुक्तारजतनिकाशास्तमालनीलोत्पलाञ्जनाभासाः।**
**जलचरसत्त्वाकारा गर्भेषु घनाः प्रभूतजलाः ॥५५०॥**
**तीव्रदिवाकरकिरणाभितापिता मन्दमारुता जलदाः।**
**रुषिता इव धाराभिर्विसृजत्यम्भः प्रसवकाले ॥५५१॥**

गर्भोपघातलिङ्गान्युल्काशनिपांशुपातदिग्दाहाः।
क्षितिकम्पखपुरकीलककेतुग्रहयुद्धनिर्घाताः॥५५२॥
रुधिरादिवृष्टिवैकृतपरिघेन्द्रधनूंषि दर्शनं राहोः।
इत्युत्पातैरेभिस्त्रिविधैश्चान्यैर्हतो गर्भः॥५५३॥
स्वर्त्तुस्वभावजनितैः सामान्यैर्यैश्च लक्षणैर्वृद्धिः।
गर्भाणां विपरीतैस्तैरेव विपर्ययो भवति॥५५४॥
भाद्रपदाद्वयविश्वाम्बुदेवपैतामहेश्वर्क्षेषु।
सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति॥५५५॥
शतभिषगाश्लेषार्द्रास्वातिमघासंयुतः शुभो गर्भः।
पुष्णाति बहून्दिवसान्हन्त्युत्पातैर्हतस्त्रिविधैः॥५५६॥
मृगमासादिष्वष्टौ षट् षोडश विंशतिश्चतुर्युक्ता।
विंशतिरथ दिवसत्रयमेकतमर्क्षेण पञ्चभ्यः॥५५७॥

गर्भकालिक अन्य मेघ का लक्षण –

मुक्ता, मोती व चाँदी की आभा या तमाल (ताड़) वृक्ष व नीलकमल की आभा जैसी कान्ति मत्स्य प्रभृति जलचर के आकृति के मेघ का गर्भ बहुल जलदायक होता है। तीव्र सूर्यकिरणों से दग्धप्राय स्वल्प वायु के मेघ का गर्भ अपने दिन से १९५वें दिन में क्रुद्ध जैसा मूसलाधार बहुवृष्टि करता है।

गर्भोत्पातलक्षण –

उल्कापात, वज्रपात, पांशुपात (प्रचण्ड वायु से उत्पन्न धूलि-धूसरिताकाश), दिशाओं में अंगार जैसी प्रभा, भूकम्प, गन्धर्वनगर, तामस, कीलक नाम केतु का उदय, ग्रहयुद्ध, घोरशब्दध्वनि, वृष्टि में रुधिर दिखाई देना, रक्त, मांस, वसा, घृत, तैल की वृष्टि परिघ का लक्षण, सूर्यास्त के समय मेघयुक्त इन्द्रधनुष का उदय, सूर्य, चन्द्र का ग्रहण, दिव्य भौम अन्तरिक्ष उत्पात ये लक्षण गर्भ नष्ट होने के हैं।

ऋतु के अनुसार श्लोक ५४१, ५४६ में गर्भ-पुष्टि के जो लक्षण बताए गए हैं, उनके विपरीत दैवी व्यवस्था से भी गर्भ की हानि होती है।

बहुजलद गर्भलक्षण –

सभी ऋतुओं में पूर्वाभाद्र, उत्तराभाद्र, पूर्वाषाढ़, उत्तराषाढ़, रोहिणी इन पाँचों नक्षत्रों में यदि गर्भधारण होता है और उस ऋतु सम्बन्धी गर्भपुष्टि के लक्षणों से परिपूर्ण है तो वह गर्भ भूरि जल देता है, 'बहु वर्षतीति'। शतभिषा, श्लेषा, आर्द्रा, स्वाती, मघा – इन पाँच नक्षत्रों का गर्भ शुभ है, यह गर्भ अनेक दिनों तक अपनी वृष्टि से परिपूर्ण रहता है, यदि गर्भ-पुष्टि ५४१ श्लोक के लक्षणों से युक्त है। अन्यथा ५५२-५५३ श्लोकोक्त रीति के उत्पातों से आहत होकर अपने आप भी नष्ट हो जाता है, अर्थात् निर्दिष्ट दिनों में नहीं बरसता है।

मार्गशीर्ष में शतभिषादि उक्त पाँच नक्षत्रों में किसी नक्षत्र का गर्भ पुष्ट होता है, तो १९५ दिन के बाद आठ दिन, पौष में छः, माघ में १६, फाल्गुन में २४, चैत्र में २०, वैशाख में ३ दिन तक परिपूर्ण वृष्टि होती रहती है, यह अतिवृष्टि के लक्षण हैं ॥५५०-५५७॥

**क्रूरग्रहसंयुक्ते करकाशनिमत्स्यवर्षदा गर्भाः।**
**शशिनि रवौ वा संयुतेक्षिते भूरिवृष्टिकराः॥५५८॥**
**गर्भसमयेऽतिवृष्टिर्गर्भाभावाय निर्निमित्तकृता।**
**द्रोणाष्टांशेऽभ्यधिके वृष्टे गर्भः स्रुतो भवति॥५५९॥**
**गर्भः पुष्टः प्रसवे ग्रहोपघातादिभिर्यदि न वृष्टः।**
**आत्मीयगर्भसमये करकामिश्रं ददात्यम्भः॥५६०॥**
**काठिन्यं याति तथा चिरकालधृतं पयः पयस्विन्याः।**
**कालातीतं तद्वत्सलिलं काठिन्यमुपयाति ॥५६१॥**

पञ्चनिमित्तैः शतयोजनं तदर्द्धार्द्धमेकहान्यातः।
वर्षति पञ्च समन्ताद्रूपेणैकेण यो गर्भः॥५६२॥
द्रोणः पञ्चनिमित्ते गर्भे त्रीण्याढकानि पवनेन।
षड्विद्युता नवाभ्रैः स्तनितेन द्वादशप्रसवे॥५६३॥
पवनसलिलविद्युद्गर्जिताभ्रान्वितो यः
स भवति बहुतोयः पञ्चरूपाभ्युपेतः।
विसृजति यदि तोयं गर्भकालेऽतिभूरि
प्रसवसमयमीत्वा सीकराम्भः करोति॥५६४॥

गर्भधारण का नक्षत्र क्रूरग्रहों से युक्त हो तो वह गर्भ पत्थर, विद्युत् व मत्स्यों के साथ वर्षता है, सूर्य या चन्द्रमा यदि उस नक्षत्र में हैं और शुभग्रह से दृष्ट या युक्त हैं, तो वह गर्भ बहुवृष्टि करता है।

गर्भधारण के समय कारण के बिना अतिवृष्टि गर्भाभाव का द्योतक है।(ग्रहों का उदयास्त, ग्रहयोग, संक्रान्ति, पक्षक्षय, अयनान्त वृष्टि में निमित्त कारण है; क्योंकि इसमें चान्द्रमास के अनुसार वृष्टि होती है।) गर्भ के समय २५ पल से (द्रोण ÷ ८ = २५ पल) अधिक वृष्टि होने पर गर्भ नष्ट हो जाता है।

पुष्टगर्भ वृष्टिनाशक ग्रहोत्पातों से निर्दिष्ट समय पर यदि न बरस सका, तो अपने गर्भग्रहण काल से निर्दिष्ट समय के व्यतीत होने पर पाषाणमिश्रित पानी देता है, जैसे यथासंभव दूध निकालने वाली गाय से कालात्यय होने पर दूध निकालने में कठिनाई आती है, उसी तरह कालातीत जल सोत्पल हो जाता है (पत्थर बनौरी का रूप धारण कर लेता है)।

पाँच कारणों से परिपुष्ट गर्भ चतुर्दिक् सौ योजन तक बरसता है और चार कारणों से ५० योजन, तीन निमित्त कारणों से २५, दो से १२½ योजन, १ से ५ योजन तक वृष्टि होती है।

पुनः वर्षा का परिमाण – पाँच निमित्त वाला गर्भ एक द्रोण व विद्युत् से युक्त ६ आढ़क वर्षता है। निमित्तों के साथ नूतन मेघों से युक्त गर्भ ९ आढ़क पानी देता है। गर्जनयुक्त गर्भ अपने समय पर १२ आढ़क जल देता है व वायुयुक्त गर्भ तीन आढ़क पानी देता है। निमित्त का अध्याहार सर्वत्र करना चाहिए।

१. पवन (वायु), २. सलिल (जल), ३. विद्युत् (तडित्), ४. गर्जन (गर्जनयुक्त मेघ), ५. अभ्र – ये पाँच गर्भधारण में कारण हैं। इन पाँचों निमित्तों से युक्त गर्भ (बहु वर्षति) अत्यधिक जल देता है। यदि गर्भधारण के समय अधिक जल वर्षता है, तो वर्षा के समय सीकरमात्र (जलबिन्दु मात्र) पानी होता है, प्रभूत जल नहीं होता है ॥५५८-५६४॥

अथ मेघानां गर्भधारणं वाराहीसंहितायाम् –

**ज्येष्ठसितेऽष्टम्याद्याश्चत्वारो वायुधारणा दिवसाः।**
**मृदुशुभपवनाः शस्ताः स्निग्धघनस्थगितगगनाश्च ॥५६५॥**
**तत्रैव स्वात्याद्ये वृष्टे भचतुष्टये क्रमान्मासाः।**
**श्रावणपूर्वा ज्ञेयाः परिश्रुता धारणास्ताः स्युः ॥५६६॥**
**यदि ताः स्युरेकरूपाः शुभास्ततः सान्तरास्तु न शिवाय।**
**तस्करभयदाः प्रोक्ताः श्लोकाश्चाप्यत्र वासिष्ठाः ॥५६७॥**
**सविद्युतः सपृषतः सपांशूत्करमारुताः।**
**सार्कचन्द्रपरिच्छिन्ना धारणाः शुभदायकाः ॥५६८॥**
**यदा तु विद्युतः श्रेष्ठाः शुभाशाप्रत्युपस्थिताः।**
**तदापि सर्वसस्यानां वृद्धिं ब्रूयाद्विचक्षणः ॥५६९॥**
**सपांशुवर्षाः सापश्च शुभा बालक्रिया अपि।**
**पक्षिणां सुस्वरा वाचः क्रीडा पांशुजलादिषु ॥५७०॥**
**रविचन्द्रपरीवेषाः स्निग्धा नात्यन्तदूषिताः।**
**वृष्टिस्तदापि विज्ञेया सर्वसस्याभिवृद्धये ॥५७१॥**

**मेघाः स्निग्धास्संहताश्च प्रदक्षिणगतिक्रियाः।**
**तदा स्यान्महती वृष्टिः सर्वसस्यार्थसाधिका॥५७२॥**

ज्येष्ठशुक्ल अष्टमी से ४ दिन तक वायु के गर्भधारण का दिन है। इन दिनों में सुखस्पर्श उत्तर, ईशान व पूर्व दिशा का वायु एवं स्निग्ध मेघाच्छन्न आकाश होने पर प्रशस्त गर्भधारण होता है। यदि ज्येष्ठशुक्ल अष्टमी से चार दिन के अन्दर अष्टमी, नवमी, दशमी, एकादशी को स्वाती, विशाखा, अनुराधा व ज्येष्ठा नक्षत्र गर्भकाल में व्यवस्थित रहे हों, तो क्रमशः श्रावण, भाद्रपद, आश्विन व कार्तिक में वृष्टि होगी, यदि उन नक्षत्रों में भ्रमणभिन्न[1] से गर्भ हुआ तो वृष्टि का अभाव कहना चाहिए। क्रमशः स्वाती से श्रावण, विशाखा से भाद्रपद, अनुराधा से आश्विन, ज्येष्ठा से कार्तिक में वर्षा होगी। ज्येष्ठमास के इन नक्षत्रों में वृष्टि होना गर्भाभाव का लक्षण है। ज्येष्ठ में जो गर्भधारण के चार दिन हैं, यदि वे चारों दिन गर्भ-धारण के लक्षण समान हों, तो शुभसूचक, अन्यथा अशिवाय अमाङ्गलिक हैं, जिससे तस्करभय होता है। इस अर्थ के विषय में वसिष्ठोक्त श्लोक ५६८ से ५७२ तक दिये जा रहे हैं।

उन दिनों (ज्येष्ठशुक्ल अष्टम्यादि चार दिन) विद्युत् ईषज्जलबिंदु, धूलि उड़ाता हुआ वायु, सूर्य-चन्द्र का मेघाच्छन्न होना शुभसूचक है। ये जो शुभसूचक विद्युतादि प्रतिपादित हैं, वे उत्तर, ईशान व पूर्व दिशा से उत्पन्न हैं, तो सभी सस्यों धान्यों (शारदीय, ग्रैष्मिक) के लिए शुभ हैं, सब प्रकार के धान्यों की वृद्धि होगी। यह शुक्ल का गर्भ पांशु वर्षा के साथ हो तो शुभ है और बालकों का सामोद क्रीड़न, पक्षियों का मधुर विराव, पांशु, जल व गोमय, कनई से बालकों या पक्षियों का क्रीड़न शुभसूचक है।

---

१. शुभसूचक गर्भधारण - विधिविरुद्ध।

सूर्य-चन्द्र के स्निग्ध परिवेष के साथ वृष्टि सर्व सस्यों की साधिका है – 'सर्वधान्योत्पत्तिः शुभा' इति। 'स्निग्धघना दक्षिणावर्तपरिभ्रमण-शीला' इत्यादि विधिविहित नियमों के अनुकूल स्निग्ध मेघ दिखाई दे तो सम्पूर्ण सस्यों की अभिवृद्धि का कारण है। पूर्व से दक्षिण, दक्षिण से पश्चिम, पश्चिम से उत्तर, इस प्रकार भ्रमणशील मेघ का प्रवर्षण सर्वधान्योत्पत्ति का सूचक है ॥५६५-५७२॥

अथ रोहिणीयोगो वाराहीसंहितायाम् –

**सुरनिलयशिखरिशिखरे बृहस्पतिर्नारदाय यानाह।**
**गर्गपराशरकश्यपमयाश्च याञ्छिष्यसङ्घेभ्यः ॥५७३॥**
**तानवलोक्य यथावत् प्राजापत्येन्दुसम्प्रयोगार्थान्।**
**स्वल्पग्रन्थेनाहं तानेवाभ्युद्यतो वक्तुम् ॥५७४॥**

रोहिणी-योग –

देवनिवासों, सुवर्ण-पाषाणमय भूमि, सुगन्धित सुमनोहर पुष्पों के पराग में विलीन भ्रमरों के सुमधुर गुंजनों से युक्त वृक्षों एवं लताओं से परिवृत उपवनों में देवगुरु बृहस्पति, नारद, गर्ग, पराशर, मय प्रभृति शिष्यसमूहों से जिस रोहिणी-चन्द्रमा के योगों का वर्णन किये हैं, मैं उसी को छोटे-से ग्रन्थ में कहने के लिए उद्यत हूँ ॥५७३-५७४॥

**प्राजेशमाषाढतमिस्रपक्षे क्षपाकरेणोपगतं समीक्ष्य।**
**वक्तव्यमिष्टं जगतोऽशुभं वा शास्त्रोपदेशाद् ग्रहचिन्तकेन ॥५७५॥**
**पुरादुदग्यत्पुरतोऽपि वा स्थलं त्र्यहोषितस्तत्र हुताशतत्परः।**
**ग्रहान्सनक्षत्रगणान्समालिखेत्सधूपपुष्पैर्बलिभिश्च पूजयेत् ॥५७६॥**
**सरत्नतोयौषधिभिश्चतुर्दिशं तरुप्रवालापिहितैः सुपूजितैः।**
**अकालमूलैः कलशैरलङ्कृतं कुशास्तृतं स्थण्डिलमावसेद्द्विजः ॥५७७॥**

**आलभ्य मन्त्रेण महाव्रतेन बीजानि सर्वाणि निधाय कुम्भे।**

**प्लाव्यानि चामीकरगर्भतोयैर्होमो मरुद्वारुणसौम्यमन्त्रैः॥५७८॥**

**श्लक्ष्णां पताकामसितां विदध्याद्दण्डप्रमाणां त्रिगुणोच्छ्रितां च।**

**आदौ कृते दिग्ग्रहणे नभस्वान् ग्राह्यस्तथा योगगते शशाङ्के॥५७९॥**

विषय – दैवज्ञ आषाढ़ कृष्णपक्ष में भावी चन्द्रमा-रोहिणी के योग के अनुसार शास्त्रोपदिष्ट जगत् के शुभाशुभ फल का प्रतिपादन करें।

चन्द्रबिम्ब परिमाण कान्ति, वर्ण, पूर्वादि आठ दिशाओं की स्थिति व तात्कालिक उल्कापात, प्रचण्ड वायु से होने वाला जगत् का शुभाशुभ फल कहना चाहिए।

योगों के कहने का विधान –

ग्राम के उत्तर दिशा में तीन दिन तक व्रती ब्राह्मण विधिपूर्वक सुगन्ध, कुश, पुष्प, गन्ध, माल्य, नैवेद्यादि षोडशोपचार पूजन, हवनादि से ग्रहयाग सम्पन्न करें।

सभी प्रकार के बीजों को महाव्रत मन्त्र से अभिमंत्रित करके कुशा, सुवर्ण के साथ घड़े के जल में डुबो दें और वायु, वरुण व सोम के मन्त्रों से हवन और काले रंग की ध्वजा फहरा दी जाय। उस ध्वजा का दण्ड चार हाथ का होगा, किसी के मत से १२ हाथ के दण्ड में पताका फहराया जाय। दिक्साधन करके रोहिणी-चन्द्र योग में ध्वजोत्तोलन कर उस ध्वजा से वायु की परीक्षा करें। (दिक्साधन गृह-प्रकरण में दिखा दिया गया है।) पताका का दण्ड दिक्साधित प्रदेश के मध्यबिन्दु में स्थापित किया जाय। पूर्वोक्त रोहिणी-चन्द्रयोग में अहोरात्र के आठ यामों के चार मासों के आठ पक्षों की कल्पना करके प्रतिपादित विधि से वर्षा का ज्ञान करें। जिस दिन रोहिणी से चन्द्रमा का योग होता हो, उस दिन के सूर्योदय से प्रथम प्रहर में शुभ सुखस्पर्श वायु बहता है, तो श्रावण के प्रथम पक्ष में देव वर्षेंगे, एवमेव द्वितीय प्रहर से श्रावण के द्वितीय

पक्ष, तीसरे से भाद्रपद प्रथम, चौथे से भाद्रपद के द्वितीय पक्ष, पाँचवें से आश्विन के प्रथम, छठवें से आश्विन के द्वितीय पक्ष, सातवें से कार्तिक के प्रथम, आठवें से कार्तिक के दूसरे पक्ष में वृष्टि होगी। अशुभ वायु से अनावृष्टि समझें॥५७५-५७९॥

**तत्रार्द्धमासाः प्रहरैर्विकल्प्या वर्षानिमित्तं दिवसास्तदंशैः।**

**सव्येन गच्छञ्छुभदः सदैव यस्मिन्प्रतिष्ठा बलवान् स वायुः॥५८०॥**

**कृते तु योगेऽङ्कुरितानि यानि सन्तीह बीजानि धृतानि कुम्भे।**

**येषां तु योंऽशोऽङ्कुरितस्तदंशस्तेषां विवृद्धिं समुपैति नान्यः॥५८१॥**

**शान्तपक्षिमृगराविता दिशो निर्मलं वियदनिन्दितोऽनिलः।**

**शस्यते शशिनि रोहिणीयुते मेघमारुतफलानि वच्म्यतः॥५८२॥**

**क्वचिदसितसितैः सितैः क्वचिच्च क्वचिदसितैर्भुजगैरिवाम्बुवाहैः।**

**वलितजठरपृष्ठमात्रदृश्यैः स्फुरिततडिद्रसनैर्युतं विशालैः॥५८३॥**

**विकसितकमलोदरावदातैररुणकरद्युतिरञ्जितोपकण्ठैः।**

**छुरितमिव वियद्घनैर्विचित्रैर्मधुकरकुंकुमकिंशुकावदातैः॥५८४॥**

**असितघननिरुद्धमेव वा चलिततडित्सुरचापचित्रितम्।**

**द्विपमहिषकुलाकुलीकृतं वनमिव दावपरीतमम्बरम्॥५८५॥**

प्रथम रोहिणी-चन्द्र के योग में घड़े में रखे हुए बीजों में जो बीज पूर्ण रूप से अंकुरित हो गया है, उसकी इस वर्ष वृद्धि होगी। कुम्भ स्थित बीजों में जिसका जितना अंश अंकुरित है, उसकी उतने ही अंश में वृद्धि होगी। अतः बीजों को वर्गभेद से संख्या करके कुम्भ में छोड़ना चाहिए।

रोहिणी-चन्द्रयोग में शान्त, प्रसन्न पशु-पक्षी सूर्य के विरुद्ध दिशाभिमुख शब्द करते हों, तो उनका और आकाश निर्मल, प्रशस्त वायु से युक्त मेघ का फल कहता हूँ, यह ग्रन्थकर्ता का वचन है। यथा –

मुख-पुच्छ अदर्शित, मण्डलाकृति सर्पों की भाँति मेघों से आकाश व्याप्त हो (कभी श्वेत-कृष्ण कभी कृष्ण-श्वेत, तो कभी श्वेत, कभी कृष्ण रंग के निर्मल मेघों से आकाश आच्छादित हो) तथा विकसित कमल-पुष्पपत्र के उदर जैसा रक्त-श्वेत (आकण्ठ) वर्ण के देदीप्यमान भ्रमर, कुंकुम, किंशुक (काला, लाल, श्वेत, रक्त) जैसी कान्तियों से आकाश मण्डल को रञ्जित करने वाले मेघ का लक्षण शुभ वृष्टिकारक है।

हाथी, महिषों के समूहों से व्याकुलित (क्षुब्ध) वनाग्नि की ज्वाला से प्रभावित, लाल, कृष्ण, श्वेत, हरितादि से विचित्र वन की भाँति चञ्चल विद्युत्, इन्द्रधनुष व मेघों से रञ्जित आकाश दिखाई देता है ॥५८१-५८५॥

**अथवाञ्जनशैलशिलानिचयप्रतिरूपधरैः स्थगितं गगनम्।**
**हिममौक्तिकशंखशशाङ्कद्युतिहारिभिरम्बुधरैरथवा ॥५८६॥**

**तडिद्धैमकक्षैर्बलाकाग्रदन्तैः स्रवद्वारिदानैश्चलत्प्रान्तहस्तैः।**
**विचित्रेन्द्रचापध्वजोच्छ्रायशोभैस्तमालालिनीलैर्वृतं चाब्दनागैः ॥५८७॥**

अथवा काले पाषाणों के पर्वतों जैसा मेघमण्डलों से आच्छादित आकाश-मण्डल अथवा तुषार, मोती, शंख व चन्द्रकिरणों को मानो चुराकर तदाकृति जैसा भान होने वाले मेघों से आच्छादित नभोमण्डल (श्वेत वर्ण के मेघों से व्याप्त), सुवर्ण के जंजीर में बँधे हंस पंक्ति जैसा श्वेत दाँतों, मन्दप्रवाहित, ऊपर उठाए सूड़ों वाले हाथी जैसे, चमकदार श्वेत, कृष्ण, रक्त वर्णों वाली विद्युत् से प्रकाशित शुंडाकृति जैसे अग्रभाग से प्रवाहित जलबिन्दुओं से विचित्र प्रतीत होने वाले नाना वर्ण के आभा से आभासित उच्छ्रित ध्वज जैसे इन्द्रधनुष से भासित होने वाले आकाशमंडल का दिखाई देना ॥५८६-५८७॥

**सन्ध्यानुरक्ते नभसि स्थितानां वृन्दानि पीताम्बरवेष्टितस्य।**
**क्रान्तिं हरेश्चोरयतां यदा वा इन्दीवरश्यामरुचां घनानाम् ॥५८८॥**

मेघ-वर्णन –

सन्ध्या के राग जैसा रक्त-पीतमिश्रित वर्ण एवं नीलकमल की आभा से आभासित पीताम्बर धारण करने वाले भगवान् की कान्ति व इन्दीवर कमल कान्ति जैसे मेघमण्डलों से आच्छादित आकाशमण्डल का दिखाई देना ॥५८८॥

**संशिखिचातकदर्दुरनिःस्वनैर्यदि विमिश्रितमन्द्रपटुस्वनाः।**

**खमवतत्यदिगन्तविलम्बिनः सलिलदाः सलिलौघमुचः क्षितौ ॥ ५८९॥**

मयूर, सारङ्ग (चातक), मण्डूक जैसे मन्द, मधुर, चतुर शब्दायमान आकाश से दिशाओं तक लम्बायमान मेघ प्रचुर जल देते हैं। एतादृशा मेघाः प्रचुरवृष्टिदा इति (उपर्युक्त लक्षणयुक्त मेघ प्रचुर जल देते हैं) ॥५८९॥

**निगदितरूपैर्जलधरजालैस्त्र्यहमवरुद्धं द्व्यहमथवाहः।**

**यदि वियदेवं भवति सुभिक्षं मुदितजना च प्रचुरजला भूः॥५९०॥**

उपर्युक्त आकृति के मेघों से आच्छादित आकाशमण्डल तीन, दो या एक दिन दिखाई देने पर पृथ्वी प्रसन्न जनसमूहों व प्रचुर जलराशि से मुदित प्रतीत होगी ॥५९०॥

**रुक्षैरल्पैर्मारुताक्षिप्तदेहैरुष्ट्रध्वांक्षप्रेतशाखामृगाभैः।**

**अन्येषां वा निन्दितानां स्वरूपैर्मूकैश्चाब्दैर्नो शिवं नापि वृष्टिः॥ ५९१॥**

रुक्ष, अल्प वायु से प्रेरित ऊँट, काक, प्रेत, मर्कट की आभा से आभासित अन्य निन्दित श्वा, अज, मार्जार सदृश मूक मेघों से देश का कल्याण (वृष्टि के अभाव में) नहीं होता है ॥५९१॥

**विगतघने वा वियति विवस्वानमृदुमयूखः सलिलकृदेवम्।**

**सर इव फल्लं निशि कुमुदाढ्यं खमुडुविशुद्धं यदि च सुवृष्ट्यै ॥ ५९२॥**

पूर्वोद्भूतैः सस्यनिष्पत्तिरब्दैराग्नेयाशासम्भवैरग्निकोपः।
याम्ये सस्यं क्षीयते नैर्ऋतेऽर्घं पश्चाज्जातैः शोभना वृष्टिरब्दैः॥५९३॥
वायव्योत्थैर्वातदृष्टिः क्वचिच्च पुष्टा वृष्टिः सौम्यकाष्ठासमुत्थैः।
श्रेष्ठं सस्यं स्थाणुदिक्संप्रवृद्धैर्वायुश्चैवं दिक्षु धत्ते फलानि॥५९४॥
उल्कानिपातास्तडितोऽशनिश्च दिग्दाहनिर्घातमहीप्रकम्पाः।
नादा मृगाणां सपतत्रिणां च ग्राह्या यथैवाम्बुधरास्तथैव॥५९५॥
दूरगो निकटगोऽथवा शशी रोहिणीं यदि युनक्ति सर्वथा।
दक्षिणे पथि यथा तथा स्थितः कष्टमेव जगतो विनिर्दिशेत्॥५९६॥
स्पृशन्नुदग् याति यदा शशाङ्कस्तदा सुवृष्टिर्बहुलोपसर्गाः।
असंस्पृशं योगमुदक्समेतः करोति वृष्टिं विपुलां शिवं च ॥५९७॥

अन्य शुभ लक्षण –

सहस्ररश्मि सूर्य मेघाच्छन्न रहित प्रचण्ड रश्मियों से निर्मल दिखाई दे अथवा सरोवर में विकसित कुमुदिनियों जैसे प्रसन्न निर्मल म्लानरहित ताराओं से भरपूर आकाश दिखने पर पूर्वोक्त विधान के अनुसार वृष्टि होती है।

मेघमंडल पूर्व दिशा में प्राचुर्य मात्रा में उदय दिखाई दे तो सस्योत्पत्ति होती है, अग्निकोण में उसी प्रकार के मेघों के उदय से अग्निभय होता है, दक्षिण दिशा में उत्पन्न मेघमंडल से सस्य की हानि होती है, नैर्ऋत्यकोण में उत्पन्न मेघ से अधिक मात्रा में सस्योत्पत्ति होती है, पश्चिम दिशा में उत्पन्न मेघ से प्रचुर यथेष्ट वृष्टि होती है, वायव्योत्पन्न मेघ वायु की अधिकता से भरपूर रहता है और खंड वृष्टि करता है, उत्तर में उत्पन्न मेघमंडल परिपूर्ण वृष्टि करता है। ईशानकोणोत्पन्न मेघ से पूर्ण सस्योत्पत्ति होती है। इस प्रकार दिशोत्पन्न मेघ जैसा फल देते

हैं, ठीक उसी प्रकार तत्तद्दिशाओं से प्रारंभ वायु भी फल देते हैं। ये समस्त परीक्षण तथा रोहिणी-चन्द्रयोग के दिन सम्भूत मेघादिजन्य फल का ज्ञान पूर्ण वर्ष में करना चाहिए।

उल्कापात, विद्युत्पात, वज्रपात का फल आगे निर्दिष्ट है (बाद में कहा जाएगा); किन्तु दिग्दाह (ज्वलन की भाँति दिशाओं में प्रतीति), मेघगर्जन, भूकम्प, आरण्यक पशु-मृगादि, पक्षियाँ भी पूर्वादि दिक्क्रम से शब्द करते हुए प्रकट हों तो मेघवत् फल कहना चाहिए।

चन्द्रमा, रोहिणी को जिस प्रकार वक्ष्यमाण (दूर, सन्निकट या दक्षिण) से सम्बद्ध करते हैं, उसी प्रकार जगत् के अशुभ, दुर्भिक्ष, जनमरण आदि का निर्देश करें। यथा चन्द्रमा दक्षिण से रोहिणी का स्पर्श कर उत्तर (उत्तरशर) जाते हैं, तो अत्यधिक उपद्रवों (वायु, ओला आदि) के साथ समयानुकूल पूर्ण वृष्टि होती है; किन्तु लोक उपद्रवों से ग्रसित होगा, यदि चन्द्रमा रोहिणी को स्पर्श किये बिना ही उत्तर दिशा में चले जाते हैं, तो सुभिक्ष, सुवृष्टि व कल्याण भी होगा ॥५९२-५९७॥

**आग्नेय्यां दिशि चन्द्रमा यदि भवेत्तत्रोपसर्गो महान्**
**नैर्ऋत्यां समुपद्रुतानि निधनं सस्यानि यान्तीतिभिः[1]।**
**प्राजेशानिलदिक्स्थिते हिमकरे सस्यस्य मध्यश्चयो**
**याते स्थाणुदिशं गुणाः सुबहवः सस्यार्घवृद्ध्यादयः॥ ५९८॥**

रोहिणी-चन्द्रयोग परीक्षण में यदि चन्द्रमा रोहिणी से अग्निकोण में हो तो उस वर्ष में अनेक उपद्रव होंगे तथा नैर्ऋत्य के चन्द्रयोग से ईतिभय, सस्य नष्ट हो जायेगी, यदि चन्द्रमा-रोहिणी योग वायव्यकोण में हो तो धान्य-संघटन (उत्पत्ति या संग्रह) मध्यम होगा। ईशान के चन्द्र

---

१. अतिवृष्टिरनावृष्टिर्मूषिका शलभा शुकाः।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः॥ (ये छः ईति हैं।)

से प्रभूत (अधिक) गुणों का प्रादुर्भाव होता है, अर्थात् सस्य, धान्य, अर्घ, सुभिक्ष, आरोग्य से प्रजा सुखानुभूति करेगी।

**गोप्रवेशसमयेऽग्रतो वृषो याति कृष्णपशुरेव वा पुरः।**
**भूरिवारिशबले तु मध्यमं नो सितेऽम्बुपरिकल्पनापरैः॥५९९॥**
**दृश्यते न यदि रोहिणीयुतश्चन्द्रमा नभसि तोयदावृते।**
**रुग्भयं महदुपस्थितं तदा भूश्च भूरिजलसस्यसंयुता॥६००॥**

**॥ इति रोहिणीयोगः ॥**

सायं-सन्ध्या के समय अरण्य से ग्राम आती हुई गायों के आगे (पुरःसर) यदि वृषभ या काले रंग का कोई पशु हो तो उस वर्ष में भूरि वृष्टि (अधिक वर्षा) होगी। यदि आगे चलने वाला पशु शबल (कृष्ण-श्वेत दो वर्ण बराबर) हो तो सस्योत्पत्ति मध्यम होगी, यदि उस पशु का कृष्ण भाग अधिक है, तो अधिक वृष्टि, शुक्लाधिक्य से वृष्टि का अभाव होगा।

मेघाच्छन्नवश रोहिणी-योग का चन्द्रमा न दिखाई दे तो रोग अधिक होगा, सस्य व वृष्टि से मेदिनी परिपूर्ण रहेगी॥५९९-६००॥

अथ स्वातीयोगस्तत्रैव –

**यद्रोहिणीयोगफलं तदेव स्वातावषाढासहिते च चन्द्रे।**
**आषाढशुक्ले निखिलं विचिन्त्यं योऽस्मिन्विशेषस्तमहं प्रवक्ष्ये॥६०१॥**
**स्वातौ निशांशे प्रथमेऽभिवृष्टे सस्यानि सर्वाण्युपयान्ति वृद्धिम्।**
**भागे द्वितीये तिलमुद्गमाषा ग्रैष्मं तृतीयेऽस्ति न शारदानि॥६०२॥**
**वृष्टेऽह्निभागे प्रथमे सुवृष्टिस्तद्वद्द्वितीये तु सकीटसर्पाः।**
**वृष्टिस्तु मध्या परभागवृष्टे निश्छिद्रवृष्टिर्द्युनिशं प्रविष्टे॥६०३॥**

अब स्वाती-योग का विचार प्रस्तुत है –

रोहिणी-चन्द्र के योग (दूर, निकट, दिशादि) से मेघ, वायु व उत्पात-जन्य जो फल उक्त है, वह सभी स्वाती-आषाढ़ के योग से चन्द्रमा का फल कहना चाहिए; किन्तु आषाढ़ व शुक्ल ये दो केयोग से जो विशेष फल है, उसे आगे कहूँगा।

यदि स्वाती-चन्द्र योग रात्रि के प्रथम त्रिभाग में हुआ है, तो वृष्टि सम्पूर्ण, धान्य परिपूर्ण उत्पन्न होंगे। दूसरे त्रिभाग के योग की वृष्टि से तिल, मुद्ग (मूँग) की अधिक उत्पत्ति होगी। तृतीय त्रिभाग के योग से ग्रीष्म धान्योत्पत्ति (शारदीय धान की नहीं) होगी। एवं दिन के प्रथम त्रिभाग में अच्छी वृष्टि, द्वितीय में सुवृष्टि होती है; किन्तु कीड़े व सर्पों की वृद्धि होती है। तृतीय त्रिभाग में मध्यम वृष्टि होती है। समग्र अहोरात्र के योग से दोष-रहित वृष्टि होती है, अर्थात् यथासमय वृष्टि होती है ॥६०१-६०३॥

**सममुत्तरेण तारा चित्रायाः कीर्त्यते ह्यपांवत्सः।**
**तस्यासन्ने चन्द्रे स्वातेर्योगः शिवो भवति॥६०४॥**

**सप्तम्यां स्वातियोगे यदि पतति हिमं माघमासान्धकारे**
**वायुर्वा चण्डवेगः सजलजलधरो वापि गर्जत्यजस्रम्।**
**विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं**
**विज्ञेया प्रावृडेषा मुदितजनपदा सर्वसस्यैरुपेता॥६०५॥**

**तथैव फाल्गुने चैत्रे वैशाखस्यासितेऽपि वा।**
**स्वातियोगं विजानीयादाषाढे च विशेषतः॥६०६॥**

**॥ इति स्वातीयोगफलम् ॥**

चित्रा नक्षत्र से पाँच अंश उत्तर अपांवत्स तारा का स्थान है, इनके निकट स्वाती-चन्द्र के योग से जगत् के लिए श्रेयस्कर (कल्याण, शुभ) है। माघ मास कृष्णपक्ष सप्तमी तिथि को यदि स्वाती-चन्द्रयोग होता है और उस दिन तुषारपात (हिमपात कुहासा), प्रचण्ड शब्दायमान वायु का वहन, जल वर्षा, अनवरत (निरन्तर) गर्जता हुआ मेघ अथवा आकाश विद्युन्मालाओं से व्याप्त (अतिशय विद्युत् प्रभावित नभोमंडल), सूर्य, चन्द्र, ताराओं का अदर्शन (अत्यन्त मेघाच्छन्न नभ) से वर्षाऋतु में होने वाली वर्षा से सर्वसस्योत्पत्ति होगी व लोक हृष्ट-पुष्ट आनन्दानुभव करेगा। माघ-सप्तमी योग के दिन जैसे मेघमंडल की स्थिति का फल प्रकट किया गया है। ठीक वैसा ही फाल्गुन, चैत्र व वैशाख कृष्णपक्ष के स्वाती-चन्द्रयोग से फल होता है; किन्तु आषाढ़-स्वाती योग में अन्य विशेषताएँ भी हैं। यह ६०६ श्लोक आर्ष नहीं है, (''यथोक्तमुत्पलेन– अनार्षोऽयं श्लोकः'' इति बृ० सं०, पृ० ३५६, श्लोक-६) ॥६०४-६०६॥

अथाषाढीपूर्णाफलं तत्रैव –

**आषाढ्यां समतुलिताधिवासितानामन्येद्युर्यदधिकतामुपैति बीजम्।**
**तद्वृद्धिर्भवति न जायते यदूनं मन्त्रोऽस्मिन्भवति तुलाभियन्त्रणाय ॥ ६०७॥**

**स्तोतव्या मन्त्रयोगेन सत्या देवीसरस्वती।**
**दर्शयिष्यसि यत्सत्यं सत्ये सत्यव्रता ह्यसि ॥ ६०८॥**

**येन सत्येन चन्द्रार्कौ ग्रहा ज्योतिर्गणास्तथा।**
**उत्तिष्ठन्तीह पूर्वेण पश्चादस्तं व्रजन्ति च ॥ ६०९॥**

**यत्सत्यं सर्ववेदेषु यत्सत्यं ब्रह्मवादिषु।**
**यत्सत्यं त्रिषु लोकेषु तत्सत्यमिह दृश्यताम् ॥ ६१०॥**

**ब्रह्मणो दुहितासि त्वमादित्येति प्रकीर्त्तिता।**
**काश्यपी गोत्रतश्चैव नामतो विश्रुतातुला ॥ ६११॥**

आषाढ़-स्वाती योग, रोहिणी-चन्द्र योग जनित शकुनादि फल उत्तराषाढ़ व चन्द्रयोग से भी होगा; किन्तु यहाँ आषाढ़ी पूर्णिमा विशेष विचारणीय है।

आषाढ़ पूर्णिमा के दिन सम्भावित बीजों को महाव्रत मन्त्र से अभिमंत्रित व तौलकर रात्रि में भूमि के अंदर पृथक्-पृथक् रख दिया जाय और दूसरे दिन बीजों को अलग-अलग तौलने पर जो बीज पूर्व की अपेक्षा अधिक हो उसकी वर्तमान वर्ष में वृद्धि होगी, न्यून बीजों की वृद्धि नहीं है।

तोलने वाला तुला को "स्तोतव्या मन्त्रयोगेन" से आरम्भ करके "......नामतो विश्रुता तुला" इत्यन्त मन्त्रों से अभिमन्त्रित करके तोलनादि कार्य करे ॥६०८-६११॥

**क्षौमं चतुस्सूत्रकसन्निबद्धं षडङ्गुलं शिक्यकवस्त्रमस्याः।**

**सूत्रप्रमाणं च दशाङ्गुलानि षडेव कक्षोभयशिक्यमध्ये ॥६१२॥**

तुला-लक्षण –

इस तुला की शिकी को क्षौम रेशम की डोरी से (शिकी= पलड़ा=आधार) बाँधना चाहिए, जो चार सूत्रों से मिश्रित परिपुष्ट बाँधा जायेगा। शिकी ६ अंगुल, बाँधने वाला सूत्र १० अंगुल, ऊपर की दण्डी, ६ अंगुल लम्बे ब्रह्मसूत्र से दोनों कक्षों का बन्धन करें। तुला का निर्माण यथोक्त विधि से किया जाय ॥६१२॥

**याम्ये शिक्ये काञ्चनं सन्निवेश्यं शेषद्रव्याण्युत्तरेऽम्बूनि चैवम्।**

**तोयैः कौप्यैः सैन्धवैः सारसैश्च वृष्टिर्हीना मध्यमा चोत्तमा च ॥६१३॥**

दक्षिण शिक्य (पलड़े) पर सुवर्ण, शेष द्रव्य व जल उत्तर शिक्य पर रखें, मापक यदि सुवर्ण है, तो उसे दक्षिण रखें अर्थात् मापक दक्षिण व माप्य वस्तु उत्तर पलड़े पर रखा जाय। पूर्वपिक्ष्य कूपोत्पन्न जल की वृद्धि हो तो हीन वृष्टि, सैन्धव (नदी-समुद्र) के जल में मध्यम, सरोवर

जल की वृद्धि से उत्तम वृष्टि एवं सभी जलों की वृद्धि से उत्तम परिपूर्ण वृष्टि होती है ।।६१३।।

**दन्तैर्नागा गोहयाद्याश्च लोम्ना हेम्ना भूपाः शिक्थकेन द्विजाद्याः।**

**तद्वद्देशा वर्षमासा दिशश्च शेषद्रव्याण्यात्मरूपस्थितानि ।।६१४।।**

हाथी के वृद्धि-ह्रास हेतु हाथी के दाँत को उत्तर शिक्थ पर स्थापित करें, दाँत की वृद्धि से हाथियों की वृद्धि एवं लोम से गो, अश्व, खच्चर, बकरा आदि, सुवर्ण से राजा, मधु से ब्राह्मणादि चार वर्ण, इसी प्रकार देश, वर्ष, मास, दिशा, अनुक्त द्रव्यादि स्वयं रखे जाँय, पूर्वोक्त रीति जिसके लिए परिच्छेद्य मापक हो, उसकी वृद्धि से वस्तु की वृद्धि तथा हीन से हानि होती है ।।६१४।।

**हैमी प्रधाना रजतेन मध्या तयोरलाभे खदिरेण कार्या।**

**विद्धः पुमान्येन शरेण सा वा तुलाप्रमाणेन भवेद्वितस्तिः।।६१५।।**

**हीनस्य नाशोऽभ्यधिकस्य वृद्धिस्तुल्येन तुल्यं तुलितं तुलायाम्।**

**एतत्तुलाकोशरहस्यमुक्तं प्राजेशयोगेऽपि नरो विदध्यात्।।६१६।।**

**स्वातावषाढास्वथ रोहिणीषु पापग्रहा योगगता न शस्ताः।**

**ग्राह्यं तु योगद्वयमप्युपोष्य यदाधिमासो द्विगुणीकरोति।।६१७।।**

**त्रयोऽपि योगाः सदृशाः फलेन यदा तदा वाच्यमसंशयेन।**

**विपर्यये यत्त्विह रोहिणीजं फलं तदेवाभ्यधिकं निगद्यम्।।६१८।।**

तुला-व्यवस्था –

सुवर्ण की तुला उत्तम, चाँदी की तुला मध्यम, इनके अभाव में खैर की लकड़ी की तुला बनानी उचित है या ज़िस बाण से कोई पुरुष विद्ध होता है, उस शर (बाण) की तुला बनाई जाय। वह १२ अंगुल की होगी, नापा हुआ द्रव्य यदि पूर्वपिक्षया हीन है, तो तत्सम्बन्धी वस्तुओं की हानि, अन्यथा वृद्धि है, सम से सम होगा।

वह तुला कोशरहस्य (परम गोपनीय) है, रोहिणी योग व केवल आषाढ़ योग से तुलाकोश का विधान न बनावें; अपितु सभी रोहिणी, स्वाती, उत्तराषाढ़ तीनों के योगानुसार तुलाकोश का फल समझने का प्रयास करना चाहिए। अन्य तीनों योगों में पापग्रह योग से शुभ नहीं है (स्वाती-चन्द्र, रोहिणी-चन्द्र, आषाढ़ी उत्तराषाढ़ चन्द्रयोग में योग नक्षत्रों के साथ पापग्रह हो तो शुभ नहीं है)। यदि आषाढ़ मास अधिमास हो जाय तो दोनों मासों में योग का विचार करना चाहिए। स्वाती योग सामान्य रूप से विहित है, इसलिए मलमासप्रयुक्त दो योग की चर्चा की गई है, अन्यथा तीन योग होता है – स्वाती, उत्तराषाढ़, रोहिणी। इन तीनों योगों का शुभाशुभ फल समान है, तो दो योग कहने से तृतीय फल में बाधा नहीं है; क्योंकि आठों दिशाओं का फल तीनों योगों का एक-सा है, तीनों के शुभ से शुभ व अशुभ से अशुभ फल कहना चाहिए ॥६१५-६१८॥

**निष्पत्तिरग्निकोपो वृष्टिर्मन्दाथ मध्यमा श्रेष्ठा।**
**बहुजलपवना पुष्टा शुभा च पूर्वादिभिः पवनैः॥६१९॥**

**वृत्तायामाषाढ्यां कृष्णचतुर्थ्यामजैकपादर्क्षे।**
**यदि वर्षति पर्जन्यः प्रावृट्शस्ता न चेन्न ततः॥६२०॥**

**आषाढ्यां पौर्णमास्यां तु यद्यैशानोऽनिलो भवेत्।**
**अस्तं गच्छति तीक्ष्णांशौ सस्यसम्पत्तिरुत्तमा॥६२१॥**

अथाषाढीपूर्णायां सूर्यास्तेऽष्टदिग्वायुफलं तत्रैव –

**पूर्वः पूर्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णित-**
**श्चन्द्रार्कांशुसटाभिघातकलितो वायुर्यदाकाशतः।**
**नैकान्तस्थितनीलमेघपटलां शारद्यसंवर्द्धितां**
**वासन्तोत्कटसस्यमण्डिततलां विद्यात्तदा मेदिनीम्॥६२२॥**

निष्पत्ति –

पूर्वोक्त फलों में वायु का भी फल निर्दिष्ट है, यथा पूर्व के वायु से सभी प्रकार की सस्योत्पत्ति उत्तम होती है। अग्निकोण के वायु से अग्निभय, दक्षिण के वायु से अल्पवृष्टि, नैऋत्य के वायु से मध्यम, पश्चिम के वायु से उत्तम, वांयव्य के वायु से अधिक जल व प्रचण्ड वायु, उत्तर के वायु से उत्तम परिपूर्ण व परिपोषक वृष्टि, ईशान के वायु से उत्तम श्रेयस्करी वृष्टि होती है। 'रोहिणीयोगे वायुश्चैव दिक्षु धत्ते फलानि' इसी से स्पष्ट है। यद्यपि वायु-फल कहा गया है, तब भी "निष्पत्तिरग्निकोण:" इत्यादि कहना पुनरुक्ति न मानकर शिष्य-भ्रान्ति निराकरण हेतु कहा गया है ॥६१९॥

आषाढ़शुक्ल पूर्णिमा के बाद कृष्णपक्ष की चतुर्दशी के दिन पूर्वभाद्रपद नक्षत्र में यदि मेघ वर्षता है, तो वर्षा ऋतु की वर्षा शुभदायिनी होगी, अन्यथा अशुभ होगी ॥६२०॥

सूर्यास्त के समय आषाढ़ पूर्णिमा के दिन यदि ईशानकोण का वायु चलता है, तो सस्योत्पत्ति होगी।

आषाढ़शुक्ल पूर्णिमा के दिन पूर्वदिशा के (पूर्वीय) समुद्र की ऊर्मियों के शिखरों को तितर-बितर करने से भ्रमित सूर्य-चन्द्र के किरणरूपी स्कन्धों तक लटकते किरण समूहों से मिश्रित आकाश से वायु बहता है और पृथ्वी नील मेघों के समूहों से सर्वत्र आच्छादित है, तो शारदीय धान्यों की उत्पत्ति (भूसमृद्धि) और ग्रीष्म, वसंत ऋतु के धान्य से भूपृष्ठ मंडित (आच्छादित) हो जाएगा, अर्थात् समस्त भूमण्डल ग्रीष्म व शारदीय धान्य से परिपूर्ण होगा ॥६२१-६२२॥

**यदाग्नेयो वायुर्मलयशिखरास्फालनपटुः**

**प्लवत्यस्मिन् योगे भगवति पतङ्गे प्रवसति।**

**तदा नित्योद्दीप्ता ज्वलनशिखरालिङ्गिततला**

**स्वगात्रोष्मोक्ष्वासैर्वमति वसुधा भस्मनिकरम् ॥६२३॥**

तालीपत्रलतावितानतरुभिः शाखामृगान्नर्त्तयन्
योगेऽस्मिन्प्लवति ध्वनन् सुपुरुषो वायुर्यदा दक्षिणः।
सर्वोद्योगसमुन्नताश्च गजवत्तालाङ्कुशैर्घट्टिताः
कीनाशा इव मन्दवारिकणिकान्मुञ्चन्ति मेघास्तदा ॥ ६२४॥
सूक्ष्मैलालवलीलवङ्गनिचया व्याघूर्णयन्सागरे
भानोरस्तमये प्लवत्यविरतो वायुर्यदा नैर्ऋतः।
क्षुत्तृष्णामृतमानुषास्थिशकलप्रस्तारभारच्छदा
मत्ता प्रेतवधूरिवोग्रचपला भूमिस्तदा लक्ष्यते ॥ ६२५॥

यदि आकाश में अग्निकोण से खण्डित (अनेकविध) गति से वायु बहता है (सूर्यास्त समय का प्रयोग सर्वत्र है), तो नित्य उद्दीप्त भूमि प्रज्वलित अग्निज्वाला से परितप्त होकर अपनी ऊष्मा के उच्छ्वास से भस्म समूह वमन करती है (अर्थात् अवर्षण से भू संतप्त हो जाती है)। इसी आषाढ़ी योग में दक्षिण दिशा के आकाश में शाखापत्रसहित तालवृक्षों के झंकझोर से मानो बन्दरों को नचाते हुए जैसा बहता वायु वेग से (तालादि वृक्ष काँपते हैं तो मानो वानरों के नृत्य जैसा प्रतीत होता है) रुक्ष (कठोर) अंकुशाहत गज जैसा शब्द करता है तथा मेघमण्डल कृपण जैसा थोड़ा असन्तोषजनक जल (बिन्दुमात्र) वर्षता है।

आषाढ़ी योग में समुद्रतट पर सूक्ष्म इला, लवङ्ग के वृक्षों का विदारण करता हुआ नैऋत्य का वायु सूर्यास्त समय में बहता है, तो क्षुधा-पिपासा से व्याकुल मृत मानव के अस्थि-खण्डों के विस्तार (ढ़ेर) से शुक्लवस्त्र जैसा धारण करने वाली प्रेतवधू की तरह चञ्चल भूमि दिखाई देती है, अर्थात् अवर्षण, दुर्भिक्ष, महामारी का प्रकोप होता है ॥ ६२३-६२५॥

यदा रेणूत्पातैः प्रविकटसटाटोपचपलः

प्रवातः पश्चार्द्धे दिनकरकरापातसमये।

तदा सस्योपेता प्रवरनृवरा बद्धसमरा

धरा स्थाने स्थानेष्वविरतवसामांसरुधिरा ॥ ६२६॥

आषाढीपर्वकाले यदि किरणपतेरस्तकालोपपत्तौ

वायव्यो वृद्धवेगः प्लवति घनरिपुः पन्नगादानुकारी।

जानीयाद्वारिधाराप्रमुदितमुदितां मुक्तमण्डूककण्ठां

सस्योद्भासैकचिह्नां सुखबहुलतया भाग्यसेनामिवोर्वी ॥ ६२७॥

आषाढ़ी योग – सूर्यास्त के समय में धूलि उड़ाता उत्कट घटाटोप प्रकट करता हुआ चंचल पश्चिम का वायु बहता है, तो बहुविध सस्यों से भूमि परिपूर्ण होगी और प्रधानों के समूहों से आरक्षित स्थान (प्रदेशों) में संग्राम अनवरत चलता रहेगा और मानव के मांस, चर्बी, रुधिर से भू प्लावित रहेगी, अर्थात् स्थान विशेष में निरन्तर युद्ध मार-काट चलते रहने से अनेक लोग मारे जायेंगे।

आषाढ़ी योग व सूर्यास्त के समय वायव्य दिशा से प्रचण्ड धूलि-धूसरित जैसे वेग से वायु बहता है, तो जल की धारा से परिपूर्ण मेदिनी सुख-सम्पत्ति, धान्योत्पत्ति से जन समुदाय को आनन्दित करेगी और मण्डूक समुदाय हर्षित होकर मुक्त कण्ठ से शब्द करेंगे ॥६२६-६२७॥

मेरुग्रस्तमरीचिमण्डलतले ग्रीष्मावसाने रवौ

वात्यामोदिकदम्बगन्धसुरभिर्वायुर्यदा चोत्तरः।

विद्युद्भ्रान्तिसमस्तकान्तिकलनामत्तास्तदा तोयदा

उन्मत्ता इव नष्टचन्द्रकिरणां गां पूरयन्त्यम्बुभिः ॥ ६२८॥

आषाढ़ी योग में सूर्यास्त के समय पुष्पवृन्द के पराग से अतिसुगन्धयुक्त उत्तर दिशा से वायु बहता है, तो मेघ जल से भूमि को प्लावित (पूर्ण) कर देते हैं व विद्युत् के परिभ्रमण से सुवर्ण के समान कान्ति की शोभा धारण करने वाला मेघ अपनी कान्ति से नष्ट कान्ति से युक्त चन्द्र के अन्धकार को निरस्त कर भू को क्षण-क्षण में प्रकाशित करता रहता है ॥६२८॥

**ऐशानो यदि शीतलोऽमरगणैः संसेव्यमानो भवेत्**
**पुन्नागागरुपारिजातसुरभिर्वायुः प्रचण्डध्वनिः।**
**आपूर्णोदकयौवना वसुमती सम्पन्नसस्याकुला**
**धर्मिष्ठाः प्रणतारयो नृपतयो रक्षन्ति वर्णांस्तदा ॥६२९॥**

ईशानकोणीय शीतल देवसमूहों से सेव्यमान पुन्नाग, अगर, पारिजात प्रभृति पुष्पों के गन्धों से सुगन्धित, प्रचण्ड शब्दायमान वायु बहता है, तो जल से परिपूर्ण (जल ही है यौवन जिसका ऐसी) उदकयौवना भूमि सस्य-सम्पत्ति से समृद्ध हो जाती है और नतमस्तक शत्रुसमुदाय वाले धर्मिष्ठ राजागण वर्णाश्रमों का सम्यक् पालन व रक्षा करते हैं, अर्थात् धर्म, अर्थ, सद्भाव से भू परिपूर्ण हो जाती है ॥६२९॥

सूर्यास्त-आषाढ़ी पूर्णिमा के योगों का निष्कर्ष–

पूर्वी समुद्र की ऊर्मियों को विदारण करता आकाशमण्डल तक व्याप्त प्रचण्ड वायु के साथ घने नीले मेघमण्डलों से भूपटल आच्छादित हो जाय तो सुवृष्टि से शारदीय, वासन्तीय सस्य के पूर्ण रूप से उत्पन्न होने की सूचना है व लोक सुखानुभूति करेगा।

उपर्युक्त प्रचण्ड वायु यदि अग्निकोण से उत्पन्न है, तो भयंकर अवर्षण से सन्तप्त भू अपनी ऊष्मा से प्राणियों के उपजीव्य पदार्थों को राख बना देगी।

एवमेव अत्युद्धत भू स्थित महान् वृक्षों को झकझोरता मृग-पशुओं का गर्भस्रावक भयङ्कर शब्दायमान मेघमण्डलों से आवृत दाक्षिणात्य वायु बहता है, तो जलबिन्दुसीकर (झीसा) मात्र से अतृप्त भू की सूचना है।

यदि पूर्वोक्त प्रचण्ड वायु समुद्र व तटवर्ती वृक्षों को विसरण करता नैऋत्य-कोण से उत्पन्न होता है, तो अन्न-जल के अभावजनित प्राणियों के अस्थिसमूहों से ही भूमण्डल व्याप्त हो जाएगा।

एवमेव घटाटोप भयङ्कर धूलिधूसरित भू से आकाश तक व्याप्त पाश्चात्त्य (पश्चिम) वायु बहता है तो, सुवृष्टि से सस्य-समृद्धि समवेत भू का स्थान-स्थान, देश-प्रदेश, प्रधानों, देशाध्यक्षों, आततायियों का समराङ्गण हो जाएगा और असंख्य प्राणियों का वध होगा।

वायुकोणोत्पन्न सर्पोदर की भाँति प्रतीत होने वाले मेघों से आवेष्टित प्रचण्ड वायु प्रचुर वृष्टि से आप्लावित भू का जनाधारक भूसम्पत्ति समृद्धि की वृद्धि का सूचक है।

एवं च अतिप्रवृद्ध वेगवान्, पुष्प सौरभ सुगन्धित, मेरुशिखरोत्पन्न उत्तर दिशा का वायु बहता है तो, विद्युत्प्रभा-प्रभासित घनघोर मेघमण्डल उन्मुक्त भाव से घनान्धकाराच्छादित भू-मण्डल को जल से सन्तृप्त कर देता है, अर्थात् यह सुवृष्टि व सुभिक्ष का लक्षण है।

विविध-सुगन्ध-सुगन्धित, देव-गन्धर्व-सेवित ईशानकोण का वायु बहता है, तो जलयौवना भू उदान्त जलद मेघ से सन्तुष्ट हो जाती है और सद्भाव व सद्व्यवहार से लोक सुखानुंभूति करता है।

अथ सद्योवृष्टिलक्षणं तत्रैव –

**वर्षाप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्द्रो**

**लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे।**

**सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भः**

**प्रावृट्काले सृजति न चिराच्चन्द्रवद्भार्गवोऽपि॥ ६३०॥**

वर्षा-प्रश्न के समय कृष्णपक्ष का चन्द्रमा कर्क, मकर, मीन राशियों में से किसी राशि का प्रश्न-लग्न में हो अथवा शुक्लपक्ष का चन्द्रमा जलचर राशि का लग्नेतर किसी केन्द्र स्थान में हो, इन दोनों योगों में वर्षा ऋतु के समय शीघ्र वर्षा होती है। उन दोनों योगों में शुभ दृष्टि से प्रचुर व पाप दृष्टि से स्वल्प पानी होगा, मिश्र दृष्टि से मध्यम। शुक्र भी चन्द्रमा जैसा जल देते हैं, लग्न के अन्यतर केन्द्र के साथ शुक्लपक्ष ग्राह्य होने से कृष्णपक्ष में लग्नेतर केन्द्र के चन्द्र से वृष्टि नहीं होती है, अर्थात् यह प्रश्न सिद्ध है ॥६३०॥

**आर्द्रं द्रव्यं स्पृशति यदि वा वारि तत्संज्ञकं वा**
**तोयासन्नो भवति यदि वा तोयकार्योन्मुखो वा।**
**प्रष्टा वाच्यः सलिलमचिरादस्ति निःसंशयेन**
**पृच्छाकाले सलिलमिति वा श्रूयते यत्र शब्दः ॥ ६३१॥**

अन्य प्रश्न –

प्रश्न के समय सरस जल, क्षीर, जलज वस्तु हाथ में लेकर प्रश्न करे अथवा जलोन्मुख जाता हुआ या जल सम्बन्धी वस्तु का उच्चारण करने या श्रवण से भी वर्षा के समय प्रश्न हो तो शीघ्र वर्षा होती है ॥६३१॥

**उदयशिखरिसंस्थो दुर्निरीक्ष्योऽतिदीप्त्या**
**द्रुतकनकनिकाशः स्निग्धवैडूर्य्यकान्तिः।**
**तदहनि कुरुतेऽम्भस्तोयकाले विवस्वान्**
**प्रतपति यदि वोच्चैः खंगतोऽतीवतीक्ष्णम् ॥ ६३२॥**

वर्षा ऋतु में उदय काल में सुवर्ण-गलित रस जैसे स्वर्णिम और मध्याह्न में वैदूर्य मणि जैसे तीव्र क़ान्ति से दुर्निरीक्ष्य देदीप्यमान विवस्वान् (सूर्य) उसी दिन जल देते हैं ॥६३२॥

**विरसमुदकं गोनेत्राभं वियद्विमला दिशो**

**लवणविकृतिः काकाण्डाभं यदा च भवेन्नभः।**

**पवनविगमः पोप्लूयन्ते झषाः स्थलगामिनो**

**रसनमसकृन्मण्डूकानां जलागमहेतवः॥ ६३३॥**

स्वादरहित जल, गोनेत्र सदृश आकाश, दिशा निर्मल, लवणविकार (नमक में गलाव, पानी निकलना), काकाण्ड की आकृति का आकाश (श्वेत-नील), स्तब्ध वायु, मत्स्य जल से भू की तरफ जाने के लिए उन्मुख (मत्स्योत्प्लवन), अर्थात् मत्स्य का जल से स्थल पर उत्प्लवन (उच्छाल), मण्डूकों का बार-बार बोलना– ये प्रत्येक वस्तु सद्यः वृष्टिकारक हैं ॥६३३॥

**मार्जारा भृशमवनिं नखैर्लिखन्तो लोहानां मलनिचयः सविस्रगन्धः।**

**रथ्यायां शिशुनिचिताश्च सेतुबन्धाः सम्प्राप्तं जलमचिरान्निवेदयन्ति ॥ ६३४॥**

मार्जार इत्यादि –

मार्जार अधोमुख होकर भूमि का नखों से खनन करता हो, लोहे पर मल (मुर्चा) आना, उससे मत्स्य-गन्ध-सा गन्ध आना, मार्ग में बालक सेतु बनाते हों, तो शीघ्र जल होगा ॥६३४॥

**गिरयोऽञ्जनपुञ्जसन्निभा यदि वा वाष्पनिरुद्धकन्दराः।**

**कृकवाकुविलोचनोपमाः परिवेषाः शशिनश्च वृष्टिदाः॥ ६३५॥**

पर्वत कन्दरों के काले वाष्प से अन्धकारमय दीखते हों, अथवा पर्वत शिखर काले व पर्वत कन्दराएँ अपने वाष्प से आच्छादित अदृश्य हों, चन्द्रमा का परिवेष अतिलोहित दिखाई दे, तो ये सब सद्यः वृष्टि के लक्षण हैं ॥६३५॥

**विनोपघातेन पिपीलिकानां मण्डोपसंक्रान्तिरहिव्यवायः।**

**द्रुमाधिरोहश्च भुजङ्गमानां वृष्टेर्निमित्तानि गवां प्लुतं च ॥६३६॥**

बिना किसी उपोद्घात के पिपीलिका (चिंउटी) अपने अण्डे को एक स्थान से दूसरे स्थान में ले जाती हो, सर्पमैथुन, सर्प का वृक्षारोहण, गायों का उत्प्लवन (कूदना) – ये सब शीघ्र वृष्टि के लक्षण हैं ।।६३६।।

**तरुशिखरोपगताः कृकलासाः गगनतलस्थितदृष्टिनिपाताः।**

**यदि च गवां रविवीक्षणमूर्ध्वं निपतति वारि तदा न चिरेण।।६३७।।**

गिरगिट वृक्ष के शिखर (सर्वोन्नत शाखा पर) चढ़ आकाश की ओर देखता हो, गो, वृष ऊपर सूर्य को देखते हों तो शीघ्र वृष्टि होती है ।।६३७।।

**नेच्छन्ति विनिर्गमं गृहाद्धुन्वन्ति श्रवणान् खुरानपि।**

**पशवः पशुवच्च कुक्कुरा यद्यम्भः पततीति निर्दिशेत्।।६३८।।**

चतुष्पद घर से बाहर नहीं निकलना चाहते हों और कान, पैर चलाते हों, पशु जैसा श्वान भी चेष्टा करें, तो शीघ्र वृष्टि होती है ।।६३८।।

**यदा स्थिता गृहपटलेषु कुक्कुरा रुवन्ति वा यदि विततं दिवोन्मुखाः।**

**दिवां तडिद्यदि च पिनाकिदिग्भवा तदा क्षमा भवति समातिवारिणा।।६३९।।**

श्वान गृह के छत पर बैठें या निरन्तर आकाशोन्मुख होकर रोदन करते हों, ईशानकोण में विद्युत् दिखाई दे तो मही का नीचे-ऊपर सभी भाग जल से पूर्ण दिखाई देता है ।।६३९।।

**शुककपोतविलोचनसन्निभो मधुनिभश्च यदा हिमदीधितिः।**

**प्रतिशशी च यदा दिवि राजते पतति वारि तदा न चिराद्दिवः।।६४०।।**

चन्द्रमा शुक, कपोत के नेत्र जैसा (लोहित) दीखे या मधु जैसा ईषत् पीत या आकाश में दो चन्द्र हैं ऐसा प्रतीत हो, तो शीघ्र वृष्टि होती है ।।६४०।।

**स्तनितं निशि विद्युतो दिवा रुधिरनिभा यदि दण्डवत्स्थिताः।**
**पवनः पुरतश्च शीतलो यदि सलिलस्य तदागमो भवेत्॥६४१॥**

रात्रि में मेघध्वनि, दिन में (दण्ड की भाँति) लोहित विद्युत् दिखाई दे व पूर्व वायु शीतल बहता हो, तो शीघ्र जल होता है ॥६४१॥

**वल्लीनां गगनतलोन्मुखाः प्रबालाः**
**स्नायन्ते यदि जलपांशुभिर्विहङ्गाः।**
**सेवन्ते यदि च सरीसृपास्तृणाग्रा-**
**ण्यासन्नो भवति यदा जलस्य पातः॥६४२॥**

लताओं के अभिनव पत्र का अंकुर ऊर्ध्वमुख दिखाई दे, पक्षीगण धूल या जल में स्नान करें, कृमिसमूह तृणों के अग्रभाग (अंतिम छोर) में दिखाई दे, तो अतिशीघ्र वर्षा होगी (पानी आएगा) ॥६४२॥

**मयूरशुकचाषचातकसमानवर्णा यदा**
**जपाकुसुमपङ्कजद्युतिमुषश्च सन्ध्याघनाः।**
**जलोर्मिनगनक्रकच्छपवराहमीनोपमाः**
**प्रभूतपुटसञ्चया न तु चिरेण यच्छन्त्यपः॥६४३॥**

सन्ध्या के समय मयूर, शुक, नीलकंठ, चकोर इन पक्षियों के वर्ण (रंग) के समान अतिनील कान्ति का मेघ शीघ्र जल देता है, जपा (गुड़हल), कमल की कान्ति जैसी कान्ति का मेघ (अतिलोहित) व जल का आवर्त, पर्वत, जलचर प्राणी (मत्स्य-कच्छप-सूकर) एक के ऊपर दूसरा पुट संचय जैसा प्रतीत होने वाला मेघ शीघ्र जल देता है ॥६४३॥

**पर्य्यन्तेषु सुधाशशाङ्कधवला मध्येऽञ्जनालित्विषः**
**स्निग्धा नैकपुटाः क्षरज्जलकणाः सोपानविच्छेदिनः।**
**माहेन्द्रीप्रभवाः प्रयान्त्यपरतः प्राक्चाम्बुपाशोद्भवा**
**ये ते वारिमुचस्त्यजन्ति न चिरादम्भः प्रभूतं भुवि॥६४४॥**

चारों तरफ (चतुर्दिक्षु) सुधा, चन्द्र जैसा श्वेत बीच में अञ्जन, भ्रमर जैसा काला और स्निग्ध निर्मल अनेकपुट बहुस्तर उपलक्षित सोपान जैसा विवासित मेघ पूर्व से पश्चिम या पश्चिम से पूर्व जाते हों, तो शीघ्र अतिवृष्टि होने की सूचना है ।।६४४।।

**शक्रचापपरिघप्रतिसूर्या रोहितोऽथ तडितः परिवेषाः।**

**उद्गमास्तमये यदि भानोरादिशेत्प्रचुरमम्बु तदाशु ।।६४५।।**

सूर्योदय या अस्त के समय इन्द्रधनुष, परिघ व प्रतिसूर्य दिखाई दें तो, शीघ्र प्रचुर जल होता है, परिघ (सूर्य-चन्द्र के चारों तरफ की गोलाई), दो सूर्य प्रतिसूर्य हैं ।।६४५।।

**यदि तित्तिरपत्रनिभं गगनं मुदिताः प्रवदन्ति च पक्षिगणाः।**

**उदयास्तमये सवितुर्द्युनिशं विसृजन्ति घना न चिरेण जलम् ।।६४६।।**

यदि आकाश तित्तिर (तित्तिर पक्षी) के पत्र जैसा दिखाई दे, पक्षीगण प्रसन्न होकर शब्द करते हों, सूर्योदय, सूर्यास्त या दिन के समय घना मेघ हो तो वह शीघ्र वर्षता है। यह श्लोक अनार्ष प्रतीत होता है 'इत्युत्पलः'।

अर्थात् उदय के समय पूर्वोक्त स्थिति हो तो दिन में, सूर्यास्त के समय हो, तो रात्रि में प्रचुर पानी होगा ।।६४६।।

**यद्यमोघकिरणाः सहस्रगोरस्तभूधरकरा इवोच्छ्रिताः।**

**भूसमं च रसते यदाम्बुदस्तन्महद्भवति वृष्टिलक्षणम् ।।६४७।।**

हजारों सूर्य की रश्मियों की रश्मि जैसा, अस्ताचल के समान बड़े आकार का ऊँचा भू से मिलता हुआ मेघमण्डल दिखाई दे, तो शीघ्र वृष्टि होती है ।।६४७।।

**प्रावृषि शीतकरो भृगुपुत्रात्सप्तमराशिगतः शुभदृष्टः।**

**सूर्यसुतान्नवपञ्चमगो वा सप्तमगश्च जलागमनाय ।।६४८।।**

वर्षा ऋतु में चन्द्रमा शुक्र से सातवें, शुभदृष्ट या शनि से ५/९/७वें शुभदृष्ट हो तो शीघ्र वृष्टि होती है ॥६४८॥

**प्रायो ग्रहाणामुदयास्तकाले समागमे मण्डलसङ्क्रमे च ।**

**पक्षक्षये तीक्ष्णकरायनान्ते वृष्टिर्गतेऽर्के नियमेन चार्द्राम् ॥६४९॥**

प्रायः ग्रहों के उदयास्त व संक्राति, ग्रहयोग, ग्रहसमागम, पक्षक्षय, दक्षिणोत्तरायण व सूर्य के आर्द्रा प्रवेश के समय वृष्टि होती है ॥६४९॥

**समागमे पतति जलं ज्ञशुक्रयोर्ज्ञजीवयोर्गुरुसितयोश्च सङ्गमे ।**

**यमारयोः पवनहुताशजं भयं न दृष्टयोरसहितयोश्च सद्ग्रहैः ॥६५०॥**

बुध शुक्र, बुध गुरु, गुरु शुक्र के समागम योग के समय वृष्टि होती है और शनि मंगल के समागम के समय यदि शुभ दृष्टि व शुभ योग न हो, तो प्रचण्ड वायु व अग्निभय होता है ॥६५०॥

**अग्रतः पृष्ठतो वापि ग्रहाः सूर्यावलम्बिनः ।**

**यदा तदा प्रकुर्वन्ति महीमेकार्णवामिति ॥६५१॥**

सभी ग्रह सूर्य से आगे या पीछे हों, तो पृथ्वी जल से परिपूर्ण हो जाती है ॥६५१॥

**॥ इति वराहमिहिरोक्तं वर्षाप्रकरणम् ॥**

अथ वर्षाज्ञानार्थं सप्तनाडीचक्रं स्वरोदये, नरपतिजयचर्यायाम् –

**अथातः सम्प्रवक्ष्यामि यच्चक्रं सप्तनाडिकम् ।**

**यस्य विज्ञानमात्रेण वृष्टिं जानन्ति वै बुधाः ॥६५२॥**

**कृत्तिकादि लिखेद्धानि क्रमादभिजिता सह ।**

**सप्तनाडीव्यधस्तत्र कर्त्तव्यः पन्नगाकृतिः ॥६५३॥**

नरपतिजयचर्योक्त जलनाड़ी-चक्र –

अब जल - सप्तनाड़ी-चक्र कहता हूँ, जिससे मनुष्यों को वृष्टि का ज्ञान होता है, कृत्तिका से अभिजित् के साथ यह सप्तनाड़ी-चक्र लिखना चाहिए।

सर्पाकृति सप्तनाड़ी-चक्र में नाड़ी-वेध के द्वारा फल की प्रवृत्ति है ॥६५२-६५३॥

**ताराचतुष्कवेधेन नाडिकैका प्रजायते।**
**तासां नामान्यहं वक्ष्ये तथा तत्र फलानि च॥६५४॥**
**कृत्तिका च विशाखा च मैत्राख्यं भरणी तथा।**
**ऊर्ध्वाद्या शनिनाडी स्याच्चण्डानाड्यभिधीयते॥६५५॥**
**रोहिणीस्वातिज्येष्ठाश्विद्वितीया नाडिका मता।**
**आदित्यप्रभवा नाडी वातानाम्नी च सा स्मृता॥६५६॥**
**सौम्यं चित्रा तथा मूलं पौष्णमृक्षं चतुर्थकम्।**
**तृतीयाङ्गारका नाडी दहनाख्या च सा स्मृता॥६५७॥**
**रौद्रं हस्तं तथा पूर्वाषाढा भाद्रपदोत्तरा।**
**चतुर्थी जीवनाडी स्यात्सौम्यानाम्नी च सा स्मृता॥६५८॥**
**पुनर्वसूत्तराफाल्गुन्युत्तराषाढतारका।**
**पूर्वाभाद्रा च शुक्रस्य पञ्चमी नीरनाडिका॥६५९॥**
**पुष्यर्क्षं फाल्गुनी पूर्वा अभिजिच्छततारका।**
**षष्ठी नाडी च विज्ञेया बुधस्य जलनाडिका॥६६०॥**
**आश्लेषार्क्षं मघाकर्णं धनिष्ठा च चतुर्थिका।**
**अमृताख्या हि विज्ञेया सप्तमी चन्द्रनाडिका॥६६१॥**

मध्यमार्गे स्थिता सौम्या नाडी तस्याग्रपृष्ठतः।
सौम्ययाम्यगतं ज्ञेयं नाडिकानां त्रिकं त्रिकम् ॥६६२॥
क्रूरा याम्यगता नाड्यः सौम्याः सौम्यदिगाश्रिताः।
मध्यनाडी च मध्यस्था ग्रहरूपफलप्रदा ॥६६३॥
एकनाडीगता द्व्याद्या ग्रहाः क्रूराः शुभा यदि।
ततो नाडीफलं वाच्यं शुभं वा यदि वाऽशुभम् ॥६६४॥
ग्रहाः कुर्य्युर्महावातं गताश्चण्डाख्यनाडिकाम्।
वायुनाडीगता वायुं दहन्यामतिदाहकाः ॥६६५॥

इस सप्तनाड़ी की एक-एक नाड़ी में चार-चार नक्षत्रों का बोध होता है, जिनके क्रम व फल इस प्रकार हैं– नाड़ीनाम, नाड़ी में नक्षत्र, उनके स्वामी व उनका फल चक्र से स्पष्ट हो जाएगा।

**जल-सप्तनाड़ी-चक्र**

| चण्डा | वाता | दहना | सौम्या | नीरा | जला | अमृता | **नाडी** |
|---|---|---|---|---|---|---|---|
| कृ. | रो. | मृ. | आ. | पुन. | पुष्य | आश्ले. | **नक्षत्र** |
| वि. | स्वा. | चि. | ह. | उत्तरा-फाल्गुनी | पूर्वा-फाल्गुनी | मघा | **नक्षत्र** |
| अनु. | ज्ये. | मू. | पूर्वा-षाढ़ | उत्तरा-षाढ़ | अभि. | श्र. | **नक्षत्र** |
| भ. | अ. | रे. | उत्तरा-भाद्रपद | पूर्वा-भाद्रपद | श. | ध. | **नक्षत्र** |
| शनि | सूर्य | भौम | गुरु | शुक्र | बुध | चन्द्र | **नाडीश** |

इन सात नाड़ियों के मध्य में सौम्या नाड़ी है, इसके दोनों भाग में तीन नाड़ी याम्या व तीन सौम्या नाम से जानी जाती हैं।

याम्या में प्रथम तीन नाड़ी क्रूर और सौम्या भाग की तीनों नाड़ी सौम्या है, मध्यमा मध्य की नाड़ी है, यह ग्रहानुसार फलदायिनी है, एक नाड़ी में द्व्यादि ग्रह क्रूर व शुभ पड़े हों तो शुभ से शुभ, अशुभ से अशुभ फल होता है, शुभ-पाप दोनों से मिश्रित फल होता है।

चण्डा नाड़ी में ग्रह प्रचण्ड वात (आँधी-तूफान), वायु नाड़ी में वायु व अग्नि नाड़ी में अग्नि (दाह) करते हैं ॥६५४-६६५॥

**सौम्यनाडीगता मध्या नीरस्था मेघवाहकाः।**
**जलायां वृष्टिदश्चन्द्रो नाडिका चातिवृष्टिदा ॥६६६॥**
**एकोऽप्येतत्फलं दत्ते स्वनाडीसंस्थितो ग्रहः।**
**स्वभूतः सर्वनाडीस्थो दत्ते नाड्युद्भवं फलम् ॥६६७॥**
**प्रावृट्काले समायाते रौद्रर्क्षगते रवौ।**
**नाडीवेधसमायोगे जलयोगं वदाम्यहम् ॥६६८॥**
**यत्र नाडीस्थितश्चन्द्रस्तत्रस्थाः खेचरा यदि।**
**क्रूरसौम्यविमिश्राश्च तद्दिने वृष्टिरुत्तमा ॥६६९॥**
**एकर्क्षसमायोगो जायते यदि खेचरैः।**
**तत्र काले महावृष्टिर्यावत्तस्यांशके शशी ॥६७०॥**
**केवलैः सौम्यपापैर्वा ग्रहैर्विद्धो यदा शशी।**
**ददाति तुच्छं पानीयं दुर्दिनं तु भवेद् ध्रुवम् ॥६७१॥**
**यस्य ग्रहस्य नाडीस्थश्चन्द्रमास्तद्ग्रहेण चेत्।**
**दृष्टो युक्तः करोत्यम्भो यदि क्षीणो न जायते ॥६७२॥**

मध्य की सौम्या व नीरा नाड़ी में ग्रह हो तो मेघ का आगमन, जल या अमृत (चन्द्र) नाड़ी में ग्रहों से अतिवृष्टि होती है। फल– एक भी ग्रह अपनी नाड़ी में नाड़ीजन्य फल देता है, यथा शनि

स्वनाड़ी चण्डा में चण्ड वायु, सूर्य स्वनाड़ी में वायु, मंगल अपनी नाड़ी में अग्निदाह, गुरु मध्य-सौम्य नाड़ी में मध्यम, नीर नाड़ी में शुक्र पूर्ण नीर, जल नाड़ी में बुध जल, चन्द्रमा अमृत नाड़ी में अमृत फल देते हैं।

वर्षा ऋतु में आर्द्रा में रवि के होने पर नाड़ीवेध से जलयोग बनता है, जिस नाड़ी में चन्द्र हों और उसी नाड़ी में पाप-सौम्य दोनों हों तो उत्तम वृष्टि होती है। अर्थात् नाड़ी के जिस नक्षत्र में चन्द्रमा हो उसी नक्षत्र में ग्रह भी हो तो उस दिन अतिवृष्टि होती है, केवल शुभ या पापग्रह से चन्द्रमा युक्त हो तो, उस दिन तुच्छ वृष्टि व दुर्दिन होता है।

जिस ग्रह की नाड़ी में चन्द्रमा हो उस ग्रह से दृष्ट या युत चन्द्र से जल होता है; किन्तु चन्द्रमा क्षीण न हो ॥६६६-६७२॥

**[1]पीयूषनाडिगास्तत्र युक्ताः खेटाः शुभाशुभाः।**
**द्विचतुःपञ्चपानीयं दिनान्येकत्रिसप्तकम् ॥६७३॥**
**एवं जलाख्यनाडीस्थे चन्द्रे मिश्रग्रहान्विते।**
**दिनार्द्धं दिवसं पञ्च दिनानि जायते जलम् ॥६७४॥**
**नीरनाडीगते चन्द्रे तत्रस्थैः पूर्ववद्ग्रहैः।**
**यामं दिनार्द्धकं त्रीणि दिनानि जायते जलम् ॥६७५॥**

---

१. पीयूषेति। प्रावृट्काले अमृताख्यनाडीगतश्चन्द्र आश्लेषा-मघा-श्रवण-धनिष्ठागतः पुनस्तत्रैव नाड्यां शुभाशुभमिश्रिता ग्रहा भवन्ति तदा पानीयं भवति। कति दिनानि पानीयम् ? तत्रायं क्रमः– द्विचतुःपञ्चपानीयं शुभाशुभाभ्यां पीयूषनाडीगतश्चन्द्रो युक्तो वा वेधितः, द्वादशारचक्रे दृष्टश्च तदा दिनद्वयं पानीयं तत्र चतुर्भिर्ग्रहैः पापद्वयशुभद्वयक्रमेण एव तैर्ग्रहैर्युक्तो वेधितश्च पीयूषनाडीगतस्तदा चतुर्दिनानि व्याप्य पानीयम्, यदा पञ्चभिः शुभपापैस्तदा पञ्चदिनानि व्याप्य पानीयम्। अथैकनक्षत्रगतश्चन्द्र एकदिनमेव वर्षति, युक्तमेतत्, द्विचतुःपञ्चपानीयमिति कथं सम्पद्यते ? तत्रोच्यते– प्रावृट्कालेति।

अमृतादित्रये यत्र भवन्ति सर्वखेचराः।
तत्र वृष्टिः क्रमाज्ज्ञेया धृत्यर्करसवासरैः ॥६७६॥
सौम्यनाडीगताः सर्वे वृष्टिदास्ते दिनत्रयम्।
शेषनाड्यां महावातदुष्टवृष्टिप्रदा ग्रहाः ॥६७७॥
एकनाडीसमारूढौ चन्द्रमाधरणीसुतौ।
यदि तत्र भवेज्जीवस्तदैवैकार्णवा मही ॥६७८॥
निर्जला जलदा नाडी भवेद्योगे शुभाधिके।
क्रूराधिकसमायोगे जलदोऽप्यम्बुदाहकः ॥६७९॥
याम्यनाडीस्थिता क्रूरा अनावृष्टिप्रसूचकाः।
शुभयुक्ता जलान्तस्थास्तेऽतिवृष्टिप्रदा ग्रहाः ॥६८०॥
बुधशुक्रौ यदैकत्र गुरुणा च समन्वितौ।
चन्द्रयोगे तदा काले जायते वृष्टिरुत्तमा ॥६८१॥
जलयोगे समायाते तदा चन्द्रसितौ ग्रहौ।
क्रूरैर्दृष्टौ युतौ वापि तदा मेघोऽल्पवृष्टिदः ॥६८२॥
उदयास्तमये मार्गे वक्रयुक्ते च सङ्क्रमे।
जलनाडीगताः खेटा महावृष्टिप्रदायकाः ॥६८३॥
स्त्रीसंज्ञानि दशार्द्रातो द्विदैवात् त्रिर्नपुंसकम्।
शेषाणि वै पुमर्क्षाणि सूर्ये तत्स्थे फलं दिशेत् ॥६८४॥
स्त्रीपुंसोऽस्तु महावृष्टिरल्पा स्त्रीक्लीबयोः क्वचित्।
अभ्रच्छाया स्त्रियोः पुंसोः क्लीबयोर्वा न किञ्चन ॥६८५॥

अमृत नाड़ी में चन्द्रमा एक पाप, एक शुभग्रह से युक्त हो तो एक दिन पानी होता है, यदि दो पाप, दो शुभ चार ग्रहों से युक्त चन्द्रमा

चार दिन तक पाँच मिश्र शुभ-पाप ग्रहों से युक्त हो तो ५ दिन तक पानी वर्षता है। अथवा प्रावृट्काल में अमृत नाड़ी में चन्द्रमा दो ग्रह (शुभाशुभ) से युक्त, विद्ध हो तो दो दिन, चार से चार, पाँच से पाँच दिन तक वृष्टि होती रहती है, यह दूसरा नियम है। एवं जल-नाड़ीगत चन्द्रमा दो ग्रहों से युक्त हो तो $\frac{1}{2}$ दिन, चार से युक्त हो तो एक दिन, पाँच से युक्त हो तो पाँच दिन तक पानी होता है।

नीरा नाड़ीगत चन्द्रमा दो शुभ-पाप ग्रहों से युक्त, विद्ध हो तो १ प्रहर, ४ से डेढ़ दिन, पाँच से तीन दिन तक पानी होता है।

तथा च अमृता नाड़ी में सभी ग्रह हों तो १८ दिन, जलनाड़ी में १२ दिन, नीरा नाड़ी में सभी ग्रह हों, तो छः दिन तक वृष्टि होती है।

सौम्या नाड़ी में सभी ग्रह हों तो तीन दिन तक वृष्टि होती है। शेष दो वायु व दहन नाड़ी में सभी ग्रह हों तो तीन दिन तक़ वृष्टि होती है; परन्तु महावात, दुष्ट वायुसहित वृष्टि होती है। यदि जलनाड़ी में सचन्द्र शुभग्रह अधिक हों तो जलनाड़ी भी निर्जल (जलहीन) हो जाएगी, यदि केवल पापग्रह अधिक हों तो जलनाड़ी भी जलनाशक हो जाएगी।

क्रूरग्रह याम्या नाड़ी, वायु दहन में जब तक रहेंगे तब तक अनावृष्टि होगी, वे क्रूरग्रह जलचर राशि व नवांश में शुभग्रहयुक्त हों तो अतिवृष्टिकारक होते हैं।

एक नाड़ी में चन्द्रमा, मंगल दोनों हों, यदि गुरु से भी उन दोनों का साथ हो जाय, तो भूमण्डल पर जल ही जल दिखाई देगा, बुध, शुक्र, गुरु व चन्द्रमा के योग से उत्तम वृष्टि होती है।

वर्षा के समय चन्द्रमा, शुक्र क्रूरदृष्ट या युत हों तो मेघ थोड़ी वृष्टि देता है। ग्रहों के उदय, अस्त, वक्र मार्ग व राशि-संक्रमण के समय यदि सभी ग्रह जलनाड़ी में हों तो महावृष्टि होती है।

आर्द्रा से दश नक्षत्र स्त्री, विशाखा से तीन नपुंसक, शेष नक्षत्र पुरुषसंज्ञक हैं। इनमें सूर्य के रहने का फल– दोनों सूर्य-चन्द्र स्त्री-पुरुषसंज्ञक नक्षत्रों में हों तो महावृष्टि होती है, अथवा स्त्री व क्लीब में सूर्य-चन्द्र दोनों हों तो थोड़ी, केवल स्त्री या पुरुषसंज्ञक नक्षत्रों में दोनों हों तो बादल की छायामात्र अथवा नपुंसक में दोनों हों, तो कुछ भी नहीं होता है ॥६७३-६८५॥

**॥ इति यामलीयस्वरोदये सप्तनाडीचक्रम् ॥**

अथ काकालयफलं वसन्तराजे–

**वर्षकालमधिकृत्य किञ्चन प्रोच्यते बलिभुजो यथाक्रमात्।**
**आलयाण्डकविचारसुन्दरं शाकुनं सकलशाकुनोत्तमम् ॥६८६॥**
**वैशाखमासे निरुपद्रवेषु द्रुमेषु काकस्य शुभाय नीडम्।**
**निन्द्येषु शुष्केषु सकण्टकेषु वृक्षेषु दुर्भिक्षभयाय हेतुः ॥६८७॥**
**प्रशस्तवृक्षे यदि पूर्वशाखामाश्रित्य काकेन कृतं कुलायम्।**
**तद्वृष्टिरिष्टाकुशलं प्रमोदो नीरोगता स्याद्विजयश्च राज्ञः ॥६८८॥**
**आग्नेयशाखारचिते च नीडे स्याद्वृष्टिरल्पाग्निभयं कलिश्च।**
**दुर्भिक्षशत्रूद्भवदेशभङ्गा भवन्ति रोगाश्च चतुष्पदानाम् ॥६८९॥**
**याम्यासु शाखासु च वायसेन नीडे कृतेऽल्पं जलपातमाहुः।**
**व्याधिप्रकोपं मरणं समन्तादन्नक्षयं राजविरोधताञ्च ॥६९०॥**

वसन्तराज के अनुसार काकनिलय का फल–

वर्षफल का आश्रय लेकर वायस (कौआ) के घोंसला व अण्डजनित शुभाशुभ फल को प्रस्तुत करता हूँ, यह शकुनों में उत्तम है। वैशाख मास में निरुपद्रव (शान्त) शुभ वृक्ष पर काकनिलय (नीड) शुभसूचक एवं निन्द्य, शुष्क, सकण्टक वृक्ष का नीड दुर्भिक्ष का कारक है।

प्रशस्त शुभ वृक्ष की पूर्वशाखा पर यदि काक नीड बनाता है, तो उस वर्ष में सन्तोषजनक वृष्टि, आरोग्य, इष्टसिद्धि, प्रमोद व राजा के विजय का सूचक है।

अग्निकोण की शाखा पर नीड है, तो थोड़ी वृष्टि, अग्निभय, कलि, शत्रुबाधा, दुर्भिक्ष व देश का नाश और पशुओं को रोग होता है एवं दक्षिण शाखा पर बना नीड थोड़ा जल, व्याधि-प्रकोप, चतुर्दिक् मृत्यु, अन्न का नाश व राजाओं में विरोध का सूचक है ॥६८६-६९०॥

**नैर्ऋत्यशाखारचिते च नीडे पश्चाद्घनो वर्षति वर्षकाले।**
**पीडा नृणां विड्वरचौरभीतिर्दुर्भिक्षयुद्धानि भवन्त्यवश्यम् ॥६९१॥**
**नीडे कृते पश्चिमवृक्षशाखामाश्रित्य काकैः कथिताभिवृष्टिः।**
**नीरोगता क्षेमसुभिक्षवृद्धिः सम्पत्प्रमोदाश्च भवन्ति लोके ॥६९२॥**
**वायव्यशाखासु कृते च नीडे प्रभूतवाताल्पजलाः पयोदाः।**
**स्युर्मूषकोपद्रवसस्यनाशपशुक्षयोद्वेगमहाविरोधाः ॥६९३॥**
**कुबेरशाखामधिकृत्य नीडे कृते भवेत्प्रावृषि वृष्टिरिष्टा।**
**भवन्ति च क्षेमसुभिक्षसौख्यनीरोगतावृष्टिसमृद्धयोऽस्मिन् ॥६९४॥**
**ईशानशाखासु च वृष्टिरल्पा चिरं प्रजानामुपसर्गदोषः।**
**स्याद्बान्धवानां कलहप्रवृत्तिर्मर्यादया हीयत एष लोकः ॥६९५॥**

**वृक्षाग्रनीडे त्वतिवर्षकालो मध्ये तरोर्मध्यमतोयपातः।**

**तुच्छापि वृष्टिर्न भवत्यधस्तात्स्फुटं यथोक्तं न दिशोऽस्फुटत्वात् ॥ ६९६॥**

**अवृष्टिरोगारिभयादिवृद्धिं विद्याच्च भूमौ बलिभुक्कुलाये।**

**शुष्कं च वृक्षे डमरान्ननाशौ प्राकाररन्ध्रेऽरिभयं प्रभूतम् ॥ ६९७॥**

नैऋत्य शाखा के नीड से मानवीय विड्वर, चौरभय (ठग, चोर या दस्युभय इत्यादि), दुर्भिक्ष व युद्ध अवश्य होता है। काक यदि शुभ वृक्ष के पश्चिम शाखा पर निलय बनाता है, तो अभीष्ट, आरोग्य, शान्ति, सुभिक्ष, सम्पत्ति-वृद्धि, आमोद, प्रमोद का लोक अनुभव करता है। वायव्य शाखा का निलय अधिक वायु, थोड़ा जल, मूषकभय, सस्यहानि, पशुनाश, अशान्ति व महाविरोध का सूचक है। उत्तर की शाखा के नीड से वर्षा ऋतु में अनुकूल वृष्टि, शान्ति, सुभिक्ष, सुख, नैरुज्य व समृद्धि होगी। ईशान शाखा का घोंसला थोड़ी वृष्टि, प्राणियों में चिरस्थायी उपसर्ग (रोग, उपद्रव, अशांति), बान्धवों में कलह की प्रवृत्ति व लोक मर्यादाहीन कार्य करेगा।

वृक्ष के अग्रभाग के नीड से कालातीत (असमय) वृष्टि, वृक्ष के मध्यभाग में मध्यम जलपात, क्षुद्रता की वृद्धि, यथार्थ नीचे-ऊपर होता रहेगा, अर्थात् यथार्थ का पालन नहीं होगा। यदि भूभाग पर ही कुलाय (नीड) हुआ, तो अवर्षण, द्वेष, शत्रुभय की वृद्धि होगी। शुष्क वृक्ष के नीड से सार्वजनिक मरण व अन्न का भय (अतिशय-शत्रुभीति) होता है ॥ ६९१-६९७॥

**निम्नप्रदेशे तरुकोटरे वा वल्मीकरन्ध्रेष्ववनीष्वपीह।**

**काकस्य नीडं रुगवृष्टिदोषैर्भवन्ति शून्यानि यमेन देशाः॥ ६९८॥**

भूविवर (गड्ढा) या वृक्षकोटर (खोखले) अथवा भूमि पर बेनुअटि (वल्मीक मृत्पुञ्ज) के ढेर पर काक के नीड से रोग, अवृष्टि व यमराज के कारण देश शून्य (जनसंहार) हो जाता है ॥ ६९८॥

अथ काकाण्डविचारो वसन्तराजे–

**एकं भवेद्वारुणमग्निसंज्ञं द्वितीयकं मारुतजं तृतीयम्।**
**ऐन्द्रं तथा नाम चतुर्थमेवमण्डानि काक्याः परिकीर्त्तितानि॥६९९॥**
**काक्या भवेद्वारुणमण्डकं चेत् पृथ्वी तदा नन्दति सर्वसस्यैः।**
**मन्दः प्रवर्षोऽनलसंज्ञकेऽण्डे नो सस्यबीजस्य भवेत्प्ररोहः॥७००॥**
**जातानि सस्यानि समीरजेऽण्डे खादन्ति कीटाः शलभाः शुकाद्याः।**
**क्षेमं सुभिक्षं सुखिता धरित्री स्यादिन्द्रजेऽण्डेऽभिमता च सिद्धिः॥७०१॥**

काकी के अंड का विचार करते हैं– प्रथम वारुण नाम, द्वितीय अग्नि नाम, तृतीय मारुतज (समीरज), चौथा ऐन्द्र नाम का काकाण्ड होता है।

वारुण नाम अंड से भू सर्वसस्यों से परिपूर्ण, आनन्दित रहती है, अनल नामाण्ड से सस्य के बीज का प्ररोह, वृद्धि नहीं होती है (बोया बीज उगता ही नहीं), समीरज अंड से उत्पन्न सस्य कीट, शलभ, शुक नष्ट कर देते हैं, अर्थात् ईति-भीति होती है। चतुर्थ ऐन्द्र अंड से भूलोक सुखी रहता है और अभीष्ट की सिद्धि होती है॥६९९-७०१॥

अथ टिट्टिभाण्डविचारो ग्रन्थान्तरे–

**स्थितेषूच्चप्रदेशेषु टिट्टिभाण्डेषु चोत्तमा।**
**निम्नप्रदेशसंस्थेषु स्वल्पा वृष्टिः प्रजायते॥७०२॥**
**वृष्टिः प्रजायते मासैरधोवक्राण्डसंख्यकैः।**
**वृष्टिर्नैव भवेन्मासैरूर्ध्ववक्राण्डसंख्यकैः॥७०३॥**

ग्रन्थान्तर से टिट्टिभांड का विचार करते हैं–

भू के उच्च प्रदेश में यदि टिट्टिभ अंडा देता है, तो उत्तम है, निम्न (नीच) प्रदेश के अंड से थोड़ी वृष्टि होती है। नीचे मुख वाले

अंडों की जो संख्या होगी, उतने मास तक वृष्टि होगी और ऊर्ध्वमुख अंडों की संख्या के बराबर मास तक अवर्षण होगा, अर्थात् ऊर्ध्वमुख के जितने अंडे होंगे उतने मास अवर्षण, अधोमुख अंडों की संख्यातुल्य मास वर्षा होगी ॥७०२-७०३॥

अथ पिपीलिकाण्डफलं वाराहीसंहितायाम् –

**विनिक्षिपन्त्यः सलिलेऽण्डकानि पिपीलिका वृष्टिनिरोधमाह।**
**तरुस्थलं चापि नयन्ति निम्नाद्यदा तदा ताः कथयन्ति वृष्टिम् ॥७०४॥**

पिपीलिकांड-फल –

यदि पिपीलिका (चिंउटी) अपने अंडों को जल में फेंकती-गिराती हैं, तो वृष्टि का निरोध (अवरोध) है और नीचे से ऊँचे वृक्ष पर अंडा लेकर चढ़ती हैं, तो वृष्टि होती है ॥७०४॥

**॥ इति प्रकीर्णके वर्षाप्रकरणम् ॥**

अथ वस्तुनिष्पत्तिविचारः, तत्रादौ फलकुसुमाध्यायो वाराहीसंहितायाम् –

**फलकुसुमसंप्रवृद्धिं वनस्पतीनां विलोक्य विज्ञेयम्।**
**सुलभत्वं द्रव्याणां निष्पत्तिश्चापि सस्यानाम् ॥७०५॥**
**शालेन कलमशाली रक्ताशोकेन रक्तशालिश्च।**
**[1]पाण्डूकः क्षीरिकया नीलाशोकेन सूकरकः[2] ॥७०६॥**
**न्यग्रोधेन तु यवकस्तिन्दुकवृद्ध्या च षष्ठिको भवति।**
**अश्वत्थेन ज्ञेया निष्पत्तिः सर्वसस्यानाम् ॥७०७॥**
**जम्बूभिस्तिलमाषाः शिरीषवृद्ध्या च कङ्गुनिष्पत्तिः।**
**गोधूमाश्च मधूकैर्यववृद्धिस्सप्तपर्णेन ॥७०८॥**

---

१. पाण्डूकः शालिविशेषः; २. सूकरकः शालिविशेषः।

[1]अविमुक्तककुन्दाभ्यां कर्पाशं सर्षपान्चदेदशनैः।
वदरीभिश्च कुलुत्थांश्चिरबिल्वेनादिशेन्मुद्गगान् ॥७०९॥
अतसीवेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः।
तिलकेन शंखमौक्तिकरजतान्यथ चेङ्गुदेन शणः॥७१०॥
करिणश्च हस्तिकर्णैरादेश्या वाजिनोऽश्वकर्णेन।
गावश्च पाटलाभिः कदलीभिरजाविकं भवति॥७११॥

फल-कुसुमजनित शुभाशुभ फल–

वनस्पतियों के फल-पुष्प को देखकर द्रव्यों की सुलभता, समर्घता व सस्योत्पत्ति का विचार करना चाहिए।

शालवृक्ष (सागवान = शाखु) के पुष्प-फल की समृद्धि से शालीधान (एक स्थान से उपाट कर दूसरे स्थान में रोपने वाला धान कलमशाली है) की उपज उत्तम व प्राप्ति सुलभ है, रक्त अशोक के फल-पुष्प वृद्धि से रक्तशाली (लाल शालिधान्य), क्षीरी (खीर) के फल-पुष्प से पीला शाली (पीला शालिधान्य), नील अशोक वृक्ष के फल-पुष्प से सूकरक (स्थूल धान्य = मोटा भदही धान्य) धान्य की उत्पत्ति व समर्घता, वट के फल-पुष्प वृद्धि से धान्यविशेष यवक, सिन्धूक के फल-पुष्प की वृद्धि से साठी धान्य, पीपल से सर्वसस्यों की उत्तम उत्पत्ति व समर्घता होगी। जामुन से तिल, उड़द, शिरीष से टाँगुन, महुआ से गेहूँ, क्षितवन से यव, अविमुक्तिका (मालती = मल्लिका), कुन्द से कपास, असना (वृक्षविशेष) से सरसो, (बदरीफल से कुलथी उड़द = जाति-विशेष) करजन (करज) से मूँग-धान्य (मूँग = प्रसिद्ध अन्न दाल के लिए), वेंत से तीसी, पलाश की पुष्प-वृद्धि से कोदो, तिलक वृक्ष विशेष से शंख, मोती, चाँदी आदि धातु, इङ्गुदी से

---

१. अविमुक्तको वृक्षविशेषः।

सन (सनई), हस्ति-कर्ण से हाथी, (मानपत्र) अश्वकर्ण से घोड़ा, पाटल (वृक्ष-विशेष) से गो, केला से छाग, मेष आदि की वृद्धि होती है ॥७०५-७११॥

**चम्पककुसुमैः कनकं विद्रुमसम्पच्च बन्धुजीवेन।**
**कुरवकवृद्ध्या वज्रं वैडूर्यं नन्दिकावर्तैः ॥७१२॥**
**विद्याच्च सिन्दुवारेण मौक्तिकं कुंकुमं कुसुम्भेन।**
**रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः॥७१३॥**
**श्रेष्ठी सुवर्णपुष्पैः पद्मैर्विप्राः पुरोहिताः कुमुदैः।**
**सौगन्धिकेन बलपतिरर्केण हिरण्यपरिवृद्धिः॥७१४॥**
**आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथारोग्यम्।**
**खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः॥७१५॥**
**पिचुमन्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन।**
**निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन॥७१६॥**
**दूर्वाकुशकुसुमाभ्यामिक्षुर्वह्निश्च कोविदारेण।**
**श्यामालताभिवृद्ध्या बन्धक्यो वृद्धिमायान्ति॥७१७॥**
**यस्मिन्देशे स्निग्धनिश्छिद्रपत्राः संदृश्यन्ते वृक्षगुल्मलतासु।**
**तस्मिन्वृष्टिः शोभना सम्प्रदिष्टा रुक्षैश्छिद्रैरल्पमम्भः प्रदिष्टम्॥७१८॥**

चम्पा के पुष्प से सुवर्ण, बन्धुजीव से विद्रुम, कुरवक से वज्र (हीरा), नन्दिकावर्त से वैदूर्य, सिन्धुवार (सेनुहार) से मोती, रक्त कमल से राजा, नीलकमल से मंत्री, सुवर्णपुष्प से वैश्य (श्रेष्ठी), कमल से ब्राह्मण, कुमुद से पुरोहित, सौगन्धिक से सेनापति, मन्दार से सुवर्ण, आम से क्षेम (कल्याण), भल्लातक से भय, पीलू से आरोग्य, खैर, शमी से दुर्भिक्ष, अर्जुन से सुवृष्टि, नीम व नागकेसर से सुभिक्ष, कपित्थ

(कैंत) से वायु, निचुल से अवर्षण, कुटज से व्याधिभय, दूर्वा, कुशा से ईख, कोविदार से अग्निभय, श्यामलता से वेश्या, उपर्युक्त फल व पुष्पों की वृद्धि से तत्तत्पदार्थों की वृद्धि, सुलभता आदि कहनी चाहिए, उन वृक्षों के मात्र पुष्प-लता-पत्रादि की वृद्धि से उनसे सम्बन्धित पदार्थों की वृद्धि व सुलभता का निश्चय करना चाहिए। अभाव में महर्घता का भी संकेत है।

जिस समय वृक्ष-लता-गुल्म (एकमूलक = छोटे आकार के वृक्ष) के पत्ते, पुष्प, फल छिद्र-रहित चिकने, मनोहर दिखाई दें, उस वर्ष या उस समय वृष्टि उत्तम होगी, अन्य इसके विपरीत रुक्ष, छिद्रादि होने पर अल्प जल (थोड़ी वृष्टि) का संकेत है॥७१२-७१८॥

अथ सस्यनिष्पत्तिर्वाराहीसंहितायाम्–

**वृश्चिकवृषप्रवेशे भानोर्ये बादरायणेनोक्ताः।**

**ग्रीष्मशरत्सस्यानां सदसद्योगाः कृतास्त इमे॥७१९॥**

**भानोरलिप्रवेशे केन्द्रैस्तस्माच्छुभग्रहाक्रान्तैः।**

**बलवद्भिः सौम्यैर्वा निरीक्षितैर्ग्रैष्मिकविवृद्धिः॥७२०॥**

**अष्टमराशिगतेऽर्के गुरुशशिनोः कुम्भसिंहसंस्थितयोः।**

**सिंहघटसंस्थयोर्वा निष्पत्तिर्ग्रीष्मसस्यस्य॥७२१॥**

वृष व वृश्चिक राशि के सूर्य के प्रवेश से ग्रीष्म व शरद् के धान्यों की निष्पत्ति का योग बादरायण के अनुसार कहता हूँ।

सूर्य के वृश्चिक राशि प्रवेश लग्न से सूर्य, बली शुभग्रह केन्द्र में हों या बली शुभग्रह सूर्य को देखते हों, तो ग्रीष्म-धान्य की वृद्धि होती है। अष्टम वृश्चिक राशि का सूर्य, गुरु, चन्द्रमा कुम्भ व सिंह राशि में या सिंह, कुम्भ में यथाक्रम से हों तो ग्रीष्म-धान्य की निष्पत्ति उत्तम है॥७१९-७२१॥

अर्कात्सिते द्वितीये बुधेऽथवा युगपदेव वा स्थितयोः।
व्ययगतयोरपि तद्वन्निष्पत्तिरतीवगुरुदृष्ट्या ॥७२२॥
शुभमध्येऽलिनि सूर्याद् गुरुशशिनोः सप्तमे परासम्पत्।
अल्यादिस्थे सवितरि गुरौ द्वितीयेऽर्द्धनिष्पत्तिः॥७२३॥
लाभहिबुकार्थयुक्तैः सूर्यादलिगात्सितेन्दुशशिपुत्रैः।
सस्यस्य परासम्पत्कर्मणि जीवे गवां चाग्र्या ॥७२४॥
कुम्भे गुरुर्गवि शशी सूर्योऽलिमुखे कुजार्कजौ मकरे।
निष्पत्तिरस्ति महती पश्चात्परचक्ररोगभयम् ॥७२५॥
मध्ये पापग्रहयोः सूर्यः सस्यं विनाशयत्यलिगः।
पापः सप्तमराशौ जातं जातं विनाशयति ॥७२६॥
अर्थस्थाने क्रूरः सौम्यैरनिरीक्षितः प्रथमजातम्।
सस्यं निहन्ति पश्चादुप्तं निष्पादयेद्व्यक्तम् ॥७२७॥
जामित्रकेन्द्रसंस्थौ क्रूरौ सूर्यस्य वृश्चिकस्थस्य।
सस्यविपत्तिं कुरुतः सौम्यैर्दृष्टौ न सर्वत्र ॥७२८॥
वृश्चिकसंस्थादर्कात्सप्तमषष्ठोपगौ यदा क्रूरौ।
भवति तदा निष्पत्तिः सस्यानामर्घपरिहानिः॥७२९॥
विधिनाऽनेनैव रविर्वृषप्रवेशे शरत्समुत्थानम्।
विज्ञेयः सस्यानां नाशाय शिवाय वा तज्ज्ञैः॥७३०॥
त्रिषु मेषादिषु सूर्यः सौम्ययुतो वीक्षितोऽपि वा विचरन्।
ग्रैष्मिकधान्यं कुरुते समर्घमभयोपयोग्यं च ॥७३१॥
कार्मुकमृगघटसंस्थः शारदस्य तद्वदेव रविः।
सङ्ग्रहकाले ज्ञेयो विपर्ययः क्रूरदृग्योगात् ॥७३२॥

॥ इति सस्यजातकम् ॥

सूर्य से बुध या शुक्र द्वितीय अथवा दोनों एक साथ द्वितीय या व्यय में हों व सूर्य को गुरु देखते हों, तो उपर्युक्त सस्यनिष्पत्ति अत्युत्तम होगी।

दो शुभग्रहों के बीच में रवि व वृश्चिक-प्रवेश के समय या सूर्य से सातवें गुरु, चन्द्रमा हों तो सस्यों की उत्पत्ति उत्कृष्ट होती है। वृश्चिक-प्रवेश के समय गुरु द्वितीय स्थान में हों तो अर्धमात्रा में सस्योत्पत्ति होती है, वृश्चिक के सूर्य से लाभ में शुक्र, चतुर्थ में चन्द्रमा, धन में बुध हों, तो उत्कृष्ट सस्य-संपत्ति होती है और इसी योग में दशम के गुरु से गायों की क्षीरसंपत्ति भी अधिक होती है (दुग्धाधिक्य दुग्ध-सम्पत्ति का बोधक है)। सूर्य के वृश्चिक-प्रवेश के समय कुम्भ में गुरु, वृष में चन्द्रमा, भौम-शनि मकर के हों, तो अधिक मात्रा में सस्योत्पत्ति होती है; किन्तु बाद में परचक्रागम व रोगभय होता है।

वृश्चिक-प्रवेश के समय दो पापों के मध्य में सूर्य हों तो सस्य का नाश होता है और यदि वृश्चिक से सातवें पाप हो, तो सस्य उत्पन्न होकर नष्ट हो जायेगा।

वृश्चिकस्थ सूर्य से द्वितीय क्रूरग्रह प्रथमोत्पन्न सस्य नष्ट कर देता है; किन्तु पीछे बोया हुआ सस्य सम्यक् सुस्पष्ट उत्पन्न होता है। वृश्चिकस्थ सूर्य से मंगल, शनि में एक सप्तम, दूसरा अन्य केन्द्र में हो, तो सस्यविनाश होता है; किन्तु शुभदृष्ट होने से रक्षा भी हो जाती है।

सूर्य से एक पाप षष्ठ, दूसरा सप्तम में हो तो सस्य-सम्पत्ति होती है; परन्तु महर्घता भी रहती है। वृश्चिक सूर्य के जिस योग में सस्योत्पत्ति और जिस योग में सस्य-नाश प्रतिपादित है, वृषस्थ सूर्य में भी उसी प्रकार के योग में शारदीय सस्योत्पत्ति या नाश जानना चाहिए, मात्र अन्तर वृष व वृश्चिक राशि का है।

मेष, वृष, मिथुन राशि का सूर्य शुभयुक्त या शुभदृष्ट हो तो ग्रीष्म-धान्य समर्घ (सस्ता), भय से मुक्त, लोकोपयोगी होता है, अर्थात् उस सस्य-सम्पत्ति का उपयोग धार्मिक कृत्यों में होता है और धनु, मकर, कुम्भ का सूर्य शुभयुक्त या दृष्ट हो तो शारदीय धान्य सस्ता व उभयलोकोपयोगी होता है, धान्य-संग्रह काल में इसका उपयोग करना चाहिए। क्रूरग्रह से विपरीत महर्घता व पापप्रवृत्ति होती है ॥७२२-७३२॥

अथ द्रव्यनिश्चयस्तत्रैव –

**ये येषां द्रव्याणामधिपतयो राशयः समुद्दिष्टाः।**
**मुनिभिः शुभाशुभार्थं तानागमतः प्रवक्ष्यामि ॥७३३॥**
**वस्त्राविककुतुपानां मसूरगोधूमरालकयवानाम्।**
**स्थलसम्भवौषधीनां कनकस्य च कीर्त्तितो मेषः॥७३४॥**
**गवि वस्त्रकुसुमगोधूमशालियवमहिषसुरभितनयाः स्युः।**
**मिथुनेऽपि धान्यशारदवल्लीशालूककार्पासाः॥७३५॥**
**कर्किणि कोद्रवकदलीदूर्वाफलकन्दपत्रचोच्चानि।**
**सिंहे तुषधान्यरसाः सिंहादीनां त्वचः सगुडाः॥७३६॥**
**षष्ठेऽतसीकलायाः कुलुत्थगोधूममुद्गनिष्पावाः।**
**सप्तमराशौ माषा गोधूमाः सर्षपाः सयवाः॥७३७॥**
**अष्टमराशाविक्षुः सैक्यं लोहान्यजाविकं चापि।**
**नवमे तु तुरगलवणाम्बरास्त्रतिलधान्यमूलानि॥७३८॥**
**मकरे तरुगुल्माद्यं सैक्येक्षुसुवर्णलोहानि।**
**कुम्भे सलिलजफलकुसुमरत्नचित्राणि रूपाणि॥७३९॥**
**मीने कपालसम्भवरत्नान्यम्बूद्भवानि वज्राणि।**
**स्नेहाश्च नैकरूपा व्याख्याता मत्स्यजातं च ॥७४०॥**

**राशेश्चतुर्दशार्थायसप्तमनवपञ्चमस्थितो जीवः।**

**द्व्येकादशदशपञ्चाष्टमेषु शशिजश्च वृद्धिकरः॥७४१॥**

**षट्सप्तमगो हानिं वृद्धिं शुक्रः करोति शेषेषु।**

**उपचयसंस्थाः क्रूराः शुभदाः शेषेषु हानिकराः॥७४२॥**

**राशेर्यस्य क्रूराः पीडास्थानेषु संस्थिता बलिनः।**

**तत्प्रोक्तद्रव्याणां महर्घता दुर्लभत्वञ्च॥७४३॥**

**इष्टस्थाने सौम्या बलिनो येषां भवन्ति राशीनाम्।**

**तद्द्रव्याणां वृद्धिः सामर्घ्यमदुर्लभत्वं च ॥७४४॥**

द्रव्य-निश्चय –

मुनियों के द्वारा प्रतिपादित द्रव्यों के स्वामी व राशि शुभाशुभ ज्ञानार्थ कहता हूँ।

वस्त्र, ऊन, छाग, लोम, मसूर, गोधूम, राल, यव एवं भूमि पर उत्पन्न होने वाली औषधि व सुवर्णों का स्वामी व राशि मेष है।

वस्त्र, पुष्प, गोधूम, शालि (धान्य), यव, महिष, बलीवर्द (वृषभ) ये सभी वृष राशि के हैं या इनका स्वामी वृष राशि है।

शारदीय धान्य, गुलकन्द (भू के अन्दर उत्पन्न होनेवाला खाद्य पदार्थ कन्दादि) इत्यादि मिथुन राशि के अधीन हैं।

कोदो, दूर्वा, सभी फल, कन्द-मूल, सुगन्धित पत्र (चोच्च पलेवत या नारिकेल) – ये सभी पदार्थ कर्क राशि के अधीन हैं या इनका स्वामी कर्क है। तुषे-धान्य, रस (मधुर, अम्ल, कटु, कषाय, तिक्त, लवण), सिंहादि वन्य प्राणियों का चर्म, विचित्र वस्त्र, गुड़ – ये पदार्थ सिंह में आते हैं।

तीसी, मटर, कुलथी, गोधूम, मुद्ग, पुनः उत्पन्न होने वाला धान्य, निःष्पाव शाली-धान (जो उखाड़ कर पुनः रोपा जाय, उसे निष्पाव

शाली-धान कहते हैं) ये सभी पदार्थ कन्या राशि के हैं या इनका स्वामी कन्या राशि है।

गोधूम (गेहूँ), उड़द, यव, सरसो तुला राशि में आते हैं, जो मात्र सिंचन से उत्पन्न हो, वल्लीफलादि लताजनित फल, लोहा, काँसा, बकरा, भेड़, ईख ये सभी वृश्चिक राशि के हैं। अश्व, नमक (लवण), वस्त्र, तिल, अस्त्र (आयुध), मूल-कन्द – ये धनु राशि के हैं।

वृक्ष, गुल्म, लता, सैक्य (सींचने से उत्पन्न लता-फलादि), इक्षु, सुवर्ण, लोहा मकर राशि के हैं। जलोत्पन्न वस्तु, फल, पुष्प, रत्न, विचित्र रंग का पदार्थ कुम्भ राशि के हैं। मुक्ता (मूँगा), जलोत्पन्न रत्न (जल से उत्पन्न वस्तु), सूक्तिसम्भव मोती, वज्र (हीरा), तेल, मत्स्य जाति– ये सभी पदार्थ मीन राशि के अधीन हैं।

कुछ पदार्थ अन्य राशियों में भी आते हैं। पदार्थों का समर्घ, महर्घ, भावाभावादि राशि के बलाबल से होता है। पदार्थ की राशि से २।४।५।७।९।१०।११– इन स्थानों का गुरु, १।२।५।८।१०।११– इन स्थानों में बुध पदार्थों की वृद्धि करते हैं। शुक्र राशि से ६/७ स्थानों में पदार्थ की हानि, अन्यत्र वृद्धि करते हैं। पदार्थ की राशि ३।६।१०।११ – इन स्थानों में क्रूरग्रह वृद्धि करते हैं, अन्यत्र हानि। बली पापग्रह उपचय स्थानों से भिन्न स्थानों में हों तो उस पदार्थ की महँगाई, दुर्लभता करते हैं, शुभग्रह इष्ट स्थान (कथित शुभस्थान) में पदार्थ की वृद्धि व सुलभता देते हैं॥७३३-७४४॥

॥ इति द्रव्यराशिप्रकरणम् ॥

**गोचरपीडायामपि राशिर्बलिभिः शुभग्रहैर्दृष्टः।**
**पीडां न करोति तथा क्रूरैरेवं विनिर्यासाः॥७४५॥**

गोचर से पदार्थ राशि पीड़ित होने पर भी बली बुध, गुरु, शुक्र राशि को देखते हों तो पीड़ा नहीं होती, महर्घता का अभाव होता

है, समभाव से वस्तु उपलब्ध होती है एवं बली पापग्रह यदि राशि को देखते हैं, तो महर्घता आदि विपरीत फल देते हैं ।।७४५।।

अथार्घकाण्डं वाराहीसंहितायाम्—

**अतिवृष्ट्युल्कादण्डान् परिवेषग्रहणपरिधिपूर्वांश्च।**
**दृष्ट्वामावास्यायामुत्पातान्पौर्णमास्यांश्च ।। ७४६ ।।**
**ब्रूयादर्घविशेषान्प्रतिमासं राशिषु क्रमात्सूर्य्ये।**
**अन्यतिथावुत्पाता ये ते डमरार्तये राज्ञाम् ।। ७४७ ।।**
**मेषोपगते सूर्ये ग्रीष्मजधान्यस्य सङ्ग्रहं कुर्यात्।**
**वनमूलफलस्य वृषे चतुर्थमासे तयोर्लाभः ।। ७४८ ।।**
**मिथुनस्थे सर्वरसान् धान्यानि च सङ्ग्रहं समुपनीय।**
**षष्ठे मासे विपुलं विक्रीणन् प्राप्नुयाल्लाभम् ।। ७४९ ।।**
**कर्किण्यर्के मधुगन्धतैलघृतफाणितानि विनिधाय।**
**द्विगुणा द्वितीयमासे लब्धिर्हीनाधिके छेदः ।। ७५० ।।**
**सिंहे सुवर्णमणिचर्मवर्मशस्त्राणि मौक्तिकं रजतम्।**
**पञ्चममासे लब्धिर्विक्रितुरतोऽन्यथा छेदः ।।**
**कन्यागते दिनकरे च मरखरकरभवाजिनां क्रेता।**
**षष्ठे मासे द्विगुणं लाभमवाप्नोति विक्रीणनात् ।। ७५१ ।।**
**तौलिनि तान्तवभाण्डं मणिकम्बलकाचपीतकुसुमानि।**
**आदद्याद्धान्यानि च षण्मासाद् द्विगुणिता वृद्धिः ।। ७५२ ।।**
**वृश्चिकसंस्थे सवितरि फलकन्दमूलविविधरत्नानि।**
**वर्षद्वयमुषितानि द्विगुणं लाभं प्रयच्छन्ति ।। ७५३ ।।**

सूर्य के मेषादि प्रति राशियों में अतिवृष्टि, उल्का, दण्ड, परिवेष, ग्रहण, परिधि (प्रतिसूर्य) प्रभृति उत्पातों को अमा व पूर्णिमा के दिन

देखकर अर्घविशेषज्ञ अर्घ का निर्दिश करें; क्योंकि अमा, पूर्णिमा में प्रायः उत्पात होते रहते हैं। अमा व पूर्णिमा के अतिरिक्त तिथियों में होने वाले उत्पात राजाओं के शस्त्र-युद्ध के सूचक हैं व उनसे जन-पीड़ा होती है।

मेष राशि के सूर्य में अमावास्या व पूर्णिमा में उत्पात होता है, तो ग्रीष्म धान्य का संग्रह करना चाहिए। वृष के सूर्य में वन्य मूल-फल का संग्रह करना चाहिए। उन दोनों से चौथे मास में विक्रय से लाभ होता है।

मिथुन के सूर्य में उपर्युक्त उत्पातों को देखकर (मधुरादि) सर्वरस व धान्य का संग्रह कर छठवें मास के विक्रय से विशेष लाभ होता है।

कर्कस्थ सूर्य में उपर्युक्तोत्पातादि देखकर मधु, सुगन्ध द्रव्य, तेल, घृत, सीरा, गुड़ के संग्रह से दूसरे मास में दूना लाभ होता है। दो मास से पूर्व या पीछे हानि की संभावना रहती है।

सिंह राशि के सूर्य में यदि पूर्वोक्तोत्पातादि होते हैं तो सुवर्ण, मणि, चर्म, वर्म (कवच), शस्त्र, मोती का संग्रह करके पाँचवें मास में विक्रय से लाभ व पाँच मास के पूर्व या बाद विक्रय से हानि होती है।

कन्या के सूर्य में उपर्युक्त उत्पात देखकर वाल, व्यजन, चँवर, गदहा, ऊँट, घोड़ा का संग्रह कर छठवें मास के विक्रय से दूना लाभ होता है।

तुला के सूर्य में तन्तु (डोरा) से बनी हुई वस्तु, कम्बल, काँच, पीला पुष्प या पीली वस्तु व धान्य के संग्रह से छः मास में दूना लाभ होता है।

वृश्चिकस्थ सूर्य में फल, कन्द-मूल व अनेक रत्नों के संग्रह से दो वर्ष बाद दूना लाभ होता है ॥७४६-७५३॥

**चापगते गृह्णीयात्कुंकुमशंखप्रवालकाचानि।**
**मुक्ताफलानि च ततो वर्षार्द्धाद्द्विगुणतां यान्ति ॥७५४॥**
**मृगघटगे गृह्णीयाद्दिवाकरे लोहभाण्डधान्यानि।**
**स्थित्वा मासं दद्याल्लाभार्थी द्विगुणमाप्नोति ॥७५५॥**
**सवितरि झषमुपयाते मूलफलं कन्दभाण्डरत्नानि।**
**संस्थाप्य वत्सरार्द्धं लाभकमिष्टं समाप्नोति ॥७५६॥**
**राशौ राशौ यस्मिन् शिशिरमयूखः सहस्रकिरणो वा।**
**युक्तोऽधिमित्रदृष्टस्तत्रायं लाभकोद्दिष्टः ॥७५७॥**
**सवितृसहितः सम्पूर्णो वा शुभैर्युतवीक्षितः।**
**शिशिरकिरणः सद्योऽर्घस्य प्रवृद्धिकरः स्मृतः ॥**
**अशुभसहितः संदृष्टो वा हिनस्त्यथवा रविः।**
**प्रतिगृहगतान्भावान्बुद्ध्वा वदेत्सदसत्फलम् ॥७५८॥**

धनु के सूर्य में काश्मीरी कुंकुम, शंख (चूड़ी), मूँगा, मोती ग्रहण से छः मास में दूना लाभ होता है।

कुम्भ व मकर के सूर्य में लौहपात्र, धान्य संग्रह कर एक मास बाद बेचने से दूना लाभ होता है।

मीन के सूर्य में मूल, फल, कन्द, भाण्ड (पात्र), रत्न का संग्रह करे, तो छठवें मास के बाद यथेष्ट लाभ होता है, उत्पात का अध्याहार सर्वत्र करना चाहिए, अन्यथा वाणी मिथ्या होगी।

प्रत्येक राशि में सूर्य या चन्द्र अधिमित्र से युक्त या दृष्ट हो, तो उस मास में उद्दिष्ट वस्तु से लाभ होगा, सूर्य के साथ चन्द्र ग्रहण

में हेतु यह है कि अमावास्या व पूर्णिमा के उत्पातों के ही फल का निर्देश कहा गया है।

जिस अमा में सूर्य के साथ चन्द्रमा को शुभग्रह देखते हों या युक्त हों तो अर्घ की वृद्धि (सस्ती) होती है, अथवा पापदृष्ट, युत से वस्तु की हानि व महर्घता होती है। इस प्रकार प्रति राशिगत सूर्य से अर्घविचार करना चाहिए ।।७५४-७५८।।

॥ इत्यर्घप्रकरणम् ॥

अथोत्पातनामानि ग्रन्थान्तरे—

उत्पातास्त्रिविधाः प्रोक्ता दिव्यभौमान्तरिक्षजाः।
दिव्यादिविभवा भौमा भूमिजाश्चान्तरिक्षजाः॥७५९॥
वृक्षे ध्वजादावुत्पन्नाः क्रमादुग्राल्पमध्यमाः।
भूमिकम्पो दिशां दाहो निर्घातो धूलिवर्षणम्॥७६०॥
उल्कापातस्तरुच्छेदो नभसो वृष्टिरश्मनाम्।
अन्धकारो दिवा विद्युत्पातोऽथर्त्तुविपर्ययः॥७६१॥
विकृतिप्रसवो जन्तो रवीन्द्वोश्च विपर्ययः।
वर्षाकालं विना बिम्बे रवीन्द्वोः परिमण्डलम्॥७६२॥
अकस्मात्तु स्थलार्द्रत्वं खग्रासं ग्रहणद्वयम्।
बालस्त्रीद्विजवर्याणां वधः पीडा जनस्य च॥७६३॥
प्रसादस्य च देवस्य ध्वंसः पातो ध्वजस्य च।
ग्रहा वक्रातिचारस्थाः सर्वे वा स्वर्क्षगा ग्रहाः॥७६४॥
सर्वेऽप्येकर्क्षगा खेटा एकर्क्षे शनिवाक्पती।
शुक्लपक्षे भृगोरस्तोदयो वा केतुदर्शनम्॥७६५॥

**मुशलं खगपंक्तिस्थं द्व्यादिचन्द्रार्कदर्शनम्।**

**चुल्ल्यामग्न्युद्भवोऽकस्माज्जले धूमादिकं भवेत्॥७६६॥**

**उलूखलघरट्यादिचलनस्फोटनेऽपि वा।**

**प्रतिमायाः प्रकम्पो वा हसनं रोदनं तथा॥**

**भुवो विररमित्याद्या उत्पाता ह्यपरेऽपि च॥७६७॥**

तीन प्रकार के उत्पातों की गणना में भौम, दिव्य, अन्तरिक्ष जनित उत्पात आते हैं। दिव्य से उत्पन्न दिव्य, भूमि से भौम व अन्तरिक्ष से उत्पन्न अन्तरिक्षज होता है।

वृक्ष में ध्वजादिजनित उत्पात उग्र, अल्प व मध्यम तीन भेद से होता है। भूमिकम्प, दिग्दाह, निर्घात, धूलिवर्षा, उल्कापात, वृक्षच्छेद (टूटना), आकाश से पत्थर की वृष्टि, दिन में अन्धकार, विद्युत्पतन व ऋतु-विपर्यय, प्राणी के प्रसव की विकृति, सूर्य-चन्द्र का विपर्यय, वर्षाकाल के अतिरिक्त का परिवेश, अकारण भूमि में द्रव, दो खग्रास ग्रहण (एक मास में), बाल, स्त्री व ब्राह्मण का वध, जनपीडा, प्रासाद, देव व ध्वज का अकारण पतन, अपने राशि में ग्रहों का वक्र, अतिचार, सभी ग्रह एकराशि में हों या शनि-गुरु का योग, शुक्लपक्ष में शुक्रास्त व शुक्रोदय, केतु की तारा का उदय, आकाश में मुसल का दर्शन, दो-दो सूर्य-चन्द्र का दर्शन, चुल्ली में अनायास अग्नि का आविर्भाव, अकारण जल में धूमदर्शन, जाँत (चक्की), उखल का चलना या टूटना, देवप्रतिमा का स्वेद, प्रहसन, प्रचलन (कम्प), भूमि का विदीर्ण होना आदि और इससे भिन्न अन्य भी उत्पात हैं॥७५९-७६७॥

अथोत्पातानां फलानि ग्रन्थान्तरे—

**प्रजाभीतिर्भुवः कम्पे निर्घाते भूपतेर्मृतिः।**

**अवर्षणं च दिग्दाहे दुर्भिक्षं धूलिवर्षणे॥७६८॥**

महर्घं चाश्मनां वृष्टावुल्कापाते जनक्षयः।
राज्ञो नाशस्तरुच्छेदे विद्युत्पातेऽम्बुशोषणम् ॥ ७६९॥
ऋतौ विपर्यये रोगे दिवा ध्वान्ते प्रजाक्षयः।
राजविघ्नकरो जन्तोर्विकृतिः प्रसवो मतः॥ ७७०॥
रवीन्द्वोश्चाविपर्यासे घोरो भवति विग्रहः।
युद्धे युद्धं खगेन्द्राणां संयुतौ च महर्घता॥ ७७१॥
रवीन्द्वोः परिधौ दूरे फलं चान्यत्र मण्डले।
मध्यमे स्वीयदेशे स्यादन्यदेशेन दुष्यति॥ ७७२॥
श्वेते भयं च पीते रुग् वृष्टिर्नीलेऽरुणे रणः।
कृष्णे भूपक्षयो धूम्रे नीहारः परिधौ भवेत्॥ ७७३॥
छिन्ने खण्डफलं चातिदूरे नास्ति फलं त्विदम्।
प्रावृट्कालं विनान्यत्र परिधिश्च तदा त्विदम्॥ ७७४॥
अकाले फलपुष्पादि प्रोद्गमे धान्यनाशनम्।
स्थलार्द्रत्वे स्थले वृष्टिर्महती परिकीर्त्तिता॥ ७७५॥
स्त्रीवधे चातिदुर्भिक्षं विप्रबालवधेऽपि तत्।
देवध्वंसे च तद्देशराजध्वंसः प्रजायते॥ ७७६॥
सर्वग्रासे ग्रहे सर्ववस्तूनां च महर्घता।
दुर्भिक्षं कुरुते खेटा भौमाद्या वक्रगामिनः॥ ७७७॥
अतिचारगतास्सर्वे स्वर्क्षे चोच्चगता अपि।
ज्ञेया खेटफलाश्चैकराशिस्था देशनाशकाः॥ ७७८॥
स्याताम‍स्तोदयो शुक्ले पक्षे चेद्भार्गवस्य च।
राजयुद्धं तदा घोरं वृष्टिः स्यात्तु निरन्तरम्॥ ७७९॥

जीवार्कपुत्रयोर्योगे दुर्भिक्षं विग्रहस्तथा।
संग्रामश्चातिदुर्भिक्षं जायते मुशलोदये॥७८०॥

उक्त उत्पातों का फल–

भूकम्प से प्रजा में भय, निर्घात से राजा की मृत्यु, दिग्दाह से अवर्षण, धूलिवर्षा से दुर्भिक्ष, पाषाणवृष्टि से महर्घता, उल्कापात से जनहानि, वृक्षभंग से राजा का नाश, विद्युत्पात से जलाभाव, ऋतु-विपर्यय से रोग, दिन के अन्धकार से प्रजानाश, प्रसव-विकृति से राजविघ्न, सूर्य-चन्द्र के विपर्यय से (प्रकृति में परिवर्तन) देश में भयंकर युद्ध, ग्रहों में युद्ध से युद्ध, समागम से महर्घता, रवि-चन्द्र के परिधि का देशान्तर में फल होता है, अपने देश में मध्यम, स्वल्प फल है। परिधि खण्डित हो तो अतिदूर में खण्डफल (थोड़ा) होता है, अपने देश में फल का अभाव है, वर्षा काल के अतिरिक्त काल के परिधि से यह फल है। असमय के फल-पुष्पोद्भव व भूमि के आर्द्र होने से धान्यनाश, स्थलार्द्र (जिस स्थान पर भूमि गीली हो जाय) से उस स्थल पर महती वृष्टि होती है। स्त्री, बाल, ब्राह्मण के वध से अतिदुर्भिक्ष, देवध्वंस (प्रतिभा के नष्ट) से राज्य का विनाश, सर्वग्रास में सभी वस्तुओं की महर्घता, भौमादि ग्रहों का वक्रातिचार दुर्भिक्षकारक है, अपने राशि या उच्च राशि के अतिचार-वक्र से ही फल का विचार करना चाहिए। सभी ग्रहों के एक राशि के निवास से देश का विनाश होता है। शुंक्र के शुक्लपक्ष के उदय-अस्त से राजाओं में घोर युद्ध व निरन्तर वृष्टि होती है। शनि-गुरु के एक राशि-योग से दुर्भिक्ष व विग्रह होता है। मुशल मूसलाकृति तारा के उदय से चारों तरफ संग्राम व दुर्भिक्ष होता है॥७६८-७८०॥

॥ इत्युत्पातप्रकरणम् ॥

अथोत्पातानां सङ्ग्रहो वाराहीसंहितायाम्, तत्रादौ सन्ध्यालक्षणम् –

**अर्द्धास्तमितानुदितात्सूर्य्यादस्पष्टं भं नभो यावत्।**

**तावत्सन्ध्याकालश्चिह्नैरेतैः फलं चास्मिन् ॥७८१॥**

**मृगशकुनपवनपरिवेषपरिधिपरिघाभ्रवृक्षसुरचापैः।**

**गन्धर्वनगररविकरदण्डरजःस्नेहवर्णैश्च ॥७८२॥**

**भैरवमुच्चैर्विरुवन् मृगोऽसकृद्ग्रामघातमाचष्टे।**

**रविदीप्तो दक्षिणतो महास्वनः सैन्यघातकरः॥७८३॥**

**अपसव्ये संग्रामः सव्ये सेनागमः शान्ते।**

**मृगचक्रे पवने वा सन्ध्यायां मिश्रगे वृष्टिः॥७८४॥**

उत्पात-संग्रह –

सूर्य के अर्द्धबिम्बास्त से जब तक स्पष्ट तारायें नहीं दिखाई देतीं तब तक सन्ध्याकाल होता है एवं सूर्यार्धबिम्बोदयावधि आकाश में स्पष्ट तारा दिखाई देने तक पूर्व प्रातः सन्ध्याकाल है, इस सन्ध्याकाल में वक्ष्यमाण लक्षणों से फल कहना चाहिए।

मृग (अरण्य पशु), पक्षी, वायु, सूर्य, चन्द्र परिवेष (परिधि प्रतिसूर्य), परिधि (सूर्यास्ते उदये वा तिर्यक्स्थिता मेघरेखा–परिधिः) वृक्षाकार मेघ की प्रतीति, इन्द्रधनुष, गन्धर्वनगर, सूर्यरश्मि-दण्ड (सूर्यकिरण, मेघ, वायु के योग से आकाश में दण्डाकृति दिखाई देना), रज, सन्ध्याराग, इनकी स्निग्धता व वर्णों से सन्ध्या का फल कहना चाहिए।

सन्ध्या समय मृग समूहों का बार-बार उच्च स्वर से भयंकर रोदन, ग्रामों का विनाश व सेना के दक्षिण दिशा व सेना के वाम भाग में सूर्याभिमुख भयंकर रोदन, उच्च स्वर से शब्द करे, तो क्रम से सेनानाश व संग्राम-सूचक है, सेना के दाहिने शान्त दिशाभिमुख मधुर

शब्द से सेना का समागम है और मृगसमूह व वायु दोनों की दिशा शान्तादि हो तो वृष्टि होगी ।।७८१-७८४।।

**दीप्तमृगाण्डजविरुता प्राक्सन्ध्या देशनाशमाख्याति।**

**दक्षिणदिक्स्थैर्विरुता ग्रहणाय पुरस्य दीप्तास्यैः ।।७८५।।**

पूर्व सन्ध्या में आरण्यक मृग व पक्षी समूह सूर्याभिमुख रुक्ष (नीरस) विराव करते हैं तो देश के विनाश का कारण है, वही मृगसमूह व पक्षीगण ग्राम, पुर के दक्षिण दिशा में सूर्याभिमुख रोदन करें, तो पुर या ग्राम परहस्त हो जाएगा, शत्रुओं से अधिकृत हो जायेगा ।।७८५।।

**गृहतरुतोरणमथने सपांशुलोष्ठोत्करेऽनिले प्रबले।**

**भैरवरावे रुक्षे खगपातिनि चाशुभा सन्ध्या ।।७८६।।**

सन्ध्या-वायु-लक्षण –

सन्ध्या के समय गृह, वृक्ष, तोरण (गृह के अग्रभाग) को झकझोरता (मन्थन करता हुआ) धूलि (मृत्खण्ड), मिट्टी के टुकड़े के साथ भयंकर असह्य शब्दायमान पक्षियों को आकाश से गिराता हुआ प्रबल बहता वायु अनिष्ट फलकारक है ।।७८६।।

**मन्दपवनावघट्टितचलितपलाशद्रुमा विपवना वा।**

**मधुरस्वरशान्तविहङ्गमृगरुता पूजिता सन्ध्या ।।७८७।।**

वायु के मन्द गति से ईषच्चलायमान वृक्ष, शान्त दिशाभिमुख मृग-पक्षियों के मधुर विराव से युक्त वायुरहित-सी प्रतीत होने वाली सन्ध्या पूजनीय, शुभफलदायिनी होती है ।।७८७।।

**सन्ध्याकाले स्निग्धा दण्डतडिन्मत्स्यपरिधिपरिवेषाः।**

**सुरपतिचापैरावतरविकिरणाश्चाशुवृष्टिकराः ।।७८८।।**

सन्ध्या के समय दण्ड (सूर्यबिम्बोपरि मेघरेखा-दण्डप्रतीति) बिजली, मत्स्य के आकारों से परिवेष्टित, मेघ, प्रतिसूर्य, परिवेष, इन्द्रधनुष, ऐरावत, सूर्य-किरण– ये सभी स्निग्ध हृदय (ह्लादकारक) सुखावलोकित हों तो शीघ्र वृष्टि होती है ।।७८८।।

**विच्छिन्ना विषमविध्वस्ता विकृतकुटिलापसव्यपरिवृता।**
**तनुह्रस्वविकलुषाश्च विग्रहा वृष्टिदाः किरणाः।।७८९।।**

सन्ध्या के समय सूर्य की किरणें छिन्न-भिन्न, विषम कान्ति, हीन, विकृत, कुटिल, वामावर्त, परिवेष्टित, दुर्बल, शक्तिहीन, कलुषित दिखाई दें, तो वैर व अवर्षण होता है ।।७८९।।

**उद्योतिनः प्रसन्ना ऋजवो दीर्घाः प्रदक्षिणावर्त्ताः।**
**किरणाः शिवाय जगतो वितमस्के नभसि भानुमतः।।७९०।।**

अन्धकाररहित आकाश में सूर्य की किरणें दीप्तिमान्, प्रसन्न, दीर्घ, दक्षिणावर्त, परिवेष्टित दिखाई दें, तो जगत् का कल्याण होता है ।।७९०।।

**शुक्लाः करा दिनकृतो दिवादिमध्यान्तगामिनः स्निग्धाः।**
**अव्युच्छिन्ना ऋजवो वृष्टिकरास्ते ह्यमोघाख्याः।।७९१।।**

सूर्य की किरणें श्वेत, सर्वत्राकाशव्यापी, स्निग्ध, परिपूर्ण, स्पष्ट हों तो उसे अमोघ कहते हैं और वह वृष्टिकारक है ।।७९१।।

**कल्माषबभ्रुकपिला विचित्रा माञ्जिष्ठहरितशबलाभा।**
**त्रिदिवानुबन्धिनो वृष्टयेऽल्पभयदास्तु सप्ताहात्।।७९२।।**

यदि वे सूर्य-किरणें पीत, गौर, कृष्ण (श्वेत, कृष्ण, पीत वर्ण मिश्रित), नेउला के रंग की, कपिल, विचित्र मञ्जिष्ठ के रंग की, पूरा आकाशव्यापी, अग्रगामी, गमनशील दिखाई दें तो अवृष्टि व सात दिन बाद थोड़ा भयदायक है ।।७९२।।

**ताम्रा बलपतिमृत्युं पीतारुणसन्निभाश्च तद्व्यसनम्।**
**हरिताः पशुसस्यवधं धूमसवर्णा गवां नाशम्॥७९३॥**

सूर्य की किरणें ताम्र वर्ण की दिखाई दें तो सेनापति की मृत्यु, पीत-रक्त मिश्रित में सेनापति के लिए व्यसन (दुःख), शुककान्ति किरण पशु, सस्य का विनाश व धूम्र वर्ण से गोविनाश होता है ॥७९३॥

**मञ्जिष्ठाभाः शस्त्राग्निसम्भ्रमं बभ्रवः पवनवृष्टिम्।**
**भस्मसदृशास्त्ववृष्टिं तनुभावं सबलकल्माषाः॥७९४॥**

मञ्जिष्ठ के रंग से शस्त्र, अग्निभय, बभ्रु (नेवला) के वर्ण से वायु के साथ वृष्टि होती है, राख (भस्म) के वर्ण से अवर्षण होता है, श्वेत, कृष्ण, नील, पीत मिश्रित वर्ण से थोड़ी वृष्टि होती है ॥७९४॥

**बन्धूकपुष्पाञ्जनचूर्णसन्निभं**
**सान्ध्यं रजोऽभ्येति यदा दिवाकरम्।**
**लोकस्तदा रोगशतैर्निपीड्यते**
**शुक्लं रजो लोकविवृद्धिशान्तये॥७९५॥**

बन्धूक पुष्प जैसे अतिलाल व अतिकृष्ण रजकण (धूलि) सन्ध्या के समय यदि सूर्याभिमुख जाते हों, तो लोक सैकड़ों रोगों से पीड़ित होता है, यदि रज श्वेत हो, तो लोक में शान्ति व वृद्धि होती है ॥७९५॥

**रविकिरणजलदमरुतां सङ्घातो दण्डवत्स्थितो दण्डः।**
**स विदिक्स्थितो नृपाणामशुभो दिक्षु द्विजातीनाम्॥७९६॥**

सूर्य का किरण जलवायु के संघात से दण्डाकृति (यष्टि की भाँति) हो जाता है, तो उसे दण्ड कहते हैं, वह दण्ड कोणों में दिखाई देता है, तो राजाओं व उत्तरादि दिशाओं में दिखने से क्रमशः ब्राह्मण, क्षत्रिय, वैश्य एवं शूद्रों के लिए भय है ॥७९६॥

**शस्त्रभयान्तककरो दृष्टः प्राङ्मध्यसन्धिषु दिनस्य।**
**शुक्लाद्यो विप्रादीन्यदभिमुखस्तान्निहन्ति दिशम्॥७९७॥**

यदि वह दण्ड सूर्योदय, मध्याह्न व सायं सन्ध्या के समय दिखाई देता है, तो शस्त्रभय व उपद्रव होता है, यदि शुक्ल, रक्त, पीत, कृष्ण वर्ण का दिखाई देता है, तो क्रमशः ब्राह्मण, क्षत्रिय, वैश्य, शूद्र व जिस दिशा में दिखाई दे, उस दिशा का नाश करता है ॥७९७॥

**दधिसदृशाग्रो नीलो भानुच्छादी खमध्यगोऽभ्रतरुः।**
**पीतच्छुरिताश्च घनाघनमूला भूरिवृष्टिकराः॥७९८॥**

मेघ वृक्ष (वृक्षाकृति), दधिमुखाग्र (दधि जैसा अग्र), नीलवर्ण, सूर्य को अच्छादित करता, आकाशमध्यगामी, पीतकान्ति, मेघमूलक हो तो अतिवृष्टि होती है ॥७९८॥

**अनुलोमगेऽभ्रवृक्षे समुद्गते यायिनो नृपस्य वधः।**
**बालतरुप्रतिरूपिणि युवराजामात्ययोर्मृत्युः॥७९९॥**

वृक्षरूप मेघ यायी के पृष्ठभाग में जाता हुआ अकस्मात् नष्ट हो जाय, तो यायी की मृत्यु होती है। वही मेघ वृक्ष बालवृक्ष (छोटा) में परिवर्तित हो जाय, तो युवराज व मन्त्री की मृत्यु होती है ॥७९९॥

**कुवलयवैडूर्य्याम्बुजकिञ्जल्काभा प्रभञ्जनोन्मुक्ता।**
**सन्ध्या करोति वृष्टिं रविकिरणोद्भासिता सद्यः॥८००॥**

नील उत्पल (पाषाण), वैदूर्य (नील-पीत), कमलकेशर-सी भासित, वायुरहित, सूर्य-किरणों से आभासित सन्ध्या सद्यः वृष्टि करती है ॥८००॥

**अशुभाकृतिर्घनगन्धर्वनगरनीहारपांशुधूमयुता।**
**प्रावृषि करोत्यवग्रहमन्यर्त्तौ शस्त्रकोपकरी॥८०१॥**

अशुभ आकृति गर्दभ, ऊँट, काक, कबन्ध, मार्जार के आकार जैसा गन्धर्वनगर व धूमपांशुओं से युक्त सन्ध्या वर्षा ऋतु में अवर्षण, अन्य ऋतु में शस्त्र-भय देती है ॥८०१॥

**शिशिरादिषु वर्णाः शोणपीतसितचित्रपद्मरुधिरनिभाः।**
**प्रकृतिभवाः सन्ध्यायां स्वर्त्तौ शस्ता विकृतिरन्या ॥८०२॥**

ऋतुओं के अनुसार सन्ध्या का वर्ण भिन्न होता है, ऋतु के अनुसार वर्ण की सन्ध्या शुभ, ऋतुविरुद्ध वर्ण की सन्ध्या अशुभ होती है, शिशिरादि चार ऋतुओं में क्रम से सन्ध्या का स्वाभाविक वर्ण लाल, पीत, श्वेत, विचित्रं व शरद् में रक्त, गौर तथा हेमन्त में अतिलाल वर्ण की सन्ध्या होती है ॥८०२॥

**आयुधभृन्नररूपं छिन्नाभ्रं परभयाय रविगामि।**
**सितखपुरेऽर्काक्रान्ते पुरलाभो भेदने नाशः॥८०३॥**

छिन्न-भिन्न आयुधधृत पुरुषाकृति स्वरूप सूर्याभिमुख (रवि के समीप) जाता हुआ देखा जाय तो भयाय (भयकारक) है, यदि श्वेत गन्धर्वनगर से सूर्य आच्छादित हो तो पुर-नगर का लाभ (जिसने नगर पर चढ़ायी की है उसे नगर की प्राप्ति होगी), यदि गन्धर्वनगर सूर्य से छिन्न-भिन्न हो जाता है, तो पुर का नाश होगा (लूटा जाएगा) ॥८०३॥

**सितनितान्तघनावरणं रवेभर्वति वृष्टिकरं यदि सव्यतः।**
**यदि च वीरणगुल्मनिभैर्घनैर्दिवसभर्त्तुरदीप्तदिगुद्भवैः॥८०४॥**

यदि श्वेत अतिशय घनीभूत मेघ दक्षिण से सूर्य को आच्छादित करता है तो वृष्टिकारक है, यदि तृणविशेष छोटे वृक्षों की आकृति जैसा मेघसमूहों से शान्त दिशा की तरफ से सूर्य आच्छादित होता है, तो वह वृष्टिकारक है ॥८०४॥

**नृपविपत्तिकरः परिघः सितः क्षतजतुल्यवपुर्बलकोपकृत्।**
**कनकरूपधरो बलवृद्धिदः सवितुरुद्गमकालसमुत्थितः॥८०५॥**

यदि श्वेत परिघ (तिर्यक् मेघरेखा) उदय काल में उत्पन्न होता है तो, राजा का मृत्युकारक है। यदि परिघ रक्त वर्ण का है तो आहत जैसा सेनापति क्रोध करता है, सुवर्ण जैसा परिघ सेना के लिए वृद्धिकारक है ॥८०५॥

**उभयपार्श्वगतौ परिधी रवेः प्रचुरतोयकृतौ वपुषान्वितौ।**

**अथ समस्तककुप्परिवारिणः परिधयोऽस्तिकणोऽपि न वारिणः॥ ८०६॥**

प्रतिसूर्य (सूर्य जैसा प्रतीत होने वाला बिम्ब) सूर्य के दोनों भाग में दिखाई दे तो बहुजल होता है, यदि परिंधि प्रतिसूर्य, सूर्य के चारों तरफ दिखाई दे तो जल कण भी नहीं वर्षता है ॥८०६॥

**ध्वजातपत्रपर्वतद्विपाश्वरूपधारिणः।**

**पलालधूमसञ्चयस्थितोपमाबलाहकाः॥ ८०७॥**

**जयाय सन्ध्ययोर्घना रणाय रक्तसन्निभाः।**

**बलान्यरुक्षमूर्त्तयोर्विवर्द्धयन्ति भूभृताम्॥ ८०८॥**

**विलम्बिनो द्रुमोपमाः खरारुणप्रकाशिनः।**

**घनाः शिवाय सन्ध्ययोः पुरोपमाः शुभावहाः॥ ८०९॥**

ध्वजा, छाता, पर्वत, हस्ति, अश्व आदि रूपाकृति मेघ से यदि दोनों काल की सन्ध्या आच्छादित है, तो राजविजय का द्योतक है। वह दोनों काल की सन्ध्या ध्वजादि आकृति रक्त वर्ण से परिवेष्टित (आच्छादित) है, तो संग्राम और ध्वजादिरूप स्निग्ध थोड़ा कृष्ण-सा मेघ से आच्छादित सेना की वृद्धि का द्योतक है। पलाल, पुआल, धूप, ईषत्कृष्ण वृक्ष जैसा लम्बायमान, अतिलोहित, दीप्तिमान् नगर के आकार के मेघ से सन्ध्या आच्छादित है, तो कल्याणसूचक है ॥८०७-८०९॥

**दीप्तविहङ्गशिवामृगघुष्टा दण्डरजःपरिघादियुता च।**

**प्रत्यहमर्कविकारयुता वा देशनरेशसुभिक्षवधाय॥ ८१०॥**

आरण्यकमृग-पक्षिगण, शिवा (शृगाली) प्रभृति प्राणी सूर्याभिमुख शब्द करते हों या दण्ड, राग, परिघ, इन्द्र, चाप, गन्धर्वनगर, अन्धकार इत्यादि विकारों से प्रति दिन सूर्य परिवेष्टित होते हों, तो देश, राजा व सुभिक्ष का नाश होता है ॥८१०॥

**प्राची तत्क्षणमेव नक्तमपरा सन्ध्या त्र्यहाद्वा फलं**
**सप्ताहात्परिवेषरेणुपरिघाः कुर्वन्ति सद्यो न चेत्।**
**तद्वत्सूर्यकरेन्द्रकार्मुकतडित्प्रत्यर्कमेघानिला-**
**स्तस्मिन्नेव दिनेऽष्टमेऽथ विहगाः सप्ताहपाका मृगाः॥८११॥**

पूर्व की सन्ध्या तत्काल शुभाशुभ फल देती है और सायं सन्ध्या रात्रि में फल देती है, यदि सन्ध्या का फल तत्काल नहीं होता है, तो तीन दिन में फल होगा। यदि सन्ध्या में परिवेष रज परिघदृष्ट हो तो उसी दिन फल देते हैं। अथवा सात दिन में फल देते हैं। एवमेव सूर्य-किरण, इन्द्रधनुष, विद्युत्, प्रतिसूर्य मेघ व वायु मिश्रित दिखाई दें, तो उसी दिन या सात दिन में फल देते हैं।

मृग-पक्षियाँ सन्ध्याकृत शुभाशुभ फल उसी दिन या आठ दिन में देते हैं। आरण्यक मृग सन्ध्याकालोपलक्षित फल ७ दिन में देते हैं ॥८११॥

**एकं दीप्त्यायोजनं भाति सन्ध्या विद्युद्भासा षट्प्रकाशीकरोति।**
**पञ्चाब्दानां गर्जितं याति शब्दो नास्तीयत्ता काचिदुल्कानिपाते॥८१२॥**

दीप्ति-कान्ति से आभासित सन्ध्या एक योजन तक प्रकाशित या फल देती है। विद्युद्भासाभासित सन्ध्या छः योजन, मेघध्वनि पाँच योजन तक फल देती है। उल्का के निपात में अवधि-सीमा नहीं है, सर्वत्र फल होता है। देवल के मत से उपर्युक्त फलों के परिपाक की सीमा नहीं है ॥८१२॥

**प्रत्यर्कसंज्ञः परिधिस्तु तस्य त्रियोजनाभः परिघस्य पञ्च।**

**षट्पञ्चदृश्यं परिवेषचक्रं दशामरेशस्य धनुर्विभाति॥८१३॥**

**॥ इति सन्ध्यालक्षणम् ॥**

प्रतिसूर्य परिधि की कान्ति तीन योजन तक दिखाई देती है, अर्थात् प्रतिसूर्य का फल तीन योजन तक होगा, परिघ का पाँच, परिवेष का पाँच या छः योजन तक होता है. तथा इन्द्रधनुष दश योजन तक फल देता है॥८१३॥

अथ दिग्दाहो वाराहीसंहितायाम्—

**दाहो दिशां राजभयाय पीतो देशस्य नाशाय हुताशवर्णः।**

**यश्चारुणः स्यादपसव्यवायुः सस्यस्य नाशं स करोति दृष्टः॥८१४॥**

दिग्दाह-फल—

पीत वर्ण का दिग्दाह राजा के भय का हेतु, अग्निवर्ण का देशनाश, रक्त वर्ण का दिग्दाह व वामभाग का वायु सस्य का नाश करता है॥८१४॥

**योऽतीवदीप्त्या कुरुते प्रकाशं छायामपि व्यञ्जयतेऽर्कवद्यः।**

**राज्ञो महद्वेदयते भयं सः शस्त्रप्रकोपं क्षतजानुरूपः॥८१५॥**

जो दिग्दाह प्रदीप्त है और सूर्य जैसी अपनी छाया प्रकट करता है, तो राजा के लिए भय है। रक्त वर्ण का दिग्दाह शस्त्र-कोप व राजभय करता है॥८१५॥

**प्राक्क्षत्रियाणां स नरेश्वराणां प्राग्दक्षिणे शिल्पिकुमारपीडा।**

**याम्यैः सहोग्रैः पुरुषैस्तु वैश्या दूताः पुनर्भूप्रमदाश्च कोणे॥८१६॥**

**पश्चात्तु शूद्राः कृषिजीविनश्च चौरास्तुरङ्गैस्सह वायुदिक्स्थे।**

**पीडां व्रजन्त्युत्तरतश्च विप्राः पाखण्डिनो वाणिजकाश्च शार्व्याम्॥८१७॥**

नभः प्रसन्नं विमलानि भानि प्रदक्षिणं वाति सदागतिश्च।
दिशां च दाहः कनकावदातो हिताय लोकस्य सपार्थिवस्य॥८१८॥

॥ इति दिग्दाहः॥

पूर्व दिशा का दिग्दाह सभी क्षत्रिय राजाओं, अग्निकोण का दिग्दाह लोह, सुवर्ण आदि धातु, शिल्पी व कुमारों, दक्षिण का दिग्दाह वैश्य वर्ग, क्रूर पुरुषों को पीड़ित करेगा। नैऋत्य के दिग्दाह से दूत व पुनर्भू स्त्री (जो स्त्री दूसरा विवाह करती है), पश्चिम के दिग्दाह से शूद्र व कृषक, वायव्य के दिग्दाह से चोर व घोड़े, उत्तर के दिग्दाह से ब्राह्मण, ईशान-कोण के दिग्दाह से पाखण्डी व व्यापारी जन पीड़ित होंगे।

आकाश प्रसन्न, नक्षत्रमण्डल निर्मल, दक्षिणावर्त वायु, सुवर्ण वर्ण का दिग्दाह राजा सहित प्रजा का कल्याणकारक होता है॥८१६-८१८॥

अथ भूकम्पफलं वाराहीसंहितायाम्–

किन्त्वनिलदहनसुरपतिवारुणाः सदसत्फलावबोधार्थम्।
प्राग्द्वित्रिचतुर्भागेषु दिननिशोः कम्पयिष्यन्ति॥८१९॥

चत्वार्यार्यम्णान्यादित्यं[1] मृगशिरोऽश्वयुक्चेति।
मण्डलमेतद्वायव्यमस्य रूपाणि सप्ताहात्॥८२०॥

धूमाकुलीकृताशे नभसि नभस्वान् रजःक्षिपं भौमम्।
विरुजं द्रुमांश्च विचरति रविरप्टुकरावभासी च॥८२१॥

वायव्ये भूकम्पे सस्याम्बुवनौषधी क्षयोऽभिहितः।
श्वपथुश्वासोन्मादज्वरकासभवो वणिक्पीडा॥८२२॥

---

१. चत्वार्यार्यम्णादादित्यमिति पाठः साधुः।

रूपायुधभृःस्त्रीकविगन्धर्वपण्यशिल्पिजनाः।
पीड्यन्ते सौराष्ट्रककुरुमगधदशार्णमत्स्याश्च ॥ ८२३॥

भूकम्प के कारणों में मतभेद का विवरण –

कुछ मुनिगण के अनुसार जलान्तः (समुद्र के भीतर जल) में रहने वाले बड़े-बड़े मीन, मगर, कच्छप, झख, शिशुमार प्रभृति प्राणियों के शरीर संचालनादि से उत्पन्न जलक्षोभ (चञ्चलता) से भूकम्प होता है।

गर्गादि मुनियों के अनुसार क्षितिभार के उद्वहन से खिन्न हो थकान दूर करने के लिए विश्रामावस्था में शेषनाग के निर्गलित उच्छ्वास से उत्पन्न वायु है, जिसके वेग से भू में कम्पन आ जाता है, अन्य वशिष्ठ प्रभृति ऋषियों के अनुसार आकाश में दो वायुवों के परस्पर आघात (संघात) से उत्पन्न भूमि पर गिरता हुआ शब्दायमान अन्य वायु के आघात से भूकम्प होता है।

कुछ वृद्ध गर्गाचार्यों के अनुसार लोक के अदृष्टवश भूकम्प होता है, अर्थात् भूकम्प में लोकादृष्ट कारण है, अर्थात् यह भूकम्प में अशुभ, शुभ दोनों कारण है।

पराशरादि ऋषियों के अनुसार सपक्ष पर्वतों के भू से उड्डयन और भू पर गिरने के (उपवेशनजनित) आघात से भूकम्प होता है, जैसा कि प्राक्तन निम्न इतिवृत्त है। दुःखित होकर पृथ्वी ने देवसभा में जाकर (ब्रह्मा से) निवेदन किया कि प्रभु आप मेरा नामकरण अचला, स्थिरा किये हैं; परन्तु वह नाम सार्थक नहीं हो रहा है; क्योंकि सपक्ष पर्वतों के भू से उड़ने व पुनः भू पर आने के आघात से उत्पन्न मेरी चपलता मेरे लिए दुःखदायिनी हो गयी है और आपका नामकरण भी निरर्थक हो गया है। ब्रह्मा जी साश्रुपात नेत्र व सगद्गद येन केन प्रकारेण अपनी बात कहने वाली भू का मुख देख, इन्द्र को आदेश दिये कि इन्द्र भूमि का दुःख दूर करने के लिए वज्र से पर्वतों का पक्ष काट दो, तब इन्द्र ने भू से कहा, माँ तुम न डरो, मैं तुम्हारा

पर्वतजन्य भय निरस्त कर दूँगा; किन्तु भूकम्पजनित लोकादृष्ट सूचना तो कभी कदाचित् होती रहेगी, उसे तो सहन करना ही पड़ेगा।

यहाँ यह अनुक्त भी प्रसंगवश कहा गया है जैसा कि इन्द्र के वचनों के अनुसार भूकम्प में निम्न कारण हैं—

इन्द्र ने कहा — वायु, अग्नि, वरुण व मैं क्रमशः दिन-रात्रि (अहोरात्र) के प्रथमादि चार भागों में, लोक के अदृष्टवश तुम्हें यथासमय कम्पित करते रहेंगे, यथा दिन के प्रथम भाग में वायु, द्वितीय में अग्नि, तृतीय (रात्रि के प्रथमार्ध) में सुरपति व रात्रि के द्वितीयार्ध में वरुण कम्पित करेंगे।

विवरण — अश्विनी, पुनर्वसु, मृगशिरा, उत्तराफाल्गुनी, हस्त, चित्रा, स्वाती — ये सात नक्षत्र वायुमण्डल के हैं। इनमें होने वाला भूकम्प वायुमण्डल (वायव्य) कहा जाएगा। इसमें होने वाले भूकम्प के पूर्व सात दिनों के अन्दर भावी भूकम्प के लक्षण निम्न हैं।

(१) आकाश से भू तक चारों दिशायें धूम से व्याप्त हो जायेंगी, यह प्रथम लक्षण है।

(२) दूसरा धूलिधूसरित वृक्ष तोड़ता, उखाड़ता हुआ प्रचण्ड वायु बहना है।

(३) तीसरा सूर्य मृदु (मूर्च्छित), मन्द, किरणों का मन्द होना (तापमान घट जाना) ये लक्षण भूकम्प के पूर्व का द्योतक है।

फल — वायव्य भूकम्प होने पर शाली (धान्यविशेष), जल, वन, औषधियों का नाश हो जाता है तथा सोफ (सोथ), श्वास, उन्माद, ज्वर, कास का भय, व्यापारियों को पीड़ा होती है, वेश्या, शस्त्रोपजीवी, वैद्य, स्त्री, कवि, गायक, पण्यजीवी, शिल्पी — ये सभी पीड़ित होंगे तथा सौराष्ट्र, कुरु, मगध, दशार्ण, मत्स्य देश भी पीड़ित होंगे ॥८१९-८२३॥

पुष्याग्नेयविशाखाभरणीपित्र्याजभाग्यसंज्ञानि।
वर्गो हौतभुजोऽयं करोति रूपाण्यथैतानि॥८२४॥
तारोल्कापातावृतमादीप्तमिवाम्बरं सदिग्दाहम्।
विचरति मरुत्सहायः सप्तार्चिः सप्तदिवसान्तः॥८२५॥
आग्नेयेऽम्बुनाशः सलिलांशसंक्षयो नृपतिवैरम्।
दद्रूविचर्चिका ज्वरविसर्पिकाः पाण्डुरोगश्च॥८२६॥
दीप्तौजसः प्रचण्डाः पीड्यन्ते चाश्मकाङ्गवाह्लीकाः।
तङ्गणकलिङ्गवङ्गद्रविडाः शबराश्च नैकविधाः॥८२७॥

अग्निमण्डल दिन के दूसरे भाग में होता है–

भरणी, कृत्तिका, पुष्य, विशाखा, मघा, पूर्वाभाद्रपद– ये सात नक्षत्र आग्नेय मण्डल में आते हैं। इन नक्षत्रों में आग्नेय मण्डल का भूकम्प होता है। इनमें भूकम्प होने के पूर्व सात दिनों में होने वाले लक्षण– आकाश-मण्डल उल्कापात से व्याप्त हो जायेगा, अर्थात् निरन्तर उल्कापात होता रहेगा, दिग्दाह– दिशाओं में अग्निज्वाला प्रतीत होगी (भू से आकाश तक दिशायें प्रज्ज्वलित दिखाई देंगी), वायुप्रेरित प्रज्ज्वलित अग्नि घूमता रहेगा, अर्थात् प्रचण्ड वायु व अग्नि का प्रकोप व्यापक होगा– ये लक्षण भूकम्प से पूर्व सात दिनों के अन्दर दिखाई देगा।

इस आग्नेय भूकम्प में जल का नाश तथा वापी, कूप, तडाग सूख जायेंगे, राजाओं, नेताओं, राष्ट्रों में वैर उत्पन्न हो जाएगा, चर्मरोग, पादरोग, ज्वर, विसर्पण, व्रण (कैंसर), अङ्गविकृति, पाण्डुरोग होंगे।

तेजस्वी क्रोधी प्राणी (स्वभावतः क्रुद्ध व्याघ्रप्रभृति) पीड़ित होंगे और श्मक, अंग, वाह्लीक, तङ्गण, कलिंग, वंग, द्रविण, शबर देशवासी अनेक आपत्तियों से पीड़ित होंगे॥८२४-८२७॥

**अभिजिच्छ्रवणधनिष्ठाप्राजापत्यैन्द्रवैश्वमैत्राणि ।**

**सुरपतिमण्डलमेतद्भवन्ति चास्य स्वरूपाणि ॥८२८॥**

**चलिताचलवर्ष्माणो गम्भीरविराविणस्तडिद्वन्तः ।**

**गवलालिकुलाहिनिभा विसृजन्ति पयः पयोवाहाः ॥८२९॥**

**ऐन्द्रस्तुतकुलजातिख्यातावनिपालगणपविध्वंसि ।**

**अतिसारगलग्रहवदनरोगकृच्छर्दिकोपाय ॥८३०॥**

**काशियुगन्धरपौरवकिरातकीराभिसारहलमद्राः ।**

**अर्बुदसुराष्ट्रमालवपीडाकरमिष्टवृष्टिकरम् ॥८३१॥**

सुरपति-मण्डल –

अभिजित्, श्रवण, धनिष्ठा, रोहिणी, ज्येष्ठा, उत्तराषाढ़, अनुराधा – ये सात नक्षत्र इन्द्रमण्डल के हैं, इनमें होने वाला भूकम्प ऐन्द्र कहा जाता है, इसके होने के पूर्व सात दिनों में घटने वाली घटनाएँ निम्नलिखित हैं –

चलायमान पर्वताकार महाद्योतमाना भयंकर शब्द करती विद्युत् (बिजली), महिषशृङ्ग, भ्रमर समूहों व सर्पाकार चिह्नों से प्रतीत होने वाला मेघ घनघोर मूसलाधार वर्षता है। इसमें उत्तमकुलोत्पन्न ख्याति-प्राप्त राजागण, मण्डल प्रधान नेता प्रभृति विशिष्ट व्यक्तियों का नाश, अतिसार रोग, कण्ठरोग, मुखरोग, प्रतिस्याय (सर्दी कफ-खाँसी) का उपद्रव और काशी, युगन्धर, पौरव, किरात, कीर, अभिसार, हल, मद्र, अर्बुद (अरब), सुराष्ट्र, मालव – इन देशवासियों को पीड़ा व अभीष्ट वृष्टि होती है ॥८२८-८३१॥

**पौष्णाप्यार्द्राश्लेषामूलाहिर्बुध्न्यवरुणदेवानि ।**

**मण्डलमेतद्वारुणमस्यापि भवन्ति रूपाणि ॥८३२॥**

नीलोत्पलालिभिन्नाञ्जनत्विषो मधुरारविणो बहुलाः।

तडिदुद्भासितदेहा धाराङ्कुरवर्षिणो जलदाः॥८३३॥

वारुण मण्डल में रेवती, आर्द्रा, आश्लेषा, मूल, उत्तराषाढ़, शतभिषा, पूर्वाषाढ़, ये नक्षत्र आते हैं – इनमें भूकम्प वारुणेय कहलाता है, इसके पूर्व सात दिनों तक घटने वाली घटना या लक्षण – नीलोत्पल या भ्रमर जैसी कान्ति, बार-बार बिजली की चकाचौंध से आभासित (परिपूर्ण), मधुरविरावी, एकांगीभूत बहु अंकुरित जलधाराओं से मेघ वर्षता है ॥८३२-८३३॥

वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम्।

गोनर्दचेदिकुकुरान् किरातवैदेहकान्हन्ति॥८३४॥

वारुणेय भूकम्प फल– समुद्र व नदियों के आश्रितों की हानि, अतिवृष्टि, गोनर्द, चेदि, कुकुर, किरात; वैदेह देशवासियों की हानि होती है ॥८३४॥

षड्भिर्मासैः कम्पो द्वाभ्यां पाकं च याति निर्घातः।

अन्यानप्युत्पातान् जगुरन्ये मण्डलैरेतैः॥८३५॥

छः मास के अन्दर भूकम्प का फल होता है, निर्घात दो मास के अन्दर फल देता है, अन्य गन्धर्व, रज, निर्घात, दिग्दाह, प्रचण्ड वायु, ग्रहण, उल्कापात आदि उत्पातों का फल गर्गादि ऋषियों ने भूकम्प सदृश कहा है ॥८३५॥

उल्काहरिश्चन्द्रपुरं रजश्च निर्घातभूकम्पककुप्प्रदाहाः।

वातोऽतिचण्डो ग्रहणं रवीन्द्वोर्नक्षत्रतारागणवैकृतानि॥८३६॥

व्यभ्रे वृष्टिवैकृतं वातवृष्टिर्धूम्रोऽनग्नेर्विस्फुलिङ्गार्च्चिषो वा।

वन्यं सत्त्वं ग्राममध्ये विशेद्वा रात्रावैन्द्रं कार्मुकं दृश्यते वा॥८३७॥

सन्ध्याविकाराः परिवेषखण्डा नद्यः प्रतीपा दिवि तूर्यनादाः।
अन्यच्च यत्स्यात्प्रकृतेः प्रतीपं तन्मण्डलैरेव फलं निगद्यम् ॥ ८३८॥
हन्त्यैन्द्रो वायव्यं वायुश्चाप्यैन्द्रमेवमन्योऽन्यम्।
वारुणहौतभुजावपि वेलानक्षत्रजाः कम्पाः॥ ८३९॥
प्रथितनरेश्वरमरणव्यसनान्याग्नेयवायुमण्डलयोः।
क्षुद्भयमरणावृष्टिभिरुपताप्यन्ते जनाश्चापि॥ ८४०॥

अन्य उत्पात– बिना बादल वर्षा, प्रचण्ड वायु, धूम (बिना अग्नि), अग्नि का स्फुलिङ्ग व तूफान, वन्य प्राणियों का ग्रामप्रवेश, अकारण रात्रि में इन्द्रधनुष दीखना, सन्ध्या का विकार, परिवेषखंड, नदियों का (विपरीत गमन) बहाव या ग्राम से दूर चला जाना (विपरीत गमन), आकाश में नगारा का शब्द और अन्य जो प्राकृतिक विकार हैं, उन सब का भूकम्प के मण्डलीय नक्षत्रों के अनुसार फल होता है।

ऐन्द्र भूकम्प वायव्य मण्डल के भूकम्प फल का नाश करता है, वायव्य मण्डलोत्पन्न भूकम्प ऐन्द्रमण्डलीय भूकम्प फल का नाश करता है एवं अग्नि व वारुण अग्निमण्डल के भूकम्प का नाश करता है, अर्थात् दिन के चतुर्भाग के अनुसार श्लोक ८१९ के अनिलादि चार दिन विभागानुसार भूकम्प में कारण हैं, अतः वायुवेला में ऐन्द्रमण्डलीय नक्षत्रों में ऐन्द्र भूकम्प होता है, तो वह निष्फल एवं ऐन्द्रभूकम्प यदि वायु-मण्डलीय नक्षत्रों में हो तो निष्फल है एवं अग्नि व वारुण का विपर्यय दूसरे के फल का नाशक है। अपनी वेला में अपना मण्डलीय भूकम्प फल देता है, अतः आग्नेय मण्डल भूकम्प वायव्य वेला (निशा द्वितीय) अथवा वायव्य-मण्डलीय भूकम्प आग्नेय वेला (दिन के द्वितीय भाग) में हो तो विख्यात राजाओं की मृत्यु व दुःख होता है और जनसमुदाय क्षुद्भय, मरण, अवर्षण से उत्पीड़ित होगा। भिन्न वेला व भिन्न नक्षत्रों में भी एक-सा फल समझें॥८३६-८४०॥

वारुणपौरन्दरयोः सुभिक्षशिववृष्टिहार्दयो लोके।
गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः॥८४१॥
पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात्।
सद्यः फलति च वरुणो येषु न कालोऽद्भुतेषूक्तः॥८४२॥
चलयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम्।
सलिलपतिरशीतिसंयुतं कुलिशधरोऽभ्यधिकं च षष्टिकम्॥८४३॥
त्रिचतुर्थसप्तमदिने मासे पक्षे तथा त्रिपक्षे च।
यदि भवति भूमिकम्पः प्रधाननृपनाशनो भवति॥८४४॥

॥ इति मिश्रके भूमिकम्पः॥

वारुण, ऐन्द्र भूकम्प एक-दूसरे के मण्डलीय नक्षत्रों में कल्याणकारी होते हैं, सुभिक्षकारक वृष्टि, जनसमूहों में प्रसन्नता, गायों में दूध की बहुलता, राजगण में परस्पर वैर का त्याग करा देते हैं।

जिन उत्पातों में समय का निर्देश नहीं है (देहस्पन्दनादि), यदि वे उत्पात वायव्य मण्डल में होते हैं, तो चार पक्ष दो मासों में उनका फल होता है एवं वे उत्पात आग्नेय मण्डल में हुए हों, तो तीन पक्ष डेढ़ मास तथा ऐन्द्र मण्डल में सात दिन के अन्दर फल होता है।

मण्डल के अनुसार फल के परिपाक की सीमा–

वायुमण्डल का भूकम्प दो सौ योजन, अग्नि-मण्डल का भूकम्प ११० योजन, वरुणमण्डलीय भूकम्प १८० योजन व इन्द्रमण्डल भूकम्प १६० योजन भूभाग को प्रभावित करता है।

एक भूकम्प होने के सन्निकट यदि दूसरा भूकम्प होता है, तो जैसे प्रथम भूकम्प से दूसरा ३।४।७ दिन, ३० दिन, १५ दिन या ४५ दिन के अंदर होता है, तो प्रधान राजाओं का नाश होता है॥८४१-८४४॥

अथोल्काफलं वाराहीसंहितायाम् –

**दिवि भुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः।**

**धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्नाः॥८४५॥**

उल्का-स्वरूप –

स्वर्ग में शुभ फलभोग निवृत्ति के बाद पतन का स्वरूप उल्कापात है। नक्षत्र, वज्र, विद्युत् व ताराओं के परस्पर संघर्षजनित प्रकाश-समूह का पतन – ये उल्कापात के पाँच लक्षण हैं। गर्गादि ऋषियों के अनुसार लोकपाल संसार के शुभाशुभ फल सूचनार्थ जो शस्त्र चलाते हैं, उसका स्वरूप है – उल्कापात ॥८४५॥

**उल्का पक्षेण फलं तद्वद्धिष्ण्याशनिस्त्रिभिः पक्षैः।**

**विद्युदहोभिः षड्भिस्तद्वत्तारा विपाचयति॥८४६॥**

उल्काफलकालनियम –

उल्का एक पक्ष, नक्षत्रोत्पात एक पक्ष, वज्र तीन पक्ष, विद्युत् ६ दिनों और तारा ६ दिनों में अपने फलों का परिपाक करते हैं ॥८४६॥

**ताराफलपादकफलार्द्धदात्री प्रकीर्त्तिता धिष्ण्या।**

**तिस्रः सम्पूर्णफला विद्युदथोल्काशनिश्चेति॥८४७॥**

तारा चतुर्थांश, धिष्ण्या अर्ध, विद्युत्, उल्का व अशनि (वज्र) पूर्ण फल देते हैं ॥८४७॥

**अशनिः स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु।**

**निपतति विदारयन्ती धरातलं चक्रसंस्थाना॥८४८॥**

अशनिलक्षण –

अशनि घोर भयंकर उच्च स्वर में शब्द करता चक्राकार घूमता मनुष्य, हाथी, घोड़ा, मृग, पाषाण, गृह, वृक्ष व पशुवों के ऊपर गिरता है तथा चक्रवात के रूप में भूतल का विदारण करता हुआ पृथ्वी पर गिरता है॥८४८॥

**विद्युत्सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा।**

**कुटिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता॥८४९॥**

विद्युत् प्राणी को भय उत्पन्न करती, तड़ाक-तड़ाक अव्यक्त शब्द करती, कुटिल, विशाल बड़े आकार में प्राणी व इन्धन समूह (लकड़ी) पर एकटक जलती हुई बड़े वेग से गिरती है॥८४९॥

**धिष्ण्यकृशाल्पपुच्छा धनूंषि दश दृश्यतेऽन्तराभ्यधिकम्।**

**ज्वलिताङ्गारनिकाशा द्वौ हस्तौ सा प्रमाणेन॥८५०॥**

धिष्ण्या दुर्बल (पतली), छोटी पुच्छवाली अपने स्थान से ४० हाथ तक प्रकाशित (जलती हुई) दिखाई देती है॥८५०॥

**ताराहस्तं दीर्घा शुक्ला ताम्राब्जतन्तुरूपा वा।**

**तिर्यगधश्चोर्ध्वं वा याति वियत्युह्यमानेव॥८५१॥**

तारा एक हाथ लम्बी, श्वेत, लोहित वर्ण, ताँबा व लाल कमल के सूत्र की आभा से भासित, अतिसूक्ष्म आकर्षित जैसा नीचे-ऊपर होती हुई तिर्य्क् लम्बवत् गिरती है॥८५१॥

**उल्का शिरसि विशाला निपतन्ती वर्द्धते प्रतनुपुच्छा।**

**दीर्घा भवति च पुरुषं भेदा बहवो भवन्त्यस्याः॥८५२॥**

उल्का शिर से लम्बी, पुच्छ, तनु पतली-सी बढ़ती हुई ३ हाथ बारह अंगुल के बराबर दिखती है व इसके अनेक भेद होते हैं॥८५२॥

**प्रेतप्रहरणखरकरभनक्रकपिदंष्ट्रिलाङ्गलमृगाभाः।**

**गोधाहिधूमरूपाः पापा या चोभयशिरस्का॥८५३॥**

उल्का शव, खड्ग, गर्दभ, उष्ट्र, नक्र, वानर, वाराहादि, हल, मृग, गोधा, सर्प, धूम व दो शिर के आकार की होती है। ये सभी प्रकार की उल्का शुभफलदायिनी नहीं है॥८५३॥

**ध्वजझषकरिगिरिकमलेन्दुतुरगसन्तप्तरजतहंसाभाः।**

**श्रीवत्सवज्रशंखस्वस्तिकरूपाः शिवसुभिक्षाः॥८५४॥**

ध्वज, मीन, पर्वत, हाथी, कमल, चन्द्र, अश्व, गलित चाँदी, हंस, श्रीवृक्ष, स्वस्तिक, वज्र, शंख– इस प्रकार की उल्का शुभ है, सुभिक्षकारिणी है॥८५४॥

**अम्बरमध्याद्बह्व्यो निपतन्त्यो राजराष्ट्रनाशाय।**

**बम्भ्रमती गगनोपरि विभ्रममाख्याति लोकस्य॥८५५॥**

आकाश से गिरने वाली अनेक ताराएँ नृप, राष्ट्र व जनपद के लिए नाशक तथा आकाश में भ्रमण करने वाली उल्का लोक में व्याकुलता उत्पन्न करती है॥८५५॥

**संस्पृशती चन्द्रार्कौ तद्विनिःसृता वा सभूप्रकम्पा च।**

**परचक्रागमनृपवधदुर्भिक्षावृष्टिभयजननी॥८५६॥**

जो उल्का सूर्य-चन्द्रमा को स्पर्श करके अथवा उनसे उत्पन्न अतिप्रकाशमान् होकर गिरती है, वह भूकम्प, परचक्रागम, राजभय, दुर्भिक्ष व अवर्षण तथा भय उत्पन्न करती है॥८५६॥

**पौरेतरघ्नमुल्कापसव्यकरणं दिवाकरहिमांश्वोः।**

**उल्का शुभदा पुरतो दिवाकरविनिःसृता यातुः॥८५७॥**

सूर्य से उत्पन्न उल्का सूर्य के दक्षिण भाग से होकर यायी के सम्मुख गिरती है, तो नगरवासी नृप या नगरनिवासियों का नाश व यायी के लिए शुभ है और चन्द्र से निःसृत व चन्द्रमा के दक्षिण भाग से गिरती है, तो यायी राजा का नाश करती है॥८५७॥

**शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी।**

**क्रमशश्चैतान्हन्युर्मूर्ध्नोरः पार्श्वपुच्छस्थाः॥८५८॥**

श्वेत, रक्त, पीत, कृष्ण उल्का क्रमशः ब्राह्मण, क्षत्रिय, वैश्य, शूद्रों की नाशकारिणी होती है, जैसे श्वेत व शिर से गिरने वाली

उल्का ब्राह्मण, रक्त व उर से क्षत्रिय, पीत व पार्श्व से गिरने वाली वैश्य, कृष्ण व पुच्छाभिमुख गिरने वाली उल्का शूद्रों की नाशकारिणी होती है ॥८५८॥

**उत्तरदिगादिपतिता विप्रादीनामनिष्टदा रुक्षा।**
**ऋज्वी स्निग्धा खण्डा नीचोपगता च तद्वृद्ध्यै ॥८५९॥**

कान्तिरहित उत्तरादि दिशाओं में गिरने वाली उल्का ब्राह्मणादि चार वर्णों के लिए हानिकारिणी होती है। उत्तर में ब्राह्मण, पूर्व में क्षत्रिय, दक्षिण में वैश्य, पश्चिम में शूद्रों के लिए अनिष्टकारिणी है। उक्त स्पष्ट वर्ण की उल्का सरल, खण्डरहित, उत्तरोत्तर निम्नाभिमुख गिरती है, तो दिशा-क्रम से ब्राह्मणादिकों के लिए शुभ है ॥८५९॥

**श्यावारुणनीलासृग्दहनासितभस्मनिभा रुक्षा।**
**सन्ध्यादिनजा वक्रा दलिता च परागमभयाय ॥८६०॥**

श्याम (श्वेत-रक्त), रक्त, नील, रुधिर, अग्नि, कृष्ण, भस्म जैसी मलिन, सन्ध्या व दिन में उत्पन्न वक्रा, खण्डिता उल्का परागम (शत्रुभयकारिणी) है ॥८६०॥

**नक्षत्रग्रहघातैस्तद्भक्तीनां क्षयाय निर्दिष्टा।**
**उदये घ्नती रवीन्दू पौरेतरमृत्यवेऽस्ते वा ॥८६१॥**

नक्षत्र-ग्रहघात –

नक्षत्र व ग्रहों का उपघात करती उल्का गिरती है तो उस नक्षत्र व ग्रह सम्बन्धी व्यक्तियों, देश, ग्रामों का नाश होता है एवं उदय, अस्त के समय उल्का सूर्य का उपघात करती है, तो नगर, नरपति तथा चन्द्रमा का उपघात करती है, तो यायी नरपति का नाश होता है ॥८६१॥

**भाग्यादित्यधनिष्ठामूलेषूल्काहतेषु युवतीनाम्।**
**विप्रक्षत्रियपीडा पुष्यानिलविष्णुदेवेषु ॥८६२॥**

करें अथवा गाय के स्तन का पान श्वान करे, तो निश्चय तीन मास में परचक्रागम (शत्रु का आक्रमण) होता है, इसकी शान्ति वक्ष्यमाण गर्गोक्त विधि से करनी चाहिए ॥१०२९-१०३०॥

अथ गर्गोक्तशान्तिः –

**त्यागो विवासनं दानं तत्तस्याशु शुभं भवेत्।**
**तर्पयेद् ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् ॥१०३१॥**
**स्थालीपाकेन धातारं पशुना च पुरोहितः।**
**प्राजापत्येन मन्त्रेण यजेद्बह्वन्नदक्षिणम् ॥१०३२॥**

**॥ इति मिश्रके चतुष्पदवैकृतम् ॥**

शान्ति –

पशुओं की विकृति में उनका त्याग अथवा दान देना हितकर होता है, इस उत्पात में ब्राह्मणों से तर्पण, पूजन, हवन तथा जप कराना चाहिए। पुरोहित को स्थालीपाक से चरु (खीर) की आहुति व छागादि प्रभूत अन्न तथा दक्षिणा देकर प्राजापत्य मन्त्रों से यज्ञ करना चाहिए ॥१०३१-१०३२॥

अथ वायव्यवैकृतं तत्रैव –

**यानं वाहवियुक्तं यदि गच्छन्न व्रजेच्च वाहयुतम्।**
**राष्ट्रभयं भवति तदा चक्राणां सादभङ्गे च ॥१०३३॥**
**अनभिहततूर्यनादः शब्दो वा ताडितेषु यदि न स्यात्।**
**व्युत्पत्तौ वा तेषां परागमो नृपतिमरणं वा ॥१०३४॥**
**गीतरवतूर्यनादा नभसि यदा वा चरस्थिरान्यत्वम्।**
**मृत्युस्तदा गदा वा विस्वरतूर्ये पराभिभवः ॥१०३५॥**
**गोलाङ्गलयोः सङ्गे दर्वीशूर्पाद्युपस्करविकारे।**
**क्रोष्टुकनादे च तथा शस्त्रभयं मुनिवचश्चेदम् ॥१०३६॥**

वायव्य-वैकृत –

अश्वादि वाहन का पुरुष (वाहक) के विना चलना व वाहक से न चलना, राष्ट्र के लिए अमंगलसूचक है तथा रथ के चक्र का आरा (धुरा) का टूट जाना, फट जाना राष्ट्र के लिए भयकारक है।

आकाश में गीत व वाद्य (बाजा) का शब्द सुनाई देना अथवा अस्थिर चल शकटादि की स्थिरता व स्थिर वृक्षों का चलना मरण व रोगकारक है, यदि वाद्यों को बजाने से विपरीत ध्वनि हो तो पराजयसूचक है।

वाद्य को बजाने पर शब्द न निकलना व विना बजाए ध्वनि होना अथवा वाद्यों का अनेक शब्द होना परचक्रागम (शत्रु के आक्रमण) की सूचना है।

अपने आप वृषभ हल से जुट जाय (मिल जाय), करछुल, सूप आदि गृहोपकरण में विकृति, प्रहसन, रोदन, गान, शृगालवत् शब्द होना शस्त्रभयसूचक है ॥१०३३-१०३६॥

**वायव्येष्टेषु नृपतिर्वायुं सक्तुभिरर्चयेत्।**

**आवयोरिति पञ्चर्च्चो जाप्याश्च प्रयतैर्द्विजैः॥१०३७॥**

**ब्राह्मणान् परमान्नेन दक्षिणाभिश्च तर्पयेत्।**

**बह्वन्नदक्षिणा होमाः कर्त्तव्याश्च प्रयत्नतः॥१०३८॥**

**॥ इति मिश्रके वायव्यवैकृतम् ॥**

इन उत्पातों की शान्ति हेतु राजा सक्तु (सत्तू) से वायु का तर्पण करें, प्रशस्त कुशल ब्राह्मणों से आवयोरित्यादि पाँच ऋचाओं का जप करावें, पायस व दक्षिणा से ब्राह्मणों को तृप्त करें तथा प्रभूत अन्न, दक्षिणा व हवन कराने से शान्ति होती है ॥१०३७-१०३८॥

अथ मृगपक्ष्यादिवैकृतम् –

**पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति पुरम्।**

**नक्तं वा दिवसचराः क्षपाचरा वा चरन्त्यहनि ॥१०३९॥**

मृगपक्ष्यादि-वैकृत –

पुर, ग्राम की पक्षियाँ अरण्य में तथा वनचारी वनपक्षी निर्भय होकर ग्राम में प्रवेश करें, दिनचर काकादि पक्षी रात्रि व रात्रिपक्षी कौशिक (उल्लू-चमगादर प्रभृति) दिन में विचरण करें, तो ग्राम के लिए अमङ्गलसूचक है ॥१०३९॥

**सन्ध्याद्वयेऽपि मण्डलमाबध्नन्तो मृगा विहङ्गा वा।**
**दीप्तायां दिश्यथवा क्रोशन्तः संहता भयदाः ॥१०४०॥**

दोनों सन्ध्या में मृग व पक्षी चक्राकार परिधि के रूप में सामूहिक सूर्याभिमुख क्रूर शब्द करें तो भयोत्पत्ति की सूचना है ॥१०४०॥

**श्वानाः[1] प्ररुदन्त इव द्वारे वाशन्ति जम्बुका दीप्ताः।**
**प्रविशेन्नरेन्द्रभवने कपोतकः कौशिको यदि वा।१०४१॥**

द्वार पर श्वान क्रूर रोदन व सूर्याभिमुख शृगाल क्रूर भयावह शब्द करें या राजगृह में कबूतर व उलूक प्रवेश करें, तो ग्राम व राजा के लिए अनिष्टकारक हैं ॥१०४१॥

**कुक्कुटरुतं प्रदोषे हेमन्तादौ च कोकिलालापाः।**
**प्रतिलोममण्डलचराः श्येनाद्याश्चाम्बरे भयदाः ॥१०४२॥**

सायंकाल मुर्गा, हेमन्त ऋतु के प्रारम्भ में कोयल शब्द करे तथा श्येन, काकादि मांसभक्षी पक्षीगण वामावर्त मण्डल बनाकर आकाश में घूमते हों तो भयकारक होते हैं ॥१०४२॥

**गृहचैत्यतोरणेषु द्वारेषु च पक्षिसङ्घसम्पाताः।**
**मधुवल्मीकाम्भोरुहसमुद्भवाश्चापि नाशाय ॥१०४३॥**

गृह, ग्राम, प्रधान वृक्ष, परिखा, द्वार पर सामूहिक पक्षी आ जायँ (एकत्रित हो जाँय), उन्हीं स्थानों में मधुमक्खियाँ छाता (निवास) बना लें या वल्मीक मिट्टियों का स्तूप (ढेर) खड़ा कर दें तो ये सभी नाश के सूचक हैं ॥१०४३॥

---

१. 'श्येना' इत्यपि पाठः क्वचित् प्राप्यते। श्येनः = पक्षिविशेषः।

श्वभिरस्थिशवावयवप्रवेशनं मन्दिरेषु मरकाय।
पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम् ॥१०४४॥

श्वान अस्थि लेकर घर में प्रवेश करे तो मृत्यु का भय है, पशु व शस्त्र जैसा शब्द करते प्रतीत हों तो राजा की मृत्यु का भय है ॥१०४४॥

मृगपक्षिविकारेषु कुर्याद्धीमान् सदक्षिणान्।
देवाः कपोत इति च जप्तव्याः पञ्चभिर्द्विजैः॥१०४५॥
सुदेवा इति चैकेन देया गावश्च दक्षिणाः।
जपेच्छाकुनसूक्तं वा मनोवेदशिरांसि च ॥१०४६॥

॥ इति मिश्रके मृगपक्ष्यादिवैकृतम् ॥

इन मृगपक्षियों के उत्पात में दक्षिणा के साथ होम व पाँच ब्राह्मणों से 'देवाः कपोत' इत्यादि मन्त्रों का जप कराना चाहिए। और 'सुदेव' इस पद से युक्त मन्त्र का जाप एक ब्राह्मण करे तथा ब्राह्मणों को सदक्षिणा गो देना व शाकुन सूक्त का पाठ या मनोमन्त्र का जप, अथवा 'वेदशिरांस्यथर्वशिरः' प्रभृति ऋचाओं के जप से शान्ति होती है ॥१०४५-१०४६॥

अथेन्द्रध्वजवैकृतम् –

शक्रध्वजेन्द्रकीलस्तम्भद्वारप्रपातभङ्गेषु।
तद्वत्कपाटतोरणकेतूनां नरपतेर्मरणम् ॥१०४७॥

इन्द्रध्वज-वैकृत –

इन्द्रध्वज (राजद्वार का राजचिह्नाङ्कित विशेष ध्वज), द्वार के ऊपर का आधार काष्ठ, ऊपर का बाजू, स्तम्भद्वार, कपाट, तोरण, ध्वज का टूटना, गिर जाना राजा की मृत्यु की सूचना है ॥१०४७॥

**सन्ध्याद्वयस्य दीप्तिर्धूमोत्पत्तिश्च काननेऽनग्नौ।**

**छिद्राभावे भूमेर्दरणं कम्पश्च भयकारी॥१०४८॥**

दोनों सन्ध्या के समय सूर्य की दीप्ति, वन में अग्नि के विना धूमोत्पत्ति, समभूमि में दरार (स्फोटन), भूकम्प, ये सब भय के सूचक हैं ॥१०४८॥

**पाखण्डानां नास्तिकानां च भक्तः साध्वाचारप्रोज्झितः क्रोधशीलः।**

**ईर्ष्युः क्रूरो विग्रहासक्तचेता यस्मिन्राजा तस्य देशस्य नाशः॥१०४९॥**

जिस देश में पाखण्डी नास्तिकों (वेदविरुद्ध आचरण करने वाले), धूर्तों, साधु-सन्त विद्वानों के आचरण के विरुद्ध आचार करने वालों, क्रोधी, ईर्ष्यालु, विग्रहासक्त (सर्वदा विवाद करने वाले), विवादप्रियों का समादर हो, उस देश का नाश हो जाता है ॥१०४९॥

**प्रहरहरछिन्धिभिन्धीत्यायुधकाष्ठाश्मपाणयो बालाः।**

**निगदन्तः प्रहरन्ते तत्रापि भयं भवत्याशु॥१०५०॥**

जिस देश में बालक कृत्रिम शस्त्र, लगुड़, लोष्ठ, पाषाणखण्ड व हाथ से मारो-काटो-छीनो इस प्रकार शब्द करते हुए एक-दूसरे को परस्पर मारते हों तो शीघ्र भय उत्पन्न होने वाला है ॥१०५०॥

**अङ्गारगैरिकाद्यैर्विकृतप्रेताभिलेखनं यस्मिन्।**

**नायकचित्रितमथवा क्षये क्षयं याति न चिरेण॥१०५१॥**

जिस गृह की भित्ति पर कोयला, गेरु या अन्य नील, पीत आदि रंगों से विकृत वस्तुओं, मृत पुरुषों, प्रेतों की आकृति अंकित की जाय अथवा चित्र-विचित्र कोयला आदि से गृहस्वामी की आकृति का उल्लेख किया जाय, तो उस गृह का शीघ्र नाश होता है ॥१०५१॥

**लूतापटाङ्गशबलं न सन्ध्ययोः पूजितं कलहयुक्तम्।**

**नित्योच्छिष्टस्त्रीकं च यद्गृहं तत्क्षयं याति॥१०५२॥**

जो घर मकरी के जाले से व्याप्त है, जिस घर में दोनों सन्ध्या में पूजन-पाठ के अतिरिक्त नित्य कलह होता हो व जिस घर में स्त्रियाँ सर्वदा उच्छिष्ट हों, उस गृह का शीघ्र नाश होता है ॥१०५२॥

**दृष्टेषु यातुधानेषु निर्दिशेन्मरकमाशु सम्प्राप्तम्।**
**प्रतिघातायैतेषां गर्गः शान्तिं चकारेमाम् ॥१०५३॥**

जिस घर में प्रत्यक्ष भूत-प्रेतों की आकृति दिखाई दे, उस घर में शीघ्र मृत्यु होती है, इन उत्पातों की शान्ति अग्रिम श्लोक में प्रतिपादित है ॥१०५३॥

**महाशान्तयेऽथ वलयो भोज्यानि सुमहान्ति च।**
**कारयेद् महेन्द्रं च माहेन्द्रीभिः समर्चयेत् ॥१०५४॥**

**॥ इति शक्रध्वजेन्द्रकीलादिवैकृतम् ॥**

उपर्युक्त उत्पातों की शान्ति हेतु गृह में प्रभूत उपहार-वितरण व भोज्य दिया जाय व इन्द्र, इन्द्राणी की पूजा की जाय ॥१०५४॥

अथ नानाविधवैकृतदोषाभावमाह वराहः –

**नरपतिदेशविनाशे केतोरुदयेऽथवा ग्रहेऽर्केन्द्वोः।**
**उत्पातानां प्रभवः स्वर्त्तुभवश्चाप्यदोषाय ॥१०५५॥**

नानाविध दोषाभाव –

राजा या देश के विनाश, केतु के उदय, सूर्य-चन्द्र के ग्रहण के समय या ऋतुसम्बन्धी यदि कोई उत्पात होता है, तो वह अप्रभावित है, अर्थात् उसका कोई दुष्परिणाम नहीं है ॥१०५५॥

**ये च न दोषान् जनयन्त्युत्पातास्तानृतुस्वभावकृतान्।**
**ऋषिपुत्रकृतैः श्लोकैर्विद्यादेतैस्समासोक्तैः ॥१०५६॥**

जो ऋतु से सम्बन्धित उत्पात है, उसका दुष्परिणाम नहीं होता, इसका प्रतिपादन आचार्य ऋषिपुत्र ने किया है, उसे समझना चाहिए ।।१०५६।।

**वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः।**

**परिवेषरजोधूमरक्तार्कास्तमनोदयाः ॥१०५७॥**

**द्रुमेभ्योऽन्नरसस्नेहबहुपुष्पफलोद्गमाः।**

**गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥१०५८॥**

ऋतुओं में होने वाले स्वाभाविक उत्पात –

वज्र, विद्युत्, उपलवृष्टि, उल्कापतन, भूकम्प, प्रदीप्त सन्ध्या, निर्घात शब्द, परिवेश, धूलिसमूह, कानन में धूम, दोनों सन्ध्या में सूर्य का लोहित वर्ण होने से वृक्षों से अन्न, रस, तेल, बहु-पुष्प, बहुफल की उत्पत्ति होती है तथा गो, पक्षियों की मद-वृद्धि, चैत्र-वैशाख में कल्याणकारी होते हैं ।।१०५७-१०५८।।

**तारोल्कापातकलुषं कपिलाकेन्दुमण्डलम्।**

**अनग्निज्वलनस्फोटधूमरेण्वनिलाहतम् ॥१०५९॥**

**रक्तपद्मारुणं सान्ध्यं नभः क्षुब्धार्णवोपमम्।**

**सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥१०६०॥**

ग्रीष्म ऋतु – ज्येष्ठ-आषाढ़ में निरन्तर उल्कापात से आकाश की विकृति, सूर्य-चन्द्र का श्वेत-पीत बिम्ब, विना अग्नि की ज्वाला, अग्निस्फोट (अग्नि का शब्द), धूम, धूलि व वायु से विकृत आकाश, लोहित कमल की कान्ति जैसी कान्ति की सन्ध्या, लहरों से क्षुब्ध समुद्र जैसा क्षुब्ध आकाश, नदियों में जल का अभाव आदि शुभ होते हैं ।।१०५९-१०६०।।

**शक्रायुधपरीवेषविद्युच्छुष्कविरोहणम्।**

**कम्पोद्वर्त्तनवैकृत्यं रसनं दरणं क्षितेः॥१०६१॥**

**सरोनद्युदपानानां वृद्ध्यूर्ध्वतरणप्लवाः।**

**सरणं चाद्रिगेहानां वर्षासु न भयावहम्॥१०६२॥**

वर्षा ऋतु – श्रावण, भाद्रपद में इन्द्रधनुष, परिवेष विद्युत्, शुष्क वृक्ष का विरोहण, भूकम्प, भूपरिवर्तन (दूषित कम्पन), वस्तु वैकृत, भूमि से जलस्राव, स्फोटन, सरोवर, नदियों के जल के ऊपर बुद्बुदाकर फेन, रस की वृद्धि, नदियों का ऊर्ध्वगमन, वापी, कूपादि का जलप्लव, पर्वत व गेह का पतन आदि ऋतुज दोष होने से प्रभावी नहीं होते हैं॥१०६१-१०६२॥

**दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम्।**

**ग्रहनक्षत्रताराणां दर्शनं च दिवाम्बरे॥१०६३॥**

**गीतवादित्रनिर्घोषा वनपर्वतसानुषु।**

**सस्यवृद्धिरपांहानिरपापाः शरदि स्मृताः॥१०६४॥**

शरद् ऋतु – आश्विन-कार्तिक में देवस्त्री, गन्धर्व (देवयोनि) के आकाश में आश्चर्यजनक विमानों का दर्शन, दिन में ग्रह-ताराओं का दर्शन, वन-पर्वतों के शिखरों पर गीत-वाद्य का श्रवण, सस्यवृद्धि, जल का ह्रास, यह शरद् ऋतु सम्बन्धी स्वाभाविक ऋतुज उत्पात होने से शुभ हैं॥१०६३-१०६४॥

**शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम्।**

**रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी॥१०६५॥**

**दिशो धूमान्धकाराश्च सनभोवनपर्वताः।**

**उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः॥१०६६॥**

हेमन्त ऋतु सम्बन्धी उत्पात जो अपनी ऋतु में शुभ हैं–

शीत वायु का चलन, हिमपात, मृग-पक्षियों का निनाद, राक्षस, यक्ष, भूत-प्रेत प्रभृति अदृश्य प्राणियों का दर्शन, अमानुषी वाणी का श्रवण, आकाश, दिशा, वन, पर्वत, सूर्य का उदयास्त व उच्चस्थान, धूमवत् प्रतीत होने वाले हिमपातों से आच्छादित होने से अदृश्य हो जाना, ये हेमन्त के उत्पात हैं ॥१०६५-१०६६॥

**हिमपातानिलोत्पाता विरूपाद्भुतदर्शनम् ।**
**कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥१०६७॥**
**चित्रगर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिषु ।**
**पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः ॥१०६८॥**

शिशिर ऋतु के स्वाभाविक उत्पात –

तुषारपात (हिमपात), उग्रवायु, भीषण वायु, अद्भुत प्राणियों का दर्शन (दिव्य पुरुष-दर्शन), तारा व उल्कापात से चित्रित आकाश-मण्डल, गो, अजा, अश्विनी (घोड़ी), मृगी, मादा पक्षी इनमें अद्भुत गर्भधारण, गो, अश्व, मृग व पक्षियों के स्वभाव में परिवर्तन, पत्र-अङ्कुर-लताओं में विकृति, ये उत्पात हैं, जो शिशिर ऋतु में अशुभ फल नहीं देते हैं ॥१०६७-१०६८॥

**ऋतुस्वभावजा ह्येते दृष्टाः स्वर्त्तौ शुभप्रदाः ।**
**ऋतोरन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः ॥१०६९॥**

विशेष– ऋतुओं में स्वभावोत्पन्न (१०५७-१०६८ श्लोकों में विहित) उत्पात (अपनी-अपनी ऋतुओं में) शुभ, अन्यत्र दुष्ट व अतिदारुण भयोत्पादक हो जाते हैं ॥१०६९॥

**उन्मत्तानां च या गाथा शिशूनां भाषितं च यत् ।**
**स्त्रियो यश्च प्रभाषन्ते तस्य नास्ति व्यतिक्रमः ॥१०७०॥**

उन्मत्त प्राणी (विचित्र अद्भुत) की गाथा, बालकों व स्त्रियों का कथन मिथ्या नहीं होता है, सर्वदा घटित होना सम्भव है, जिस कारण से बाल-भाषण, स्त्री-कथन, उन्मत्त गाथा सत्य होती है, वह निम्न है ॥१०७०॥

**पूर्वं चरति देवेषु पश्चाद्गच्छति मानुषान्।**

**नाचोदिता वाग्वदति सत्या ह्येषा सरस्वती ॥१०७१॥**

पूर्व (पूर्वकाल) में सरस्वती देवताओं में देवलोक का विचरण करती है, पुनः देवप्रेरित हो मानवों में विचरण करती है, अतः स्वभावतः बालक व स्त्री का भाषण, सरस्वतीप्रयुक्त होने से मिथ्या नहीं होता ॥१०७१॥

**उत्पातान् गणितविवर्जितोऽपि बुध्वा विख्यातो भवति नरेन्द्रवल्लभश्च।**

**एतत्तन्मुनिवचनं रहस्यमुक्तं यज्ज्ञात्वा भवति नरस्त्रिकालदर्शी ॥१०७२॥**

**॥ इति वाराहीसंहितोक्तोत्पातास्समाप्ताः ॥**

ग्रह-गणितरहित, जिसको गणित से नहीं जाना जा सकता, उन शाकुनिक उत्पातों का ज्ञान कर भविष्यवक्ता प्राणी राजप्रिय हो सकता है, यह परम रहस्य मुनियों की वाणीरूप है, जिसके ज्ञान से पुरुष त्रिकाल (दर्शन) का ज्ञाता हो जाता है ॥१०७२॥

अथैतेषां फलपाकसमयमाह वराहः –

**पक्षाद्भानोः सोमस्य मासिकोऽङ्गारकस्य वक्रोक्तः।**

**आदर्शनाच्च पाको बुधस्य जीवस्य वर्षेण ॥१०७३॥**

**षड्भिः सितस्य मासैरब्देन शनेः सुरद्विषोऽर्द्धाब्दात्।**

**वर्षात्सूर्यग्रहणे सद्यः स्यात्त्वाष्ट्रकीलकयोः ॥१०७४॥**

**त्रिभिरेव धूमकेतोर्मासैः श्वेतस्य सप्तरात्रान्ते।**

**सप्ताहात्परिवेषेन्द्रचापसन्ध्याभ्रसूचीनाम् ॥१०७५॥**

यद्यपि उत्पातों के वर्णन में फल के परिपाक का भी समय निर्दिष्ट है, तब भी विशेष रूप से उत्पात के परिपाक का समय दिया जा रहा है। ग्रहचार-प्रकरण में सूर्य का शुभाशुभ फल एक पक्ष (१५ दिन) में होता है, चन्द्रमा का एक मास, भौम का चाराध्याय में वक्रोक्त नक्षत्र के समय के अनुसार परिपाक होता है, उदय के बाद जिस नक्षत्र में मंगल वक्री होते हैं, वही वक्रोक्त नक्षत्र है।

बुध के फल का पारिपाक उदय के बाद, अंस्तकाल के पूर्व तक निरन्तर होता है। गुरु का एक वर्ष, शुक्र का ६ मासों में, शनि का एक वर्ष, राहु का चन्द्रग्रहण में ६ मास, सूर्यग्रहण में एक वर्ष में, पर्व (ग्रहण) के विना त्वष्टा, तामस, कीलकों का शीघ्र फल होता है।

धूमकेतु का तीन मास, श्वेतकेतु का सात दिन, परिवेष, इन्द्रधनुष, सन्ध्या, अभ्रसूची (मेघोत्पात) इनके फल का परिपाक सात दिनों में होता है ॥१०७३-१०७५॥

**शीतोष्णविपर्य्यासः फलपुष्पमकालजं दिशां दाहः।**

**स्थिरचर्योरन्यत्वं प्रसूतिविकृतिश्च षण्मासात् ॥१०७६॥**

ऋतुओं का शीतोष्ण विपर्यय, अकालज फल-पुष्प, दिग्दाह, स्थिर चरविपर्यय, प्रसूति-विकृति का फल ६ मासों में होता है ॥१०७६॥

**अक्रियमाणककरणं भूकम्पोऽनुत्सवो दुरिष्टं च।**

**शोषश्चाशोष्याणां स्रोतोऽन्यत्वं च वर्षार्द्धात् ॥१०७७॥**

अक्रियमाण करना या कार्य नहीं करना हो, उसके करने में अथवा जो कार्य कभी न किया हो अकस्मात् उसे करना पड़ जाय, उस कार्य का फल, भूकम्प, अनुत्सव (प्राप्त उत्सव का न करना), अनभिमत अरिष्ट, सरःशोष, नदियों का विपरीत गमन, सर में जलाधिक्य प्रभृति का फल ६ मासों में होता है ॥१०७७॥

**स्तम्भकुसुलार्चानां जल्पितरुदितप्रकम्पितस्वेदाः।**

**मासत्रयेण कलहेन्द्रचापनिर्घातपाकाश्च ॥१०७८॥**

स्तम्भ, कुसुल (अन्न सुरक्षित रखने वाला पात्र – डेहरी), प्रतिमा का जल्पन, कथन, रोदन, कम्पन, स्वेद का फल तीन मास में, अकारण गृहकलह, इन्द्रधनुष, निर्घात, इनका पाक तीन मासों में होता है (इन्द्रचाप का परिपाक सात दिन में कहा जाता है, यदि सात दिन में न हो तो तीन मास में होगा) ॥१०७८॥

**कीलाखुमक्षिकोरगबाहुल्यं मृगविहङ्गमरुतं च।**

**लोष्टस्य चाप्सु तरणं त्रिभिरेव विपच्यते मासैः॥१०७९॥**

कीट, मूषक, मक्खी, उरग (सर्प), मृग, पक्षी, रुदन व लोष्ठ (कङ्कण) का जल में तैरना, इनका फल तीन मास में होता है ॥१०७९॥

**प्रसवः शुनामरण्ये वन्यानां ग्रामसंप्रवेशश्च।**

**मधुनिलयतोरणेन्द्रध्वजाश्च वर्षात्समधिकाद्वा ॥१०८०॥**

श्वान के निर्जन स्थान में प्रसव का फल, वन्य प्राणी के ग्रामप्रवेश, मधुमक्खी के निवास, तोरण, इन्द्रयष्टि, इनका परिपाक एक वर्ष में होता है ॥१०८०॥

**गोमायुगृध्रसङ्घा दशाहिकाः सद्य एव तूर्यरवः।**

**आक्रुष्टं पक्षफलं वल्मीको विदारणं च भुवः॥१०८१॥**

शृगाल, गृध्रजनित अपशकुन का फल दश दिनों में, अनाहत वाद्य-शब्द या आहत वाद्य के विकृत शब्द का फल उसी दिन, आक्रोश का फल १५ दिन, वल्मीक-भूविदारण का फल एक पक्ष में होता है ॥१०८१॥

**अहुताशप्रज्वलनं घृततैलवसादिवर्षणं चापि।**

**सद्यः परिपच्यन्ते मासेऽध्यर्धे च जनवादः॥१०८२॥**

विना अग्नि के ज्वाला, घृत, तेल, वसा, मांस, रक्त, अन्न, मद्य, पुष्प, फल, पर्णपत्र, पाषाण वर्षा का फल उसी दिन, जनापवाद का फल तीन मास, १५ दिनों में होता है ॥१०८२॥

**छत्रचितियूपहुतवहबीजानां सप्तभिर्भवति पक्षैः।**

**छत्रस्य तोरणस्य च केचिन्मासात्फलं प्राहुः॥१०८३॥**

छत्र, यज्ञवेदी, याज्ञिक यूप, अग्नि, बीज – इनकी विकृति का फल ३ मास, १५ दिन में तथा कोई आचार्य छत्र व तोरण का फल एक मासं में कहते हैं ॥१०८३॥

**अत्यन्तविरुद्धानां स्नेहः शब्दस्य वियति भूतानाम्।**

**मार्जारनकुलयोर्मूषकेण सङ्गश्च मासेन॥१०८४॥**

विरोधियों का परस्पर प्रेम, आकाश में प्राणी का शब्द, मार्जार, नकुल (नेउर), मूषक के संग का फल एक मास में होता है ॥१०८४॥

**गन्धर्वपुरं मासाद्रसवैकृत्यं हिरण्यविकृतिश्च।**

**ध्वजवेश्मपांशुधूमाकुलादिशश्चापि मासफलाः॥१०८५॥**

गन्धर्वनगर, रसविकृति, सुवर्णविकृति, पताका का भङ्ग, कम्पन, विकार, धूम, रज (धूलि) से व्याप्त दिशा का फल एक मास में होता है ॥१०८५॥

**नवकैकाष्टदशकैकषट्त्रिकत्रिकसंख्यमासपाकानि।**

**नक्षत्राण्यश्विनिपूर्वकानि सद्यःफला श्लेषा॥१०८६॥**

अश्विनी योग-तारा के उपसर्ग से नव, भरणी के योगतारोपसर्ग से एक मास एवं कृत्तिकादि नक्षत्रों के योगतारोपसर्ग से क्रमशः ८।१०।१।६।३।३ मासों में और श्लेषा में शीघ्र फल का परिपाक होता है ॥१०८६॥

**पित्र्यान्मासः षट् षट् त्रयोऽर्धमष्टौ च त्रिषडेकैकाः।**

**मासे चतुष्के आषाढे सद्यःपाकाभिजित्तारा ॥१०८७॥**

एवमेव मघादि नक्षत्रों का क्रमशः १।६।६।३।३।३।२। ८।३।६।१।१।४ इन मासों में और अभिजित् का शीघ्र फल होता है ॥१०८७॥

**सप्ताष्टावध्यर्द्धं त्रयस्त्रयः पञ्च चैव मासाः स्युः।**

**श्रवणादीनां पाको नक्षत्राणां यथासंख्यम् ॥१०८८॥**

एवमेव श्रवण का ७, धनिष्ठा का ८, शतभिषा का १$\frac{१}{२}$ मास, पूर्वाभाद्रपद का ३, उत्तराभाद्र पद का ३, रेवती का ५ मासों में फल होता है ॥१०८८॥

**निगदितसमये न दृश्यते चेदधिकतरं द्विगुणे प्रपच्यते तत्।**

**यदि न कनकरत्नगोप्रदानैर्विधिवद् द्विजैश्च शान्ता ॥१०८९॥**

अपने निश्चित समय में जिसका फल नहीं होता है, उसका अपने द्विगुणित काल में होता है। गो-अन्न-सुवर्ण-मणि के दान व ब्राह्मणों के द्वारा की गई शान्ति से दोष का उपशम नहीं हुआ, तो अपने द्विगुणित समय पर अधिक मात्रा में परिपाक होगा, अतः द्विगुणित शान्ति होनी चाहिए ॥१०८९॥

**द्विवेदिकुलसम्भूतसरयूक्तसङ्ग्रहे।**

**शिरोमणौ समाप्ताभूत्त्रियुता विंशसंज्ञका ॥१०९०॥**

**॥ इति श्रीसङ्ग्रहशिरोमणौ सरयूप्रसादसङ्गृहीते सत्सङ्ग्रहे**

**मिश्रकथनं नाम त्रयोविंशतिः प्रभा ॥२३॥**

## ॥ अथ चतुर्विंशी प्रभा ॥

**अथात्र तिथिनिर्णयो धर्मसिन्ध्वादिग्रन्थात् सङ्गृह्यते। अथ तिथयो विध्युक्तकर्मानुष्ठानफलसिद्ध्यर्थं तदङ्गतया निर्णीयन्ते। तत्र तिथयः प्रतिपदाद्याः षोडश। (यच्च) अहोरात्रेण सूर्य्यमण्डलाच्चन्द्रमसः प्रथमकलानिर्गमे प्रतिपद्भवति, एवं द्वितीयाद्या अपि। इत्थं पञ्चदशेनाहोरात्रेण पञ्चदश्याः कलाया निर्गमे सूर्याचन्द्रमसोरत्यन्तदूरात्पूर्णिमा, एवमेवेन्दोरेककलाया रविमण्डलप्रवेशे कृष्णप्रतिपद् एवं द्वितीयाद्याश्चेत्थं त्रिंशत्तमेनाहोरात्रेण पञ्चदश्याः कलायाः प्रवेशेन सूर्य्याचन्द्रमसोरत्यन्तसन्निकर्षादमावास्या भवति। नन्वेवं तिथीनां विध्यङ्गत्वेन विधिनैव सिद्धत्वात्तन्निर्णयस्याप्रयोजनमिति चेत्, न, यच्च षष्टि-घटिकात्मककालावच्छिन्नानां तिथीनां सम्पूर्णत्वेनानिर्णयत्वम्। यत्र तिथेर्ह्रासवृद्धी तत्रैकस्यास्तिथेर्दिनद्वयव्यापित्वेन विहितं कर्म कुत्र कर्त्तव्यमिति संशये निर्णयस्यावश्यकत्वम्।**

तिथि-निर्णय –

विधिविहित कर्मों को यथोचित समय पर प्रारम्भ करने से तत्तत्कर्मों की सिद्धि होती है, अर्थात् यथाविहित कार्य यथोक्त समय व तिथि में प्रारम्भ करने से सफल होता है। इसलिये क्रियमाण कार्यो की अंगीभूत तिथियों का निर्णय प्रस्तुत करता हूँ।

तिथियाँ प्रतिपदादि १५ पन्द्रह होती हैं। पक्ष भेद से पन्द्रहवीं तिथि पूर्णिमा व अमावास्या के नाम से जानी जाती है। वस्तुतः नाम-भेद से संख्या-भेद की कल्पना सिद्धान्तगत व युक्तिसंगत नहीं है।

चान्द्रमास की पूर्ति अमावास्या में होती है, उस समय सूर्य व चन्द्र का राश्यादि कलान्तर शून्य किन्तु प्रथम योग से द्वितीय योग का

वस्तुतः अन्तर ३६० अंश है और शुक्लप्रतिपदादि अमान्त तिथियों की संख्या ३० पूर्ण हो जाती है। अतः त्रैराशिकानुपात से एक तिथि का मान १२ अंश होता है, यथा प्रथम योग से द्वितीय योग पर्यन्त ३० तिथि व ३६० अंश होता है, तो एक तिथि का (भोग) मान क्या होगा ? ३६० × १/३० = १२ यह एक तिथि का मान हुआ। एवं सूर्य-चन्द्र के सर्वात्मना योग के बाद, शीघ्रगतिक चन्द्रमा सूर्य से १२ अंश आगे चला जाता है, तो एक तिथि एवं प्रतिदिन गतिक्रम से प्रत्येक १२ अंश के अन्तर से एक तिथि बढ़ती जायेगी और पूर्णिमा में सर्वाधिक अन्तर होने से पूर्ण कला से चन्द्रमा प्रकाशित होता है। पुनः शीघ्रगतित्वात् पूर्णिमोत्तर प्रतिदिन एक तिथिमान १२ अंश तुल्य अपने से सूर्य का अन्तर और अपनी कलाओं का ह्रास करता हुआ पूर्णिमा से १५वें दिन कलाविहीन, लोक से अदृश्य होते हुए ३६० अंश की दूरी पूरी कर अपने को सूर्यबिम्ब में सर्वात्मना समर्पित करके अदृश्यत्व के नाम से अमावास्या का द्योतक हो जाता है। एवमेव सूर्य से अपना अन्तर वृद्धिक्रम से १५ तिथि = १८० अंश परमान्तर से पन्द्रह व पुनः प्रतिदिन क्रमशः अन्तर के ह्रास क्रम से अन्तराभाव तक १५ तिथि पूरी होती हैं। इसमें तिथियों का मान असंगत होता है। इस प्रकार तिथियों की व्यवस्था से निर्णय असंगत-सा प्रतीत होता है, ऐसा कहना असंगत है।

मान समान न होने से कभी-कभी तिथि का मान ६० घटी से अधिक व ६० घटी से न्यून भी हो जाता है। इस प्रकार तिथि कभी सूर्योदय के पूर्व और कभी सूर्योदय के पश्चात् प्रारम्भ होती है। अतः ह्रास व वृद्धि से क्षय व वृद्धि नाम भी तिथियों के साथ संलग्न हो जाते हैं, जिसमें सूर्य उदय हो वह शुद्ध व जिस तिथि में सूर्य का उदय न हो उसे क्षय और एक ही तिथि में दो सूर्योदय से वृद्धि तिथि

कही जाती है, एवं ह्रास व वृद्धि के अनुसार जिस तिथि में जो व्रत या कार्य विहित है, वह कार्य व व्रत पूर्व या पर दिन वाली तिथि में किया जाय, इस संशय को दूर करने के लिए यहाँ धर्मशास्त्र-विधि विहित तिथि व कार्य की सफलता की दृष्टि से तिथियों का निर्णय आवश्यक प्रयोजन है।

**अथ तिथिनिर्णये सामान्यपरिभाषा। तिथिर्द्विधा – पूर्णा सखण्डा च। या सूर्योदयमारभ्य षष्टिनाडिकाव्याप्ता सा पूर्णा, एतदन्या सखण्डा। सखण्डाऽपि द्विधा–शुद्धा विद्धा च। सूर्य्योदयमारभ्यास्तमयपर्यन्तं विद्यमाना शिवरात्र्यादौ निशीथपर्यन्तं विद्यमाना च शुद्धा, तदन्या विद्धा। वेधोऽपि द्विविधः – प्रातर्वेधः, सायंवेधश्च। सूर्योदयोत्तरं षट्घटिकापरिमिततिथ्यन्तरस्पर्शात्मकः प्रातर्वेधः, सूर्यास्तात्प्राक्षट्घटीपरिमिततिथ्यन्तरस्पर्शात्मकः सायंवेधः। एकादशीव्रतविषये तु वेधो वक्ष्यते, क्वचित्तिथिविशेषे वेधाधिक्यम्। पञ्चमी द्वादशनाडीभिः षष्ठीं विद्धां करोति, दशमी पञ्चदशभिरेकादशीवेधकृत्, चतुर्दशी अष्टादशभिः पञ्चदशीं विध्यति, विद्धाश्च तिथयः क्वचित्कर्मणि ग्राह्याः कुत्रचित्त्याज्याश्च भवन्ति। तत्र सम्पूर्णा शुद्धा च तिथिः सन्देहाभावान्निर्णयं नापेक्षते, निषेधविषये सखण्डाऽपि न निर्णयार्हा, निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षत इति वचनेनाष्टम्यादिषु नारिकेलादिभक्षणनिषेधादेस्तत्कालमात्रव्याप्ततिथ्यपेक्षणाद्विहितव्रतादिविषये तु निर्णय उच्यते।**

तिथियों के निर्णय की सामान्य परिभाषा – व्रतों व कार्यों के लिए प्रयुक्त तिथियाँ पूर्णा व सखण्डा दो प्रकार की होती हैं। सूर्योदय से साठ घटी तक व्याप्त रहने वाली तिथि पूर्णा, इससे भिन्न सखण्डा है।

सखण्डा तिथि के शुद्धा व विद्धा दो भेद हैं। सूर्योदय से सूर्यास्त व शिवरात्रि के व्रत आदि व्रतकालव्यापिनी में अर्धरात्रि तक विद्यमान रहने वाली तिथि शुद्धा और इससे भिन्न विद्धा होती है। वेध भी दो प्रकार का है– प्रातः व सायम्। सूर्योदय से ६ घटी के उपरान्त अग्रिम तिथि का प्रवेश (स्पर्श) हो जाय, तो उसे प्रातः वेध व सूर्यास्त से पूर्व ६ घटी के भीतर अग्रिम तिथि का प्रवेश (स्पर्श) हो तो उसे सायंवेध कहते हैं।

एकादशी व्रत के विषय में पुनः वेध कहने के पूर्व सामान्यतः तिथिपरत्वेन वेध का घटी-मान भिन्न-भिन्न होता है। जैसे पंचमी तिथि (द्वादश) बारह घटी से षष्ठी को व दशमी १५ घटी से एकादशी को तथा चतुर्दशी १८ घटी से पूर्णिमा को वेध करती है। किसी-किसी कार्य में विद्धा तिथि भी ग्राह्य है और किसी कार्य में विद्धा तिथि त्याज्य है।

सम्पूर्णा व शुद्धा तिथि के निर्णय की आवश्यकता नहीं है; क्योंकि निषेध तो निवृत्तिरूप मात्र काल की अपेक्षा रखता है। अन्यथा सर्वथा निर्णयापेक्ष्य है। जैसा कि अष्टम्यादि तिथियों में नारिकेलादि भक्षण के निषेध का प्रयोजन भक्षणकालिक तिथि से है। अर्थात् जिस तिथि में जिसके भक्षण का निषेध है, वह तिथि उस वस्तु के भक्षणकाल में न हो। निषेध का यह सिद्धान्त है।

इसलिए व्रत में विहित तिथियों के निर्णय की अपेक्षा से तिथियों का निर्णय प्रस्तुत है।

**तत्र कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिरिति तत्काल एव ग्राह्या, यथा विनायकादिव्रते मध्याह्नादौ पूजाविधानाद् मध्याह्नादिव्यापिनी दिनद्वये कर्मकालव्याप्तावव्याप्तौ वा युग्मवाक्यादिना पूर्वविद्धायाः परविद्धाया वा तिथेर्ग्राह्यत्वम्।**

कार्यकालव्यापिनी तिथियों का निर्णय– जिस कार्य के लिए जो तिथि प्रतिपादित है और उसका कार्यकाल भी निर्धारित है, वहाँ तत्कार्य-कालव्यापिनी तिथि का ही ग्रहण करना अभीष्ट है। जैसे विनायक व्रत में मध्याह्न में पूजा का विधान होने से मध्याह्नव्यापिनी चतुर्थी लेनी चाहिए। यदि दोनों दिन कालव्याप्ति व अव्याप्ति जैसी स्थिति उपस्थित हो जाय तो युग्म वाक्य के अनुसार पूर्वविद्धा या परविद्धा, जैसा भी निर्णय हो, उसके अनुसार ही अपेक्षित तिथि को ग्रहण करना चाहिए।

**युग्मवाक्यन्तु– "युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा॥ प्रतिपद्यप्यमावास्यातिथ्योर्युग्मं महाफलम्"॥ इति। अस्यार्थः – युग्मं द्वितीया, अग्निस्तृतीया, द्वितीया तृतीयाविद्धा ग्राह्या, यद्येवं तदा द्वितीया-तृतीययोर्युग्मम्, चतुर्थीपञ्चम्योर्युग्मम्, षष्ठीसप्तम्योर्युग्मम्, अष्टमीनवम्योर्युग्मम्, एकादशीद्वादश्योर्युग्मम्, चतुर्दशीपौर्णमास्योर्युग्मम्, अमावास्याप्रतिपदोर्युग्ममिति।**

युग्म वाक्यार्थ– द्वितीया तृतीया से विद्धा ग्राह्य है, चतुर्थी पंचमी से, षष्ठी सप्तमी से, अष्टमी नवमी से, एकादशी द्वादशी से, चतुर्दशी पूर्णिमा से और अमावास्या प्रतिपदा से विद्धा ग्राह्य है। यही युग्म सिद्धान्त है, जिसका उपयोग अन्यत्र भी सिद्धान्तरूप से चरितार्थ होता है।

**क्वचित् "चतुर्थीगणनाथस्य मातृविद्धा प्रशस्यते" इत्यादिविशेषवाक्यै-र्ग्राह्यत्वनिर्णयो वचनबलाद् ग्राह्यायास्तिथेः कर्मकाले सत्त्वाभावे साकल्यवचनैः सत्त्वं भावनीयम्, तानि च– "यां तिथिं समनुप्राप्य उदयं याति भास्करः। सा तिथिः सकला ज्ञेया स्नानदानजपादिषु"॥ इत्यादीनि।**

**॥इति सामान्यपरिभाषा॥**

कहीं पर गणेशचतुर्थी तृतीया-विद्धा भी ग्राह्य है, वहाँ सामान्य वाक्य कालव्यापक और विशेषवाक्य उससे भिन्न है, अतः सामान्य वाक्य से विशेषवाक्य बलवान् होता है, इस नियम से कर्मकालव्याप्ति

के अभाव में सत्ता मात्र ग्रहण करनी चाहिए, जैसा कि उदयकालिक तिथि सर्वकालव्यापक होने से स्नानदानजपादि कार्यों में ग्राह्य है। यह सामान्य नियम की परिभाषा है।

**अथ कर्मविशेषे निर्णयः। कर्माणि द्विविधानि – दैवानि पित्र्याणि च। तत्र दैवानि षड्विधानि, एकभक्तनक्तायाचितोपवासव्रतदानाख्यानि। यन्मध्याह्ने एकवारमेकान्नभोजनं तदेकभक्तम्, यद्रात्रावेव प्रदोषकाले भोजनं तन्नक्तम्, यद्याचनां विना दिने लब्धस्यान्नादेर्भोजनं तदयाचितम्, यच्च दिनान्तरे लब्धस्यापि पाचकं स्त्रीपुत्रादिकं प्रति याचनमन्तरेण भोजनमयाचितमिति केचित्, यदहोरात्रे भोजनाभावः स उपवासः, पूजाद्यात्मकः कर्मविशेषो व्रतम्, स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोपादानं दानम्।**

कर्मविशेष का निर्णय– कर्म दैव व पित्र्य दो प्रकार के हैं, जिनमें दैव के एकभक्त, नक्त, अयाचित, उपवास, व्रत, दान ये छः भेद हैं। एकभक्तमध्याह्न में एकान्न भोजन, नक्तरात्रि प्रदोषकाल में ही भोजन, अयाचित बिना माँगे प्राप्त अन्न का भोजन, कोई तो एक दिन बाद दूसरे दिन भोजन बनाने वाले स्त्री या पुत्र से याचना के बिना प्राप्त भोज्य के भोजन को अयाचित कहते हैं। बिना भोजन किये अहोरात्र व्यतीत करना उपवास है। पूजादिक विशेषकर्म व्रत है। स्वस्वत्वनिवृत्तिपूर्वक परस्वत्वोपादान ही दान है, अर्थात् जिस वस्तु का अन्य को समर्पण करने से उस वस्तु पर से अपना स्वत्व समाप्त हो जाय, उस वस्तु के उस त्याग को दान कहते हैं।

**तानि च एकभक्तादीनि क्वचिद् व्रताङ्गतया विहितानि, क्वचिदेकादश्याद्युपवासप्रतिनिधितयाऽविहितानि, क्वचित्स्वतन्त्राणीति त्रिविधानि।**

**तत्र स्वतन्त्राणां निर्णय उच्यते। यथा दिनं पञ्चधा विभज्य प्रथमो भागः प्रातःकालो ज्ञेयः, द्वितीयः संगवः, तृतीयो मध्याह्नः, चतुर्थोऽपराह्णः, पञ्चमः सायाह्नः, सूर्यास्तोत्तरं त्रिमुहूर्त्तः प्रदोषः।**

पूर्वोक्त एकभक्त आदि ६ प्रकार के दैव कार्य कभी व्रतांग के रूप में और कभी एकादशी आदि व्रतोपवास रूप में आते हैं तथा कभी स्वतन्त्र रूप में मान्य होते हैं, अर्थात् किसी व्रत या उपवास के अंग नहीं होते हैं। यहाँ जो अन्य कर्मों के अंग हैं या प्रतिनिधि के रूप में हैं, उनका निर्णय अपने प्रधान के निर्णयाधीन होता है, इस प्रकार षट् प्रकार का दैव कार्य तीन श्रेणी में आता है, जिसमें प्रथम स्वतन्त्र पर विचार – दिन के पाँच भागों में प्रथम प्रातः, द्वितीय संगव, तृतीय मध्याह्न, चतुर्थ अपराह्ण, पंचम सायाह्न हैं। सूर्यास्त के बाद के तीन मुहूर्त्तकाल को प्रदोष कहते हैं।

**तत्रैकभक्ते मध्याह्नव्यापिनी तिथिर्ग्राह्या, तत्रापि दिनार्द्धसमयेऽतीते त्रिंशद्घटिकमध्यमदिनमानेन षोडशघटीत्रयं मुख्यो भोजनकालः, तत ऊर्ध्वमासायं गौणकालः। अत्र पूर्वेद्युरेव मुख्यकाले व्याप्तिः, परेद्युरेव व्याप्तिः, उभयेद्युरेव व्याप्तिः, उभयत्रापि व्याप्त्यभावः, उभयसाम्येनैकदेशव्याप्तिः, वैषम्येणैक-देशव्याप्तिरिति षट् पक्षा भवन्ति। तत्र पूर्वेद्युरेव मुख्यकाले ग्राह्यतिथिसत्त्वे पूर्वैव, परत्रैव सत्त्वे परैवेत्यसन्देहः, उभयत्रापि पूर्णव्यापित्वे युग्मवाक्यान्निर्णयः, उभयत्र व्याप्त्यभावे पूर्वैव गौणकालव्याप्तिसत्त्वात् साम्येनैकदेशव्याप्तौ पूर्वा वैषम्येणैकदेशव्याप्तौ दिनद्वयेऽपि कर्मपर्याप्ततिथिलाभे युग्मवाक्यान्निर्णयः। कर्मपर्याप्ततिथ्यलाभे पूर्वैवेति।**

**॥ इत्येकभक्तनिर्णयः ॥**

इनमें एकभक्त व्रत के लिए मध्याह्नव्यापिनी तिथि ग्राह्य है। इसके छः भेद हैं– १. पूर्व दिन मुख्यकालव्याप्ति, २. दूसरे दिन व्याप्ति, ३. दोनों दिन व्याप्ति, ४. दोनों दिन व्याप्ति का अभाव,

५. दोनों दिन सामान्यरूप से एकदेशव्याप्ति, ६. दोनों दिन विषमरूप से न्यूनाधिक एकदेशव्याप्ति। इनमें प्रथम पक्ष, मुख्यकालव्यापिनी तिथि ग्राह्य है। दोनों दिन के मुख्यत्व में पर दिन वाली तिथि ग्राह्य है, परन्तु दोनों दिन की मुख्यकालव्याप्ति होने पर संशयात्मक निर्णय की स्थिति में युग्म वाक्यानुसार निर्णीत तिथि ग्राह्य होगी। दोनों दिन मुख्यकालव्याप्ति के अभाव में पूर्व दिन की गौणकालव्यापिनी पूर्वा तिथि ही ग्राह्य है। दोनों दिन घटीमान की साम्यता में मुख्यकाल के एक भाग (एकदेश) में व्याप्ति होने पर पूर्वा तिथि ग्राह्य है, दोनों दिन तिथि के घटीमान की वैषम्यता में एकदेश की व्याप्ति में दोनों दिन व्रतांग कार्य पूर्ण होने तक कार्य को सम्पन्न करने के लिये तिथि उपलब्ध हो तो युग्मवाक्य से निर्णय करें। तिथिप्रयुक्त कर्म पूर्ण होने तक तिथि के अभाव में पूर्वा तिथि अर्थात् पूर्व दिन की तिथि ग्राह्य है। यह एकभक्त (भोजन) का निर्णय है।

**अथ नक्तव्रतम्। तत्र सूर्यास्तोत्तरत्रिमुहूर्तात्मकप्रदोषव्यापिनी तिथिर्नक्ते ग्राह्या, अन्यतरदिने तद्व्याप्तौ तदेकदेशस्पर्शे वा सैव ग्राह्या, भोजनं त्वस्तोत्तरम्, घटिकात्रयं सन्ध्याकालं त्यक्त्वा भोजनं कार्यम्, सन्ध्याकाले भोजननिद्रामैथुनाध्ययनवर्जनाद् यतिभिरपुत्रविधुरैर्विधवाभिश्च नक्तं सायाह्न-व्यापिन्यां दिनाष्टमभागे कार्यम्, रात्रौ तेषां भोजननिषेधात्, एवं सौरनक्तमपि सायाह्नव्यापिन्यां दिवैव कार्यम्। दिनद्वये प्रदोषव्याप्तौ परा, दिनद्वये प्रदोषव्याप्त्यभावे परैव सायाह्ने दिनाष्टमे नक्तं कार्यम्, न तु रात्रौ, साम्येनैकदेशव्याप्तौ परैव, वैषम्येण प्रदोषैकदेशव्याप्तौ तदाधिक्यवती पूर्वाऽपि ग्राह्या, यदि पूजाभोजनपर्याप्तं तदाधिक्यं लभ्यते, नो चेत् साम्यपक्षवत्पुनःपरैव,न त्वाधिक्यवशात्पूर्वैवेति। नक्तव्रतभोजनं वैधत्वाद्रविवासरसङ्क्रान्त्यामपि रात्रावेव कार्यम्, रविवारादौ रात्रिभोजननिषेधस्य रागप्राप्तभोजनपरत्वात्,**

**एकादश्याद्युपवासप्रत्याम्नायभूतं नक्तं तूपवासदिन एवेति। अयाचितस्य त्वहोरात्रसाध्यत्वादुपवासवन्निर्णयः। पित्र्याणामपराह्णादिव्यापित्वेन निर्णयस्तत्तत्प्रकरणतो ज्ञेयः। एकभक्तनक्तायाचितोपवासानां पूर्वतिथावनुष्ठितानां परेद्युस्तिथ्यन्तरे पारणम्। यामत्रयोर्ध्वगामिन्यां तिथौ प्रातः पारणमिति माधवः। इत्येकभक्तादिनिर्णयः।**

अथ नक्तव्रत निर्णय – सूर्यास्त के बाद तीन मुहूर्त तक व्याप्त तिथि नक्तव्रत में भोजन के लिए ग्राह्य है। दूसरे दिन की व्याप्ति या दूसरे दिन मुख्यकाल के एकदेशस्पर्श मात्र के होने पर ही स्पर्शकालिक द्वितीय दिन वाली तिथि ग्राह्य है; क्योंकि अस्त के बाद तीन घटी सन्ध्या रहती है, उसके बाद ही भोजन करना चाहिए। सन्ध्या में भोजन, मैथुन, अध्ययन आदि वर्जित हैं। यति अथवा विधुर या विधवा को नक्त सायाह्नव्यापिनी तिथि में दिन के आठवें भाग में भोजन करना चाहिए; क्योंकि इन लोगों के लिए रात्रि-भोजन निषिद्ध है। इसी प्रकार सौर नक्त भोजन (सूर्य-व्रत सम्बन्धी) सायाह्नव्यापिनी तिथि के दिन में ही भोजन करना चाहिए। दोनों दिन प्रदोषव्याप्ति हो तो परा और दोनों दिन प्रदोषकाल में नक्तव्याप्ति का अभाव हो तो दूसरे दिन सायाह्न (दिन के अष्टम भाग में) नक्त भोजन करना चाहिए। दोनों दिन रात्रिकाल की व्यापकता में यदि साम्य हो अथवा एकदेश व्याप्ति हो तो परा तिथि ही ग्राह्य है। दोनों दिन रात्रिकाल की व्यापकता में यदि साम्य हो अथवा एकदेश व्याप्ति हो तो परा ही ग्राह्य है। वैषम्य होने पर प्रदोष के एकदेश व्याप्ति में अधिककाल तक व्यापिनी पूर्वा भी ग्राह्य हो सकती है, यदि पूजा व भोजन के लिए पर्याप्त समय तक तिथि उपलब्ध हो, ऐसा न होने पर साम्यपक्ष की भाँति परैव ग्राह्य है। किन्तु अधिककाल तक व्याप्त रहने वाली भी ग्राह्य नहीं है; क्योंकि नक्तभोजन की वैधता से परैव ग्राह्य है।

रविवार व संक्रान्ति के समय रात्रि में ही भोजन करना चाहिए, यदि ऐसा कहा जाय तो रवि के दिन रात्रि में भोजन का निषेध है; परन्तु रवि के दिन रात्रि के भोजन का निषेध राग (आसक्ति) परक है। अतः प्रथम नियम (रात्रि-भोजन) ग्राह्य है। एकादशी आदि तिथियों में वेद-लोक-सम्मत शास्त्रोक्त नक्तविधि का निर्णय तो उपवास के दिन के लिए ही होता है।

अयाचित व्रत में अहोरात्र साध्य है, इसका निर्णय उपवास की भाँति होना चाहिए। पितृसम्बन्धी कार्य के लिए अपराह्णव्यापिनी तिथि होनी चाहिए, ऐसा ही निर्णय पितृप्रकरण से प्राप्त है। एकभक्त, नक्त, अयाचित व उपवास, ये यदि पूर्व दिन की तिथि में पालन कर चुके हों तो दूसरे दिन तिथ्यन्तर में पारण करना चाहिए। पूर्व दिन व्रतपालन की तिथि अग्रिम दिन तीन याम से अधिक हो तो प्रातः पारण करना चाहिए। यह माधव के मत से एकभक्त व्रत का निर्णय हुआ।

**अथ व्रतपरिभाषा। अत्रानग्निब्रह्मणा उत्तमाधिकारिणः, स्त्रीशूद्राणां तु द्विरात्राधिकोपवासे नाधिकारः। सधवास्त्रीणामपि भर्तुराज्ञां विना व्रतोपवासादौ नाधिकारः। उपवासदिने श्राद्धदिने च काष्ठेन दन्तधावनं न कार्यम्, पर्णादिना द्वादशगण्डूषैर्वा मुखशुद्धिः, जलपूर्णताम्रपात्रमादायोदङ्मुखः प्रातरुपवासादिव्रतं सङ्कल्पयेत्। अपूर्वव्रतारम्भो व्रतोद्यापनं च मलमासे गुर्वाद्यस्ते वैधृतिव्यतीपातादिदुर्योगे विष्टौ क्रूरचारे निषिद्धे दर्शादितिथौ न भवति एवं खण्डतिथावपि न भवति।**

**"उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक्।**
**सा खण्डा न व्रतानां स्यादारम्भश्च समापनम्"॥ इति सत्यव्रतोक्तेः।**

व्रत की परिभाषा – व्रत में अनग्नि (अग्निहोत्रविमुख) ब्राह्मण उत्तम अधिकारी है। स्त्री व शूद्रों को दो रात्रि से अधिक रात्रि के उपवास

का निषेध है। सधवा स्त्रियों को पति की आज्ञा के विना व्रतोपवास में अधिकार नहीं है।

उपवास व श्राद्ध के दिन काष्ठ से दन्तधावन न करें। पत्रादि सूक्ष्म वस्तु से या १० बार कुल्ला करके मुख की शुद्धि करके जलपूर्ण ताम्रपात्र लेकर उत्तरमुख बैठकर प्रातः उपवासादि व्रत का संकल्प करना चाहिए।

प्रथम व्रतारम्भ व उद्यापन– मलमास, गुरु-शुक्र के अस्त में, बाल्यवार्धक्य में, वैधृति, व्यतीपातादि दुर्योग, भद्रा, क्रूरदिन, निषिद्ध अमादि तिथियों अथवा खण्ड तिथि में प्रथम व्रतारम्भ अथवा व्रतोद्यापन नहीं होता है। खण्डा तिथि का लक्षण– "उदय से मध्याह्नकाल तक जिस तिथि का मान (भोग) नहीं रहता है वह खण्डा तिथि कही जाती है"। उसमें व्रतारम्भ व समापन निषिद्ध है।

**व्रते धर्माः –**

**"क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः।**

**देवपूजा च हवनं सन्तोषास्त्येय आर्ज्जवम्॥**

**सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः"॥**

**अत्र होमो व्याहृतिभिः काम्यव्रते विशेषो ज्ञेयः। यद्देवताया उपोषणव्रतं तत्तद्देवताजपस्तद्ध्यानं तत्कथाश्रवणं तदर्चनं तन्नामकीर्त्तनश्रवणादिकं कार्यम्। उपवासे अन्नावलोकनगन्धादिकमभ्यङ्गताम्बूलमनुलेपनं च त्यजेत्। सभर्तृकस्त्रीणां सौभाग्यव्रते अभ्यङ्गताम्बूलादि न वर्ज्यम्। यदुक्तम् –**

**"अष्टैतानि व्रतघ्नानि आपो मूलं फलं पयः।**

**हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्"॥**

व्रत में धर्म– क्षमा, सत्य, दया, दान, शौच, इन्द्रियसंयम, आचरणीय देवपूजा, हवन, सन्तोष, श्रेष्ठ व्यवहार (आर्जव) ये दश

सभी व्रतों में सामान्य धर्म हैं। व्रत में व्रती को व्याहृति से हवन करना चाहिए। अन्यत्र काम्यव्रत में देवतापरक जो विशेष विधि है, उसका भी अवश्य पालन करना चाहिए।

जिस देवता के निमित्त व्रत किया जाता है उस देवता की पूजा, नामकीर्तन, उसके मन्त्र का जप, ध्यान, कथाश्रवणादि श्रद्धापूर्वक करना चाहिए। उपवास में अन्न देखना, अन्न का गन्ध ग्रहण करना, तैल स्पर्श, पान, अनुलेपन, उबटन (शरीररंजन) का त्याग होना चाहिए। सौभाग्य व्रत में सौभाग्यवती स्त्रियों के लिए अभ्यंग-ताम्बूल आदि का निषेध नहीं है। जल, मूल-कन्द फल, दूध, हवि, ब्राह्मण की इच्छा, गुरु का वचन व औषधसेवन इन आठ के पालन से व्रत नष्ट नहीं होता है।

**प्रमादादिना व्रतभङ्गे दिनत्रयमुपोष्य क्षौरं कृत्वा पुनर्व्रतं कुर्यात्। अशक्त्योपवासप्रतिनिधिरेकब्राह्मणभोजनं तावद्धवनादिदानं वा सहस्र-गायत्रीजपो वा द्वादश प्राणायामो वा प्रायश्चित्तम्। स्वीकृतं व्रतं कर्तुमसक्तः प्रतिनिधिना कारयेत्। तत्र प्रतिनिधयस्तु— पुत्रः, पत्नी, भर्ता, भ्राता, पुरोहितः, सखा चेति। पुत्रादिः पित्राद्युद्देशेन व्रतं कुर्वन् स्वयमपि व्रतफलं लभते।**

व्रतभंग में प्रायश्चित्त— भ्रम या प्रमाद से व्रतभंग हो जाय, तो तीन दिन तक उपवास व क्षौरकर्म करके पुनः व्रत का प्रारम्भ करना चाहिए। उपवास करने में शक्ति का अभाव हो तो प्रतिनिधि के रूप में तीन दिन तक एक ब्राह्मण को भोजन कराने या तीन दिन भोजन के लिए पर्याप्त सोपस्कर सिद्धान्न (सीधा) का दान कर देना चाहिए। अथवा अधिकारी होने पर एक हजार गायत्री का जप, १२ प्राणायाम प्रायश्चित्त के रूप में करना चाहिए।

स्वीकृत व्रत करने में यदि कोई विवशता उत्पन्न हो जाय, तो पुत्र, पत्नी, भर्ता, भ्राता, पुरोहित, मित्र इन प्रतिनिधियों में से किसी से व्रत कराना शास्त्रसंगत है। पुत्र आदि अधिकारीगण, पिता आदि के निमित्त यदि व्रत करते हैं तो वे व्रत का फल स्वयं भी प्राप्त करते हैं और व्रत भी नष्ट नहीं होता है।

व्रतभङ्गकरास्तु – "असकृज्जलपानाच्च सकृत्ताम्बूलभक्षणात्। उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात्"॥ मैथुनं तु – "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च"॥ इत्यष्टविधम्।

प्राणसङ्कटे त्वसकृज्जलपाने दोषो नास्ति। चर्मस्थं जलं गोभिन्नं क्षीरं मसूरं जम्बीरफलं शुक्तिचूर्णमित्यामिषगणो व्रते वर्ज्यः। अश्रुपातक्रोधादिना सद्यो व्रतनाशः। परान्नभोजने चापि यस्यान्नं तस्य तत्फलमित्युक्तेः। तिलमुद्गभिन्नचणकादिकोशधान्यं माषादिकं मूलकं चेत्येवमादि, क्षारगणं लवणमधुमांसादिकं च वर्जयेत्। ग्राह्यानि यथा – "श्यामाकाश्चैव नीवारा गोधूमाश्च व्रते हिताः।" व्रीहिकङ्गुतिलमुद्गकलायादिधान्यं रक्तेतरमूलकं सूरणादिकन्दः सैन्धवसामुद्रादिक्षारं गव्यं दधिसर्पिर्दुग्धानि पनसफलमाम्रफलं नारिकेलं हरीतकी पिप्पली जीरकं शुंठीतित्तिणीकदलीलवलीधात्रीफलानि गुडेतरेक्षुविकारास्तैलपक्वानि हविष्याणि गव्यं तक्रं माहिषं घृतमपि क्वचित्।

व्रतभंग में कारण – बार-बार जल पीना, एक बार पान खाना, दिन में शयन करना या मैथुन (स्मरणादि अष्टविध) से व्रत नष्ट हो जाता है। अष्टविध मैथुन – स्मरण, कीर्तन, केलि, प्रेक्षण, एकान्त भाषण, संकल्प, अध्यवसाय व क्रियानिर्वृत्ति में लक्षित है। प्रायः संकट के समय असकृज्जलपान से व्रतभंग नहीं होता है।

व्रत में त्याज्य पदार्थ – चर्मपात्र का जल, गोक्षीर से भिन्न दूध, मसूर, जम्बीर (नीबू), सीपीचूर्ण ये आमिष गण के पदार्थ व्रत में त्याज्य हैं। अश्रुपात व क्रोधादि दुर्व्यवहार से शीघ्र व्रत नष्ट हो जाता है। व्रत में परान्न-भोजन से भोजनदाता फल का भागी हो जाता है। व्रत में तिल, मूँग से अतिरिक्त चना आदि कोशधान्य (सतुष धान्य–

छिलकावाले अन्न), उड़द, मूली ये क्षार पदार्थ लवण वर्ग (नमक समूह के) व मधुमांसादि पदार्थ भी सर्वथा त्याज्य हैं।

व्रत में ग्राह्य पदार्थ– श्यामक (सावाँ) या तिन्नी का चावल, गोधूम (गेहूँ) ग्राह्य हैं और कङ्गु (काकुन या टाँगुन), तिल, मूँग, मटर आदि धान्य एवं रक्त वर्ण रहित कन्द व सूरन आदि ग्राह्य हैं तथा सैंधव व सामुद्र नमक, गौ का दूध, गौ का घी, गौ का दधि, पनस फल (कटहर), आम्रफल, नारियल, हर्रे, पिप्पली, जीरा, सोंठ, इमली, केला, लवंग, आँवला ग्राह्य हैं। किन्हीं-किन्हीं का मत है कि गुड़ से भिन्न इक्षुविकार, तैलपक्व हविष्यान्न, गोदुग्ध से बनाया गया तक्र, भैंस का घी भी व्रतोपवास में ग्राह्य पदार्थों की श्रेणी में ही हैं।

**अनुक्तव्रतविधिस्थले माषादिपरिमितसुवर्णरजतादिप्रतिमा पूज्या। द्रव्यानुक्तावाज्यहोमः। देवतानुक्तौ प्रजापतिः। मन्त्रानुक्तौ समस्तव्याहृतिः। संख्यानुक्तावष्टोत्तरशतमष्टाविंशतिरष्टौ वा होमसंख्या। उपवासे कृते ब्राह्मण-भोजनं तत्साङ्गतार्थम्। उद्यापनानुक्तौ गां सुवर्णं वा दद्यात्। विप्रवचनाद् व्रतसाङ्गता। विप्रवचनं दक्षिणां दत्वैव ग्राह्यं सर्वत्र।**

जिस व्रत का विधान नहीं कहा गया है, उसमें एकमात्र सुवर्ण की प्रतिमा की पूजा, अनुक्त द्रव्य के स्थान में घी की आहुति, अनुक्त देवता में प्रजापति, अनुक्त मन्त्र में समस्त व्याहृति, अनुक्त संख्या में अष्टोत्तरशत (एक सौ आठ) बार हवन व जप का विधान समझना चाहिए। उपवास करने पर साङ्गता के रूप में ब्राह्मण-भोजन कराना चाहिए। यदि उद्यापन भी अनुक्त है (प्रतिपादित नहीं है), तो गौ या सुवर्ण का दान करना चाहिए। सुपात्र में दक्षिणा देकर ब्राह्मण के वचनों से व्रतोपवासादि समस्त शुभकर्मों का फल प्राप्त किया जा सकता है।

**गृहीतव्रतत्यागे चाण्डालतुल्यत्वम् । विधवादिभिर्व्रतादौ चित्ररक्तादिवस्त्रं न धार्यम्, श्वेतमेव धार्यम् । सूतकादौ स्त्रीणां रजोदोषादौ ज्वरादौ च गृहीतव्रतादौ शारीरनियमान् स्वयं कुर्यात्, पूजादिकमन्यद्वारा कारयेत् । अपूर्वारम्भस्तु सूतकादौ न भवति ।**

**"काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः ।**
**काम्येऽप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिर्विदुः ॥**
**न स्यात् प्रतिनिधिश्चात्र स्वामिदेवाग्निकर्मसु ।**
**नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित्" ॥**

जिस व्रत का प्रारम्भ कर दिया गया है, उसका त्याग नहीं करना चाहिए, त्याग करने से चाण्डालत्व गति की प्राप्ति होती है । विधवाओं को व्रतादि उत्सव व मांगलिक कार्यों में चित्र-विचित्र (रंग-विरंगे) वस्त्रों को धारण करना निषिद्ध है, वे मात्र श्वेत वस्त्र धारण कर सकती है । अशौच व स्त्री रजस्वला की अवस्था में अथवा ज्वरादि रोगावस्था में गृहीतव्रत व्रती को व्रतसम्बन्धी शारीरिक नियमों का पालन स्वयं करना चाहिए और व्रतांग पूजनादि कर्म प्रतिनिधिभूत अन्य अधिकारप्राप्त पुरुष से पूर्ण कराना चाहिए । किसी भी व्रत का प्रारम्भ सूतकादि निषिद्ध समय में न किया जाय । नित्य-नैमित्तिक व्रतादि कर्म में प्रतिनिधि नियुक्त हो सकता है, किन्तु काम्य में नहीं । अत्यावश्यक होने पर काम्य कार्य में भी उपक्रम (प्रारम्भ) के बाद प्रतिनिधि नियुक्त किया जा सकता है; किन्तु मन्त्र-ग्रहण, स्वामिकार्य, देवकार्य, अग्नि-परिग्रह में प्रतिनिधि विहित नहीं है । ऐसे ही निषिद्ध वस्तु का प्रतिनिधित्व (स्थानापन्नता) ग्राह्य नहीं है ।

**व्रतादिसन्निपाते दानहोमाद्यविरुद्धं क्रमेण कार्यम्, विरुद्धे तु नक्तभोजनोपवासादावेकं स्वयं कृत्वाऽन्यं पुत्रभार्यादिना कारयेत् । यत्र चतुर्दश्यष्टम्यादौ दिवाभोजननिषेधो व्रतान्तरपारणा च प्राप्ता तत्र भोजनमेव कार्यम्, पारणाया**

**विधिप्राप्तत्वात्, निषेधस्तु रागप्राप्तभोजनपरः। एवं रविवारादौ सङ्कष्टचतुर्थ्यादिव्रते रात्रिभोजनमेव कार्यम्, यत्राष्टम्यादौ दिवाभोजननिषेधो रात्रौ तु रविवारादि-प्रयुक्तभोजननिषेधस्तत्र किञ्चिद्भक्ष्यं प्रकल्प्य उपवास एव कार्यः।**

एक ही काल में दो व्रतों की उपस्थिति में पूजन, हवन और दानादि दोनों व्रतों का पृथक्-पृथक् विधान किया जाय। परन्तु विरुद्ध कार्य का विधान, एक में उपवास, दूसरे में नक्त भोजन विधि की अवस्था में, एक स्वयं करे और दूसरा स्त्री या पुत्र द्वारा कराये। जैसा कि चतुर्दशी व अष्टमी आदि तिथियों में, यदि दिन में भोजन निषिद्ध है और अन्य गृहीत व्रत की पारणा उपस्थित हो, तो पारणा (भोजन) करना चाहिए। रागप्राप्त (भोजनासक्ति) भोजन का त्याग ही विहित है, यतः वह विधिविहित भोजन नहीं है। इसी प्रकार रविवार आदि व्रत व संकष्टचतुर्थी (रविवार के दिन संकष्टचतुर्थीव्रत प्राप्त हो जाय, तो रविवार में रात्रि-भोजन व चतुर्थी में दिन के भोजन का निषेध है)। ऐसी परिस्थिति के व्रत की उपस्थिति में नक्त (रात्रि) भोजन करना चाहिए। क्योंकि यह चतुर्थी व्रत वार्षिक होने से, नैमित्तिक होना इसकी विशेषता है। तीसरा प्रकार– अष्टमी में दिन का भोजन व रविवार में रात्रि-भोजन निषिद्ध है। ऐसी स्थिति में किञ्चित् फलाहारादि लघु आहार लेकर उपवास ही करना चाहिए।

**चान्द्रायणादौ एकादश्यादिप्राप्तौ ग्राससंख्यानियमेन भोजनमेव कार्यम्, एवं कृच्छ्रादिव्रतेऽपि, एवमेकादश्यामेकान्तरोपवासादिप्रयुक्तपारणायां प्राप्तायां जलपारणां कृत्वोपवसेत्, एवं द्वादश्यां मासोपवासश्राद्धप्रदोषादिप्रयुक्त-पारणाप्रतिबन्धे जलपारणं कार्यम्। एकादश्यादौ सङ्क्रमे पुत्रवद्गृहस्थोपवास-निषेधः, एकादश्युपवासश्च प्राप्तस्तत्रापि किञ्चिदापो मूलं फलं पयो वा भक्ष्यं प्रकल्प्यम्।**

चान्द्रायण व्रत के मध्य में एकादशी उपस्थित होने पर चान्द्रायण व्रत का ही पालन करना चाहिए। एवं कृच्छ्र व्रत के मध्य में एकादशीव्रत उपस्थित हो जिसमें एक में पारणा, दूसरे में उपवास का विधान हो तो ऐसी स्थिति में जल का पारण करके उपवास ही करना चाहिए। ऐसा विशेष विधान विशेषस्थिति के व्रतोपवासादि में ही समझना चाहिए, न कि सार्वत्रिक। एकादशीव्रतोपरान्त द्वादशी को पारणा करना विहित है; परन्तु यदि उस द्वादशी में मासव्रतोपवास या श्राद्ध का दिन अथवा प्रदोष आदि व्रत आपाततः आ पड़ें तो एकादशी व्रत की पारणा उपस्थित होने पर जल का पारण करना चाहिए।

इसी तरह एक ही दिन संक्रान्ति व एकादशी के योग में संक्रान्ति में पुत्रवान् गृहस्थ के लिए उपवास का निषेध है व एकादशी में भोजन का निषेध है, ऐसी स्थिति में फलाहार करना उचित है; क्योंकि फलाहार भोजन व उपवास दोनों से भिन्न होने से उभयात्मक व्रतों का समन्वय हो जाता है।

**द्वयोरुपवासयोर्नक्तयोरेकभक्तयोर्वैकस्मिन्दिने प्राप्तावमुकोपवासं चोभयं तन्त्रेण करिष्ये इति सङ्कल्प्य सहैवोपवासपूजाहोमानामनुष्ठानम्, यत्रोपवासैकभक्तयोरेकदिने प्राप्तिस्तत्र तिथेर्द्वैधे गौणकालव्याप्तिमाश्रित्य एकं पूर्वतिथौ द्वितीयं शेषतिथौ कार्यम्, अखण्डतिथावेकं पुत्रादिना कारयेदित्युक्तम्, एवं काम्यं नित्यस्य बाधकमित्यादिवाक्यैः काम्यनित्यादिबलाबलबाधाबाधसम्भवासम्भवादि विचार्यानुष्ठानमूह्यमिति तिथिनिर्णयप्रभायां धर्मसिन्धूद्धृतसामान्यव्रतपरिभाषा।**

दो उपवास या दो नक्त (अहोरात्रि में केवल रात्रि में ही एक समय भोजन) एक समान दो व्रतों के सम्मिश्रण में ''उभयोपवासं वा, उभयैकभक्तं तन्त्रेण करिष्ये'' ऐसा संकल्प करने से एक साथ दोनों व्रतों की पूर्ति हो जाती है। पूजा-जप-हवन आदि कर्म दोनों व्रतों का एक साथ करना चाहिए।

एक तिथि के दिन दो व्रतों के समन्वय में यदि एक में एकभक्त (एक समय भोजन) तथा दूसरे में उपवास उपस्थित हो तो तिथि का दो भाग करके गौणकालव्यापिनी तिथि में प्रथम व मुख्यकालव्यापिनी तिथि में दूसरा व्रत, इस प्रकार दोनों व्रतों को दो दिन में पूरा करना चाहिए।

अखण्डा तिथि अर्थात् सम्पूर्ण तिथि में एक व्रत पुत्रादि से करायें और दूसरा व्रत स्वयं करें। "अखण्डातिथौ एकं पुत्रादिना कारयेत्, काम्यं नित्यत्वबाधकमित्यादिवाक्यैः" इत्यादि वाक्यों से काम्यव्रत नित्यव्रत का बाधक होता है। इस प्रकार दो व्रत के समन्वय में बलाबल बाध्यबाधक सम्भवासम्भवादि विचार करके व्रत का अनुष्ठान करना चाहिए।

**अथ प्रतिपदादितिथयो निर्णीयन्ते। अत्र कृष्णप्रतिपदादिपूर्णिमान्त एव मासः, तत्रादौ प्रतिपदा, कृष्णप्रतिपदा सर्वापि द्वितीयायुतैव। उपवासे तु पक्षद्वयेऽपि प्रतिपत्पूर्वविद्धैव ग्राह्या। अपराह्णव्यापिन्यां प्रतिपदि करणीयस्योपवासादेः सङ्कल्पं प्रातरेव कुर्यात्, सङ्कल्पकाले प्रतिपदादितिथ्यभावेऽपि सङ्कल्पे प्रतिपदादितिथिरेव वक्तव्या न त्वमावास्यादिः। शुक्लप्रतिपत्पूजाव्रतादौ अपराह्णव्यापिसत्त्वे पूर्वविद्धा ग्राह्या, सायाह्नव्याप्तिसत्त्वेऽपि पूर्वैवेति माधवः। सङ्कल्पश्च सूर्योदयात्प्रागुषःकाले सूर्योदयोत्तरं प्रातःकालाख्यत्रिमुहूर्त्तस्याद्यद्वये प्रशस्तः, तृतीयो मुहूर्त्तस्तु निषिद्ध इति।**

यहाँ पर कृष्ण प्रतिपदा से पूर्णिमान्त मास के व्यवहार से तिथियों के निर्णय में कोई बाधा सम्भव नहीं है। प्रथम प्रतिपदा का निर्णय – कृष्णपक्ष की सभी प्रतिपदा द्वितीयायुक्त ग्राह्य हैं। व्रतोपवास में दोनों पक्षों की प्रतिपदा पूर्वविद्धा ही ग्राह्य है। अपराह्णव्यापिनी प्रतिपदा में क्रियमाण व्रतादि कार्य के लिए प्रातःकाल ही संकल्प करना चाहिए।

यदि संकल्प के समय प्रतिपदा न हो तो भी संकल्प में प्रतिपदा का उच्चारण करना चाहिए, अमावास्यादि का नहीं। शुक्लपक्ष की प्रतिपदा की पूजा व व्रतादि में दूसरे दिन प्रतिपदा अपराह्ण या सायाह्नव्यापिनी होने पर भी पूर्वविद्धा ही लेनी चाहिए, यह माधव का मत है। संकल्प तो सूर्योदय के पूर्व उषाकाल व सूर्योदय के बाद प्रातःकालिक त्रिमुहूर्तों में प्रथम दो मुहूर्त में कर लेना चाहिए; क्योंकि प्रथम और द्वितीय मुहूर्त प्रशस्त हैं, तृतीय मुहूर्त निषिद्ध है।

**अथ चैत्रकृष्णप्रतिपदि वसन्तारम्भः। तत्र चैत्रकृष्णप्रतिपदि पूर्वविद्धायां विभूतिवन्दनादिकर्म, यथा प्रतिपदि प्रातः श्वपचं स्पृष्ट्वा स्नानं कुर्यात्, यच्चोक्तम् –**

**"न तस्य दुरितं किंचिन्नाधयो व्याधयोऽपि च।**
**कृत्वा चावश्यकार्याणि सन्तर्प्य पितृदेवताः।**
**वन्दयेद्धोलिकाभूतिं सर्वदुष्टोपशान्तये"॥**

**होलिकासमीपं गत्वा तद्भस्म गृहीत्वा पठनीयोऽयं मन्त्रः –**

**"ओं वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च।**
**अतस्त्वं पाहि नो देवि विभूते भूतिदा भव"॥ इति।**

**अथास्यामेवोदयव्यापिन्यां दिनद्वयसत्त्वेऽपि पूर्वायां तैलाभ्यङ्ग उक्तः। अत्रैव प्रतिपदि चूतपुष्पं सचन्दनं प्राश्नीयात्। तत्प्रकारश्च – गोमयोपलिप्ते भूमौ प्राङ्मुखो धृतशुक्लाम्बरः श्वेतासने सुवासिन्या कृतचन्दनतिलकनीराजनः सचन्दनमाम्रपुष्पं घृष्टं सजलं प्राश्नीयात्। तत्र मन्त्रः –**

**"चूतमग्र्यं वसन्तस्य माकन्दकुसुमं तव।**
**सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये"॥ इति।**

चैत्रकृष्ण प्रतिपदा में वसन्त का आरम्भ होता है। वहाँ पूर्वविद्धा चैत्रकृष्ण प्रतिपदा में विभूति-वन्दनादि कार्य किए जाते हैं, जैसे श्वपचादि स्पर्श करके स्नान करना; क्योंकि प्रतिपदा में विहित कार्य करने से

किसी प्रकार का दुरित (पाप) या आधिव्याधि आदि कोई दोष नहीं रहता है। दैनिक आवश्यक कार्य करके स्नानादि व देवपितृ-तर्पणादि कार्य किए जाते हैं।

होलिका-विभूतिधारण मन्त्र – होलिका के समीप जाकर विभूति लेकर निर्दिष्ट मन्त्र पढ़कर विभूति लगाने से सभी अरिष्ट शान्त होते हैं। यह प्रतिपदा उदय-व्यापिनी ग्राह्य है। यदि दोनों दिन उदय-व्यापिनी हो तो पूर्वा ही लेनी चाहिए। इसी प्रतिपदा में सचन्दन आम के बौर का प्राशन करना चाहिए। आम्रमञ्जरी प्राशन का प्रकार – गोबर से भूमि लीप कर, शुक्लवस्त्र धारण कर पूर्वाभिमुख, श्वेत आसन पर बैठकर, पत्नी द्वारा चन्दन, तिलक व आरती लेकर, घिसा हुआ चन्दन व आम्रपुष्प (बौर) निर्दिष्ट मन्त्र से प्राशन करें।

**चैत्रशुक्लप्रतिपदि वत्सरारम्भः। सा चोदयव्यापिनी, दिनद्वये व्याप्तावव्याप्तौ वा पूर्वा, चैत्रमलमाससत्त्वे वत्सरारम्भनिमित्तकं तैलाभ्यङ्गं सङ्कल्पादौ नूतन-वत्सरनामकीर्त्तनाद्यारम्भं च मलमासप्रतिपद्येव कुर्यात्। प्रतिगृहं ध्वजारोपणं निम्बपत्राशनं वत्सरादिफलश्रवणं नवरात्रारम्भो नवरात्रोत्सवादिनिमित्ताभ्यङ्गादिश्च शुद्धमासप्रतिपदि कार्यः। वत्सरारम्भनिमित्तकतैलाभ्यङ्गः शुद्धप्रतिपद्येवेति मयूखकारः। अस्यां तैलाभ्यङ्गो नित्यः, अकरणे प्रत्यवायश्रवणात्। अस्यामेव प्रतिपदि देवीनवरात्रारम्भः। अत्र परयुता मुहूर्त्तमात्राऽपि प्रतिपद् ग्राह्या। मुहूर्त्तस्तु – "मुहूर्त्तमह्नो रात्रेश्च प्रोचुः पञ्चदशं लवमि"ति। पारणादिनिर्णयः शारदवज्ज्ञेयः। अत्रैव प्रपादानम्, तत्र मन्त्रः–**

**"प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता।**
**अस्याः प्रदानात्पितरस्तृप्यन्तु हि पितामहाः।**
**अनिवार्यं ततो देयं जलं मासचतुष्टयम्"॥**

**प्रपां दातुमशक्तेन प्रत्यहमुदकुम्भो द्विजगृहे देयः, तत्र मन्त्रः–**

**"एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः।**
**अस्य प्रदानात्सकला मम सन्तु मनोरथाः"॥**

**इयमेव प्रतिपत्कल्पादिरपि। चैत्रशुक्लप्रतिपन्मत्स्यजयन्ती, तत्रास्मिन्नेव मासे दधिक्षीरघृतमधुवर्जनं दम्पतिपूजनात्मकं गौरीव्रतं कार्यम्।**

चैत्रशुक्ल प्रतिपदा से वर्ष का आरम्भ होता है, यह उदयव्यापिनी ग्राह्य है। दोनों दिन की व्याप्ति व अव्याप्ति की स्थिति में पूर्वा प्रतिपदा ही ग्राह्य है। यहाँ पूर्वा शब्द से पूर्वोक्त उदयकालव्यापिनी से तात्पर्य है। यदि चैत्र मास में मलमास आ जाय तो वर्षारम्भकालिक समस्त कार्यों का प्रारम्भ, नूतन वर्ष के संवत्सर का नामादि उच्चारण प्रभृति मलमास प्रतिपदा में करना चाहिए; किन्तु ध्वजारोपण, पवित्ररोपण, निम्बपत्रभक्षण, वत्सरादिफलश्रवण, नवरात्रारम्भ, नवरात्रोत्सव निमित्तक समस्त कार्य शुद्ध चैत्रमासारम्भ की प्रतिपदा में करना चाहिए। यह मयूखकार का वचन है।

इस प्रतिपदा में तैलाभ्यंग नित्य कार्य है, जिसे न करना प्रत्यवाय या विघ्नकारक है। देवीनवरात्र का आरम्भ इसी प्रतिपदा में होना चाहिए। यह प्रतिपदा मुहूर्तमात्र परयुता (परदिन में मुहूर्तमात्र भी हो तो) ग्राह्य है। मुहूर्त का प्रमाण दिन व रात्रि के पन्द्रहवें भाग के बराबर होता है। यथा दिन/१५ व रात्रि/१५ = १ मुहूर्त । इस नवरात्रव्रत का पारण शारदीय नवरात्र की भाँति ही होता है। इसी में प्रपा (पनिसरा) का भी प्रारम्भ होता है, जिसका मन्त्र मूल में है। इस मन्त्र से प्रपा प्रारम्भ कर, अनिवार्य रूप से ४ मास चला देना चाहिए। यदि प्रपादान में असमर्थ हो तो नित्य जलकुम्भ दान करना चाहिए। मन्त्र मूल में उक्त है। इसी चैत्रशुक्ल प्रतिपदा में कल्प का प्रारम्भ हुआ है। चैत्र प्रतिपदा मत्स्यावतार की जयन्ती है। इस मास में दही, दूध, घृत, मधु भक्षण त्याग कर और नित्य दम्पति-पूजन कर गौरीव्रत का पालन किया जाता है। राजस्थान में इसे गणगौरि कहते हैं।

**अथ वैशाखकृष्णप्रतिपत्। तत्र प्रातः स्नानम्, तिलैः पितृतर्पणम्, धर्मघटदानम्। अत्रैव गन्धमाल्यपानककदलीफलादिभिर्ब्राह्मणानां वसन्तपूजा। अत्र प्रातरारभ्य गन्धोदके विष्णुं संस्थाप्य, तत्रैव यथालाभोपचारैः सम्पूज्य,**

**अस्तपर्यन्तमधिवास्य, रात्रौ निष्कास्य, स्वस्थाने पूज्य, अधिवासितजलेनात्मानं स्वकुटुम्बञ्च पावयेत्। एवं मासं द्विमासं वा कुर्यात्। द्वादश्यामेतद् दिवा न रात्रौ किञ्चित्कालमधिवास्य पूज्य, पुनः स्वस्थाने पूजा। अत्र मासे तुलस्यास्त्रिकालविष्णुपूजने मुक्तिफलम्। अत्रैव कृतस्नानो बहुतोयेनाश्वत्थसेचनप्रदक्षिणाभ्यां गवां कण्डूयने च दुष्कृतनाशः। अत्रैकभक्तनक्तायाचितव्रतैरिष्टसिद्धिः। अत्रैव गलन्तिकाबन्धनछत्रव्यजनोपानद्दानैरनन्तफलम्। वैशाखे मलमासे सति काम्यानां समाप्तिनिषेधः। वैशाखस्नानहविष्याशनादिस्तु मासद्वयेऽनुष्ठेयः। चान्द्रायणन्तु मलेऽपि समापनीयमिति।**

अथ वैशाखकृष्ण प्रतिपदा – इस प्रतिपदा में प्रातःस्नान, तिल से पितृतर्पण, धर्मघट का दान व गन्ध, माला, पानक (शरबत) जल व कदली-फलादि से ब्राह्मणों की पूजा करके वसन्तपूजन (वेदमन्त्रघोष) कराया जाय और श्रीविष्णु को प्रातः से सूर्यास्तपर्यन्त जल में अधिवास कराया जाय और यथोपलब्ध पूजा की वस्तुओं से भगवान् की पूजा की जाय। रात्रि में विष्णुप्रतिमा को अधिवास के गन्धोदक से निकाल कर यथापूर्व स्थान में स्थापित किया जाय और अधिवासित जल स्वयं और समस्त परिवार को पीने के लिए दिया जाय। इस प्रकार एक या दो मास तक करना चाहिए। द्वादशी तिथि में किसी समय दिन में कुछ क्षण के लिये पूर्ववत् अधिवासित व पूजन कर, पुनः निकालकर अभीष्ट पूज्य स्थान में स्थापित करें। वैशाख मास में तुलसी से त्रिकाल विष्णु की पूजा उपासक को मुक्ति देती है और नित्य स्नान, पीपल का प्रति दिन सिंचन, प्रदक्षिणा व गायों को स्नान कराकर उन्हें सुखी बनाने से त्रिविध ताप का नाश होता है। इसमें एक समय (भक्त) अथवा रात्रि में नक्त (एक बार) अथवा अयाचित भोजनव्रत से इष्ट की सिद्धि होती है। इस मास से शिवजलधारा देनी चाहिए और ब्राह्मणों को आतपत्राण के लिये छाता, पंखा, जूता के दान से अनन्त फल

की प्राप्ति होती है। इस मास में यदि मलमास हो जाय तो काम्य कार्यों, व्रतों की समाप्ति नहीं करनी चाहिए; किन्तु वैशाख स्नान, हविष्यान्न भोजन, दान व नियम दोनों (मलमास व शुद्धमास) मासों तक करना चाहिए तथा चान्द्रायण व्रत की समाप्ति मलमास में भी की जाती है।

**ज्येष्ठशुक्लप्रतिपदि करवीरव्रतम्। ज्येष्ठमासे पिष्टमयीं ब्रह्ममूर्त्तिं वस्त्राद्यैः पूज्य सूर्यलोकप्राप्तिः। अत्रैव जलधेनुदानमिति। अथाषाढे मास्येकभक्तव्रतेन धनधान्यपुत्राद्याप्तिः। अत्रैवोपानच्छत्रलवणामलकानि वामनप्रीत्यै देयानि। भाद्रशुक्लप्रतिपदि शिवप्रीत्यर्थं मौनव्रतम्। अत्रोदयव्यापिनी प्रतिपद् ग्राह्येति।**

ज्येष्ठशुक्ल प्रतिपदा में करवीर व्रत किया जाता है और आटा से ब्रह्मा की मूर्ति बनाकर वस्त्रादि से अलंकृत कर पूजा करने से सूर्यलोक की प्राप्ति होती है।इसी दिन जलधेनुदान भी दिया जाता है। आषाढ़ मास में एकभक्त व्रत से धन-धान्य-पुत्र आदि की प्राप्ति होती है। इसी मास में भगवान् वामन की प्रीति हेतु छत्र, उपानह (जूता), नमक व आँवला – इन पदार्थों का दान देना चाहिए। उदयव्यापिनी भाद्रशुक्ल प्रतिपदा में शिवप्रीत्यर्थ मौनव्रत करना चाहिए।

**अथाश्विनशुक्लप्रतिपदि नवरात्रारम्भः। नवरात्रशब्द आश्विनशुक्लप्रतिपदमारभ्य महानवमीपर्यन्तं क्रियमाणकर्मनामधेयम्। स च सूर्योदयोत्तरं त्रिमुहूर्त्तव्यापिन्यां प्रतिपदि कार्यः। तदभावे द्विमुहूर्त्तव्यापिन्यामपि। क्वचिन्मुहूर्त्तमात्रव्यापिन्यामप्युक्तः। सर्वथा दर्शयुक्तप्रतिपदि न कार्य इति बहुग्रन्थसम्मतम्। मुहूर्त्तन्यूनव्याप्तौ सूर्योदयास्पर्शे वा दर्शयुताऽपि ग्राह्या, प्रथमदिने षष्टिघटिकाप्रतिपद् द्वितीयदिने मुहूर्तद्वयादिपरिमिता चेत्तदा पूर्णत्वात्पूर्वैव, द्वितीयावेधनिषेधोऽप्येतत्पक्षद्वय एव योज्यः। यदा पूर्वदिने मुहूर्त्तचतुष्टयोत्तरं मुहूर्त्तपञ्चकोत्तरं वा प्रवृत्ता द्वितीयदिने मुहूर्त्तद्वयादिपरिमिता**

**प्रतिपत् तदा परस्याः क्षयगामितया निषिद्धत्वादमायुक्ताऽपि पूर्वैव ग्राह्येति पुरुषार्थचिन्तामणिः। तत्र सूर्योदयोत्तरं दशघटीमध्ये तत्रासम्भवे मध्याह्नेऽभिजिन्मुहूर्त्ते प्रारम्भो न त्वपराह्ने, एवं प्रतिपद आद्यषोडशनाडी-निषेधश्चित्रावैधृतियोगनिषेधश्चोक्तकालानुरोधेन सति सम्भवे पालनीयः, न तु निषेधानुरोधेन पूर्वाह्नः प्रारम्भकालः प्रतिपत्तिथिर्वाऽतिक्रमणीय इति।**

आश्विनशुक्ल प्रतिपदा में नवरात्र का आरम्भ होता है। नवरात्र शब्द का अर्थ है – प्रतिपदा से नवमीपर्यन्त क्रियमाण कार्य के सम्पादन का अन्वर्थ नाम। यहाँ सूर्योदय से तीन मुहूर्त व्यापिनी प्रतिपदा ग्राह्य है। तीन के अभाव में दो मुहूर्त या क्वचिद् एक मुहूर्त भी उदयकालिक प्रतिपदा ग्राह्य है। अमावास्यायुक्ता प्रतिपदा सर्वथा त्याज्य है, यह अनेक आचार्यों का मत है। यदि मुहूर्त से न्यून व मात्र सूर्योदय को स्पर्श करती प्रतिपदा है तो भी ग्राह्य है, अन्यथा अमायुक्त भी ग्राह्य है। प्रथम दिन ६० घटी प्रतिपदा है तो द्वितीय दिन मात्र दो मुहूर्त होने पर भी पूर्णत्व की दृष्टि से प्रथम दिन ही ग्राह्य है। द्वितीयाविद्धा प्रतिपदा का निषेध है, यह दोनों पक्षों में देखना चाहिए। यदि पूर्व दिन ४ या ५ मुहूर्त के बाद प्रतिपदा की प्रवृत्ति हुई हो और द्वितीय दिन दो मुहूर्त मात्र प्रतिपदा हो तो द्वितीय दिन वाली प्रतिपदा का क्षयात्मक द्वितीयायोग होने से दर्शयुक्त प्रथम दिन की पूर्वा ही प्रतिपदा ग्राह्य है, अर्थात् ऐसी स्थिति में अमायुक्त प्रतिपदा का निषेध होने पर भी पूर्व की ही प्रतिपदा ग्राह्य है। यह पुरुषार्थचिन्तामणि का मत है। यदि प्रतिपदा सूर्योदय के बाद १० घटी है, तो उसका सम्बन्ध मध्याह्न से न होने पर भी अपराह्न की अपेक्षा मध्याह्नकालिक अभिजित् मुहूर्त में कार्य का प्रारम्भ करना चाहिए। प्रतिपदा की प्रथम षोडश घटी का काल निषिद्ध है व चित्रा-वैधृतियोगकालिक प्रतिपदा भी त्याज्य है, ऐसी स्थिति में उक्त निषेध का पालन

यथासम्भव करना चाहिए; परन्तु मध्याह्नोत्तरकाल के निषेध से दोषयुक्त भी प्रतिपदा व प्रारम्भकाल का अतिक्रमण सम्भव नहीं है।

**अथ कार्तिकशुक्लप्रतिपत्कृत्यम्। अत्राभ्यङ्ग आवश्यकः। अत्र च चतुर्दश्यादिदिनत्रयेऽभ्यङ्गाद्युत्सवस्याकरणे नरकादिदोषश्रवणात् करणे लक्ष्मीप्राप्त्यलक्ष्मीपरिहारादिफलश्रवणाच्च नित्यकाम्योभयरूपत्वम्। अस्यां प्रतिपदि बलिपूजादीपोत्सवो गोक्रीडनं गोवर्द्धनपूजा मार्गपालीबन्धनं यष्टिकाकर्षणं नववस्त्रादिधारणाद्युत्सवो द्यूतं नारीकर्तृकनीराजनं मङ्गलमालिका चेत्येवमादीनि कृत्यानि। तत्र यद्युदयं व्याप्य दशमुहूर्त्ता प्रतिपत्तदा चन्द्रदर्शनाभावाच्चन्द्रदर्शनप्रयुक्तद्वितीयावेधनिषेधाप्रवृत्तेः। सर्वकार्याणि परप्रतिपद्येव भवन्ति। इष्टिनिर्णयप्रकरणे त्रिमुहूर्तद्वितीयाप्रवेशमात्रेण चन्द्रदर्शनमुक्तम्, तत्सूक्ष्मदर्शनाभिप्रायम्, अत्र तु स्थूलदर्शनमेव निषेधप्रयोजकम्, तच्च षण्मुहूर्तद्वितीयाप्रवेश एवेति न विरोधः, यदि नवमुहूर्तो नास्ति तदा बलिपूजा-गोक्रीडा-गोवर्द्धनपूजा-मार्गपालीबन्धन-यष्टिकाकर्षणानि पूर्वविद्धप्रतिपदि कार्याणि, अभ्यङ्ग-नववस्त्रादिधारण-द्यूत-नारीकर्तृकनीराजन-मङ्गलमालिकादीनि औदयिकमुहूर्त्तव्यापिन्यामपि कार्याणि। बलिपूजादेः केनचिन्निमित्तेन पूर्वविद्धायामनुष्ठानासम्भवे परविद्धायामनुष्ठानं न तु कर्मत्यागस्तिथ्यन्तरपरिग्रहो वा, तत्र राजा पञ्चवर्णरङ्गैर्बलिं द्विभुजमालिख्यान्यजनाः शुक्लतन्दुलैर्विरच्य पूजयेयुः, तत्र मन्त्रः—**

**"बलिराज नमस्तुभ्यं विरोचनसुत प्रभो।**
**भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम्"॥**

**बलिमुद्दिश्य यत्किञ्चिद्दानकरणेऽक्षय्यं विष्णुप्रीतिकरं च भवेत्। यदुक्तम्—**

**"यो यादृशेन भावेन तिष्ठत्यस्यां मुनीश्वर।**
**हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि"॥**

कार्त्तिकशुक्ल प्रतिपदा में अभ्यंग (तैल-उबटन आदि का प्रयोग) आवश्यक है। चतुर्दशी से तीन दिन तक अभ्यंगादि उत्सव न

करने से नरक में वास होता है तथा अभ्यंगादि उत्सव करने से लक्ष्मी की प्राप्ति व दरिद्र का निःसारण होता है। नित्य व काम्य दोनों व्रतों के अनुसार इस प्रतिपदा में अभ्यंगादि उत्सव अवश्य करना चाहिए। इसी प्रतिपदा में बलिपूजा, दीपोत्सव, गोक्रीडन, गोवर्धनपूजा, मार्ग-पालीबन्धन, यष्टिकाकर्षण एवं नववस्त्रधारणादि उत्सव, द्यूतक्रीडा (जूआ), नारीकृत नीराजन, मंगलमालिका आदि पर्वकृत्य सम्पन्न किये जाते हैं।

यदि उदय से १० मुहूर्त पर्यन्त प्रतिपदा हो तो वही ग्राह्य है। क्योंकि चन्द्रदर्शन के अभाव में चन्द्रदर्शनप्रयुक्त द्वितीया-वेध निषेध की प्रवृत्ति नहीं है।

सभी कार्य द्वितीय दिन की प्रतिपदा में ही विहित हैं। इष्टिनिर्णय – इष्टि यज्ञ, जो अमा व पूर्णिमा में होता है। द्वितीय दिन तीन मुहूर्त द्वितीया के प्रवेश से चन्द्रदर्शन होता है। किन्तु यह सूक्ष्म दर्शन प्रयुक्त लक्षण है और स्थूल प्रत्यक्ष चन्द्रदर्शन प्रयुक्त द्वितीयावेध प्रतिपदा निषिद्ध है। इसलिए पूर्व दिन छः मुहूर्त तक द्वितीया प्रवेश सम्बन्धी प्रतिपदा का निषेध नहीं है। यदि दूसरे दिन प्रतिपदा नव मुहूर्त से न्यून (कम) है तो पूर्वविद्धा प्रतिपदा में प्रतिपादित समस्त कार्य करना चाहिए। यदि कारणवश पूर्वविद्धा प्रतिपदा में प्रतिपादित कार्य सम्पन्न न हो सके तो प्रतिपदा में विहित समस्त कार्य परविद्धा में किया जाता है। कर्मत्याग व दूसरी तिथि का परिग्रह ग्रहण नहीं करना चाहिए। परविद्धा प्रतिपदा में राजा पाँच रंगों से द्विभुज बलि का आकार बनाकर व सामान्य जन श्वेत चावलों से बलि का आकार बनाकर उसकी पूजा करें। बलिशब्द से राजा बलि की पूजा समझनी चाहिए। पूजन का मन्त्र मूल में अंकित है, मन्त्रार्थ – हे बलिराज, हे विरोचनपुत्र ! हे प्रभो! हे भावी इन्द्र व देवशत्रु आपको नमस्कार है, आप मेरे द्वारा कृत यह पूजा स्वीकार करें।

बलि के उद्देश्य से जो कुछ भी दान होता है वह अक्षय व विष्णु की प्रीति का कारण बनता है। इस दिन बलि पूजा के समय जो व्यक्ति

जिस भाव (हर्ष, आनन्द, शोक या दैन्य आदि) से रहता है उसका समस्त वर्ष उसी भाव से व्यतीत होता है ।

**"अस्यां द्यूतं प्रकर्त्तव्यं प्रभाते सर्वमानवैः ।**
**तस्मिन् द्यूते जयो यस्य तस्य संवत्सरं जयः ॥**
**विशेषवच्च भोक्तव्यं प्रशस्तैर्ब्राह्मणैः सह ।**
**बलिराज्ञे दीपदानात्सदा लक्ष्मीः स्थिरा भवेत् ॥**
**दीपैर्नीराजनादत्र सैषा दीपावलिः स्मृता ।**
**बलिराज्ञे समासाद्य यैर्न दीपावलिः कृता ॥**
**तेषां गृहे कथं दीपाः प्रज्वलिष्यन्ति केशव" ॥ इति स्कान्दे ।**
**अत्र लक्ष्मीकुबेरपूजा च । अत्रैव गोपूजा । तत्र मन्त्रः—**
**"लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता ।**
**घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ॥**
**अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ।**
**गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्" ॥**

**इति मन्त्राभ्यां गवां सवत्सानां बलीवर्दानाञ्च पूजनं विभूषणञ्च कृत्वा दोहनभारवाहनादिकञ्च वर्जयेत् ।**

यदि इस दिन द्यूत में विजय प्राप्त होती है तो पूरा वर्ष विजय व सफलता का होता है । इस दीपावली के दिन ब्राह्मणों को विशिष्ट (उत्तम) पदार्थों का भोजन कराना चाहिए, राजा बलि को दीपदान करने से लक्ष्मी सदा स्थिर रहती हैं और दीपसूमहों (दीपपंक्तियों) से आरती करना दीपावली कही जाती है ।

क्योंकि राजा बलि के आने पर जो दीपोत्सव (दीपावली) नहीं मनाते हैं, हे केशव ! उनके घर में कैसे दीपक जलते रहेंगे, अर्थात् अत्यन्त दरिद्रता आ जाती है, यह स्कन्दपुराण का वचन है । इसी दिन लक्ष्मी व कुबेर की पूजा और गोपूजा होती है । गोपूजन मन्त्र – "बलिराज नमस्तुभ्यं विरोचनसुतप्रभो । भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम्" ॥

इन्हीं मन्त्रों से सवत्सा गो व बैल का पूजन करना चाहिए। वस्त्राभूषण व मालाओं से उनका श्रृंगार करना चाहिए तथा उस दिन उनका दोहन व उनसे कोई कार्य नहीं लेना चाहिए।

**श्रीकृष्णप्रीत्यर्थं गोवर्द्धनपूजा। तत्र मन्त्रः—**

**"बलिराज्ञो द्वारपाल भवानद्य भव प्रभो।**
**निजवाक्यार्थनार्त्थाय सगोवर्द्धनगोपते"॥**

**इति मन्त्रेण सगोवर्द्धनं गोपालमावाह्य पूजयेत्। तत्र मन्त्रः—**

**"गोपालमूर्ते विश्वेश शक्रोत्सवविभेदक।**
**गोवर्द्धनकृतच्छत्रपूजां मे हर गोपते॥**
**गोवर्द्धनधराधारगोकुलत्राणकारक।**
**विष्णुबाहुकृतच्छाय गवां कोटिप्रदो भव"॥**

**इति मन्त्राभ्यां गोपालगोवर्द्धनौ षोडशोपचारैः पूजयेत्। ततो यथाविभवं महानैवेद्यो देयः। अत्रैवापराह्णे कुशकाशनिर्मितां मार्गपालीं पूर्वस्यां दिशि वृक्षे स्तम्भे वा बध्वा विप्रादयः सर्वे वर्णास्तत्समीपे गत्वा प्रार्थयेयुः—**

**"मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे।**
**विधेयैः पुत्रदाराद्यैः पुनरेहि वृतस्य मे"॥**

**इति प्रार्थ्य सर्वे तां समुल्लंघेयुः। अस्या लंघने नीरुजत्वम्। अत्रैव कुशकाशमयीं यष्टिकां दृढां कृत्वा एकतो राजपुत्राः, अन्यत्र हीनजातयो जयज्ञानार्थमाकर्षेयुः। अत्र हीनजातिजये राजजयः। दूतकार्यं प्रातरेव, एवं नारीभिर्नीराजनं प्रातरेव विधेयमिति।**

भगवान् श्रीकृष्ण की प्रसन्नता हेतु गोबर या अन्न का गोवर्द्धन बनाकर गोवर्द्धन व गोपाल की पूजा करनी चाहिए। "बलिराज्ञो" से प्रारम्भ करके "गोवर्द्धनगोपते" इस मन्त्र से गोवर्द्धन सहित गोपाल का आवाहन और "गोपालमूर्ते कोटिप्रदो भव" इन मन्त्रों से दोनों का षोडशोपचार से पूजा और यथाशक्ति वैभव के अनुकूल महाप्रसाद के रूप में नैवेद्य का अर्पण करना चाहिए। इसी दिन कुश व काश

की बनाई मार्गपाली पूर्व दिशा के वृक्ष या स्तम्भ में बाँधकर ब्राह्मण आदि सभी वर्ण उसके समीप जाकर प्रार्थना करें ।"मार्ग पालि.....वृतस्य मे" इस मन्त्र से प्रार्थना करके सभी उसका उल्लंघन करें, इसके उल्लंघन से आरोग्य-लाभ होता है और इसी दिन कुश-काश निर्मित यष्टिका को रज्जु (रस्सी) से दृढ़ करके एक भाग से राजपुत्र व दूसरे भाग से हीन जातियाँ आकर्षण करें, हीन जाति की विजय से राजा की जय सूचित होती है। पुनः प्रातः द्यूत-कार्य व स्त्रियों द्वारा नीराजन भी होना चाहिए।

**अथ माघस्नानम्। तदारम्भस्तु पौषपूर्णायां कूपे तडागे नद्यां महानद्यां समुद्रे च यथोत्तरं पुण्याधिक्यम्। तत्रादौ तीर्थग्रहणमधिकारिणश्च ब्रह्मचारिगृहस्थ-वानप्रस्थसंन्यासिबालयुववृद्धनरनारीनपुंसकाः, कालस्तु अरुणोदयात्प्रातःकाला-वधि, यच्च –**

**"उत्तमं तु सनक्षत्रं लुप्ततारं च मध्यमम्।**
**सवितर्युदिते भूप ततो हीनं प्रकीर्त्तितम्"॥ इति। तीर्थग्रहणमन्त्रस्तु –**
**"माघमासमिमं पुण्यं स्नास्येऽहं देव माधव।**
**तीर्थस्यास्य जले नित्यम्....."॥ इति सङ्कल्प्य चेतसीति गृहीततीर्थे मासं स्नायात्। स्नानमन्त्रस्तु –**

**"दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च।**
**प्रातःस्नानं करोम्यद्य माघे पापविनाशनम्॥**
**मकरस्थे रवौ माघे गोविन्दाच्युत माधव।**
**स्नानेनानेन मे देव यथोक्तफलदो भव।**
**इमौ मन्त्रौ समुच्चार्य स्नायान्मौनसमन्वितः"॥**

**प्रत्यहं सूर्यार्घमन्त्रस्तु –**

**"सवित्रे प्रसवित्रे च परंधाम जले मम।**
**त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा"॥**

**एवं स्नात्वा पितॄन् सन्तर्प्य माधवं पूज्य हविष्याशी भूमिशायी ब्रह्मचर्यपरस्तिलाज्यहोमी मासं नीत्वा व्रतं समापयेदिति।**

**अन्यमासि प्रतिपत्सु व्रतादिविशेषो न प्रसिद्धः। यदि स्यात्तदा पूर्वविद्धायामेव कार्य इति सिद्धान्तः। इति प्रतिपन्निर्णयः समाप्तः।**

माघ-स्नान पौषशुक्ल पूर्णिमा से प्रारम्भ करना चाहिए। कूप, तालाब, नदी, महानदी (गंगा प्रभृति) व समुद्र के स्नान से यथोत्तर फल की वृद्धि होती है। प्रथम तीर्थग्रहण करना चाहिए (जहाँ पर पूरा माघ स्नान कर सकें उस स्थान, जलाशय को तीर्थ कहते हैं), उसकी प्रतिज्ञा को तीर्थग्रहण कहते हैं। स्नान के अधिकारी आबाल-वृद्ध-स्त्री-वनी-त्यागी आदि सभी हैं। समय - तारायुक्त प्रातःकाल का स्नान उत्तम, लुप्ततारक प्रातःकाल का स्नान मध्यम, सूर्योदय के बाद का स्नान हीन माना गया है। तीर्थग्रहण मन्त्र – ''माघमासमिमं... चेतसि'' ।। इस मन्त्र से तीर्थ ग्रहण कर (मन में तीर्थ का स्मरण कर) पूरा मास स्नान करना चाहिए। स्नान का मन्त्र – ''दुःखदारिद्र्यनाशाय ... यथोक्तफलदो भव'' ।। इन दो मन्त्रों को पढ़कर मौन स्नान करें और प्रतिदिन सूर्यार्घ्य मन्त्र पढ़कर सूर्य को अर्घ देवें – ''सवित्रे प्रसवित्रे च.... सहस्रधा'' ।। इस प्रकार स्नान कर पितरों का तर्पण, माधव की पूजा, हविष्यान्न भोजन, भूमिशयन, ब्रह्मचर्य-धारण, तिल और घी की आहुति पूरा मास करते हुये व्रत का समापन किया जाय।

दूसरे मासों की प्रतिपदा में किसी व्रत की प्रसिद्धि नहीं है। यदि है तो पूर्वविद्धा प्रतिपदा को ही ग्रहण करना सिद्धान्त रूप में मान्य है।

**अथ द्वितीयायाः सामान्यनिर्णयः। द्वितीया शुक्लपक्षे परविद्धा ग्राह्या। कृष्णपक्षे द्वेधाविभक्तदिनपूर्वभागात्मकपूर्वाह्ने प्रविष्टा चेत् पूर्वा ग्राह्या, अन्यथा तु कृष्णपक्षेऽपि परविद्धैव। अथ विशेषनिर्णयः – चैत्रकृष्णद्वितीयायां सुशोभिते देशे रम्यासनस्थः पौरजानपदान् लोकान् सिन्दूरादिक्षोदैश्चन्दनादिभिर्विकीर्य्य तेभ्यस्ताम्बूलादि दत्वा नृत्यगीतविनोदैर्महोत्सवं कुर्यात्।**

द्वितीया का सामान्य निर्णय – शुक्लपक्ष की द्वितीया परविद्धा ग्राह्य है। कृष्णपक्ष में दिनमान के दो भागों में यदि द्वितीया का प्रथम भाग पूर्वाह्न में प्रविष्ट है, तो पूर्वविद्धा, अन्यथा कृष्णपक्ष में भी परविद्धा ही ग्राह्य है।

चैत्रकृष्ण द्वितीया में विशेष नियम यह है कि सुन्दर रमणीय स्थान में बैठकर ग्राम, नगर के प्रतिष्ठित व्यक्तियों को सिन्दूर मिश्रित (लाल, पीले) अनुलेपनों से चर्चित व अलंकृत करना व ताम्बूल देकर उनके साथ नृत्य-गीत-विनोद के साथ उत्सव मनाना चाहिए।

**चैत्रशुक्लद्वितीयायाम् उमाशिववह्निपूजा च कार्य्या। सा तृतीयायुतैव ग्राह्या। अस्यामेव निशामुखे बालेन्दुपूजनात्मकं चन्द्रव्रतम्। व्रतेऽपरयुतैव। अस्यामेव दमनकेन गौरीशिवपूजनम्। आषाढशुक्लद्वितीयायां पुष्यनक्षत्रयुतायां केवलायां वा श्रीरामस्य रथोत्सवः। श्रावणादिकृष्णद्वितीयासु चतुर्षु पूर्वविद्धासु अशून्यशयनव्रतं कार्य्यम्। कार्तिकशुक्लद्वितीया यमद्वितीया। इयं पूर्वेद्युरेवापराह्णव्याप्तौ पूर्वा, उभयत्र व्याप्त्या व्याप्तिपक्षान्तरेषु परैव। अस्यां यमुनास्नानम्, अपराह्णे चित्रगुप्तयमदूतसहितयमपूजनं यमायार्घ्यदानं च विहितम्। अस्यामेव भगिनीभिर्भ्रातरो भोजनीयाः, भगिन्यश्च वस्त्रालङ्कारादिभिः सत्कार्याः, भगिन्यभावे प्रतिपन्नकाः पूज्याः। अस्यां भगिनीभिर्भ्रातुरायुर्वृद्धये चिरजीविनः पूज्याः, ते च—**

**"अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः।**
**कृपः परशुरामश्च सप्तैते चिरजीविनः"॥ इति।**

**एतान्पूज्य भ्रातुराशिषं प्रार्थयेत्। एतदकरणे सप्तजन्मसु भ्रातृनाशः। यच्च—**

**"यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयम्।**
**अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर॥**
**अस्यां निजगृहे क्वापि न भोक्तव्यं ततो बुधैः।**
**स्नेहेन भगिनी-हस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्।**
**दानानि च प्रदेयानि भगिनीभ्यो विधानवित्।**
**सर्वा भगिन्यः सम्पूज्या अभावे प्रतिपन्नकाः"॥ इति।**

**पक्षद्वयगतासु चतुर्विंशतिस्वपि द्वितीयासु सर्वोपचारैर्ब्रह्मा पूज्यः। इति द्वितीया।**

चैत्रशुक्ल द्वितीया में शिव-गौरी व अग्नि की पूजा करनी चाहिए। यह तृतीयासंयुक्त द्वितीया ग्राह्य है। इसी द्वितीया में सायंकाल बालचन्द्र

का पूजनरूप व्रत होता है। इसी में दवना से शिव-गौरी की पूजा करनी चाहिए (दमनक सुगन्धित लघु पौध विशेष है)। यह द्वितीया अपरा ही ग्राह्य है। आषाढ़शुक्ल द्वितीया यदि पुष्य नक्षत्र से युक्त हो अथवा न भी हो तो भी इसमें रामरथोत्सव मनाया जाता है। श्रावणादि चार मासों के कृष्णपक्षों की पूर्वविद्धा द्वितीया में अशून्यशयनव्रत (जागरण) किया जाता है। कार्तिकशुक्ल द्वितीया यम-द्वितीया कही जाती है। यह पूर्वदिन अपराह्णव्यापिनी ग्राह्य है। अन्यथा पूर्वदिन की ही द्वितीया का ग्रहण करना चाहिए। यदि दोनों दिन अपराह्ण व्याप्ति हो तो पर दिन वाली द्वितीया ग्राह्य है।

इस दिन यमुनास्नान व अपराह्ण में चित्रगुप्त व यमदूत सहित यम की पूजा की जाती है। यम को अर्घ देने का भी विधान है। इसी दिन बहन भाइयों को भोजन कराती हैं और भाइयों द्वारा बहन वस्त्रालङ्कारादि से सम्मानित की जाती हैं। भगिनी (बहन) के अभाव में तत्सदृश की पूजा करनी चाहिए। इसी दिन बहनें भाइयों के आयुष्यवृद्धि के लिए सप्त चिरंजीवी देव-मानव व ऋषियों – अश्वत्थामा, बलि, व्यास, हनुमान्, विभीषण, कृपाचार्य व परशुराम – की पूजा भी करती हैं और इनकी पूजा करके भाइयों के लिए आशीष की प्रार्थना करती हैं, ऐसा न करने पर सात जन्म तक भाई का नाश होता रहता है। पूर्वकाल में यमुना ने अपने भाई यमराज को अपने घर स्वयं भोजन कराया था, इसलिए इसे यमद्वितीया कहते हैं। इसमें भाई को अपने घर भोजन नहीं करना चाहिए। प्रेम से बहन के हाथ से भोजन करने से पुष्टि होती है। दोनों पक्षों के चौबीसों द्वितीया में सर्वोपचारपूर्वक ब्रह्मा की पूजा का भी विधान है।

**अथ तृतीयासामान्यनिर्णयः। तृतीया रम्भाव्रते पूर्वविद्धा ग्राह्या, रम्भाव्यतिरिक्तव्रतेषु त्रिमुहूर्त्तद्वितीयापि पूर्वां त्यक्त्वा परदिने त्रिमुहूर्त्तव्यापिनी ग्राह्या। पूर्वदिने त्रिमुहूर्त्तन्यूनद्वितीयावेधे परदिने त्रिमुहूर्त्तव्याप्त्यभावे पूर्वा ग्राह्या। पूर्वदिने त्रिमुहूर्त्तद्वितीयावेधे परदिने त्रिमुहूर्त्तन्यूनाऽपि ग्राह्या। गौरीव्रते तु कलाकाष्ठादिपरिमितस्वल्पद्वितीयायुक्ताऽपि निषिद्धा। परदिने कलाकाष्ठादि-**

**परिमिता स्वल्पाऽपि तृतीया परिग्राह्या। यदा तु दिनक्षयवशात् परदिने स्वल्पाऽपि चतुर्थीयुता तृतीया न लभ्यते, पूर्वदिने च द्वितीयाविद्धा, तदा द्वितीयाविद्धैव ग्राह्या। यदा च दिनवृद्धिवशात्पूर्वदिने षष्टिघटिकातृतीया परदिने च घटिकादिशेषवती तदा पूर्वां शुद्धां षष्टिघटिकामपि त्यक्त्वा चतुर्थीयुतैव गौरीव्रते ग्राह्येति सामान्यनिर्णयः।**

तृतीया का सामान्य निर्णय। रम्भाव्रत में तृतीया पूर्वविद्धा ग्राह्य है। अन्य व्रतों में तीन मुहूर्त द्वितीयाविद्धा तृतीया का त्याग व पर दिन तीन मुहूर्त व्यापिनी तृतीया ग्राह्य है। यह प्रथम पक्ष है। पूर्व दिन द्वितीया तीन मुहूर्त से न्यून और पर दिन तृतीया तीन मुहूर्त से न्यून हो तो पूर्व दिन वाली तृतीया ग्राह्य है। यह द्वितीय पक्ष है। पूर्व दिन द्वितीया से तीन मुहूर्त विद्धा और दूसरे दिन तृतीया के तीन मुहूर्त से न्यून होने पर भी द्वितीय दिन वाली तृतीया ग्राह्य है। यह तृतीय पक्ष है। गौरीव्रत में कलाकाष्ठापरिमित स्वल्प द्वितीयायुक्त भी तृतीया त्याज्य है, अर्थात् कलातुल्य द्वितीयायुक्त भी तृतीया त्याज्य है। पर दिन कलामात्र स्वल्पा भी तृतीया चतुर्थीयुता ग्राह्य है। यह चतुर्थ पक्ष है। दिनक्षयवश दूसरे दिन थोड़ी भी तृतीया चतुर्थीयुक्त न हो तो पूर्व दिन द्वितीयाविद्धा तृतीया लेनी चाहिए। यह पंचम पक्ष है। तिथिवृद्धि के अनुसार पूर्व दिन तृतीया ६० घटी और दूसरे दिन घटी मात्र भी चतुर्थीयुक्ता तृतीया गौरीव्रत में ग्राह्य है, साठ घटिकात्मक पूर्ण भी पूर्व दिन की तृतीया त्याज्य है, यह षष्ठ पक्ष है, यह तृतीया का सामान्य नियम है।

**विशेषनिर्णयस्तु— चैत्रशुक्लतृतीया आन्दोलनाख्या। सा मुहूर्तमात्राऽपि परा द्वितीयायुक्ता न कार्या, चतुर्थीयुतायां वैधृत्यादियोगेऽपि सैव द्वितीया योगनिषेधस्य बलवत्वात्। अस्यां सौवर्णी द्विभुजा गौरी राजतश्चतुर्भुजः शिवः। उभावपि कुङ्कुमागरुकर्पूरस्रग्गन्धधूपदीपैः सम्पूज्य दोलायामान्दोलने रात्रौ जागरणे च शिवगौरीतुष्टिः, तेनाभीष्टसिद्धिः। अस्यामेव श्रीरामचन्द्रस्य तथा देवतान्तराणामपि दोलोत्सवं कार्यम्। इयमेव मन्वादिरपि।**

विशेष निर्णय – चैत्रशुक्ल तृतीया में आन्दोलनाख्य व्रत होता है, यह मुहूर्त मात्र भी परा ग्राह्य व द्वितीयायुक्त त्याज्य है। चतुर्थीयुक्त तृतीया यदि वैधृतियोग से युक्त भी हो तो भी यही ग्राह्य है और द्वितीयायुता त्याज्य है। इसमें सुवर्ण की द्विभुज गौरी और चाँदी की चतुर्भुज शिवमूर्ति बनाकर कुंकुम, अगरु, कपूर, माला, गन्ध, धूप, दीप से पूजन करके दोला पर बैठाकर झुलाने व रात्रिजागरण करने से शिवगौरी की तुष्टि होती है और व्रती के अभीष्ट की पूर्ति होती है। इसी दिन श्रीरामचन्द्र का व अन्य देवों का भी दोलनोत्सव मनाना चाहिए। यही तिथि (मन्वादि) आदि मनु की तिथि है।

**अथ वैशाखशुक्लतृतीयाऽक्षयतृतीया। सा पूर्वाह्णव्यापिनी। शुक्ले पूर्वाह्णिकी कृष्णेऽपराह्णिकी ग्राह्या। अत्र रोहिण्यृक्षे श्रीशिवं पूज्य जलकुम्भदानेन शिवलोकप्राप्तिः। दानमन्त्रश्च –**

**"एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः।**
**अस्य प्रदानात्तृप्यन्तु पितरो मे पितामहाः॥**
**गन्धोदकतिलैर्मिश्रं सान्नं कुम्भसदक्षिणम्।**
**पितृभ्यः सम्प्रदास्यामि तेषां समुपतिष्ठतु"॥**

**वैशाखशुक्लतृतीयायां गङ्गास्नानं यवहोमो यवदानं यवाशनं च सर्वपापहरम्। अस्यामक्षयाख्यायां यत्किञ्चिज्जपहोमपितृतर्पणं दानादि क्रियते तत्सर्वमक्षयम्। रोहिणीबुधयोगे महापुण्या। इयं कृतयुगस्यादिः। अत्र युगादिश्राद्धम-पिण्डकमनुष्ठेयम्, तदसम्भवे तिलतर्पणमवश्यम्, तदा पितॄणामक्षयतृप्तिः। युगादौ समुद्रस्नानं महाफलम्। अत्राधिमाससत्त्वे मासद्वयेऽपि श्राद्धं कार्यम्। अत्रोपवासश्चातिफलदः। इयमेव परशुरामजयन्ती। सा प्रथमयामव्यापिनी ग्राह्या। पूर्वेद्युरेव प्रथमयामव्याप्तौ पूर्वा, दिनद्वये रात्रिप्रथमयामे साम्येन वैषम्येण वैकदेशव्याप्तौ परा। अत्र प्रदोषे परशुरामं सम्पूज्यार्घं दद्यात्। तत्र मन्त्रः –**

**"जमदग्निसुतो वीर क्षत्रियान्तकर प्रभो।**
**गृहाणार्घ्यं मया दत्तं कृपया परमेश्वर"॥ इति।**

वैशाखशुक्ल तृतीया अक्षयतृतीया कही जाती है। यह शुक्ल तृतीया पूर्वाह्णव्यापिनी ग्राह्य है। रोहिणीयुक्त तृतीया में शिव की पूजा व जलकुम्भ-दान से शिवलोक की प्राप्ति होती है।''एष धर्मघटो०'' इत्यादि मन्त्र से जलकुम्भ का दान करना चाहिए। इसी तृतीया में गंगास्नान, यवदान, यवहोम व यवचूर्ण भक्षण करने से सभी पाप नष्ट हो जाते हैं। इस अक्षय तृतीया में जो कुछ जप, दान, होम और पितृतर्पणादि किया जाता है, उसका कभी नाश नहीं होता। यदि रोहिणी-बुध से युक्त तृतीया हो तो महान् पुण्यकारक योग होता है। यह युगादि (सतयुग के आदि की) तिथि है।

इसमें आमान्न श्राद्ध करने से पितरों की अक्षय तृप्ति होती है। इस तिथि में पिण्डदान श्राद्ध के स्थान पर सुपात्र ब्राह्मण को आमान्न (सीधा) देना चाहिए। यदि यह सम्भव न हो तो देवर्षि-पितरों का तिलतर्पण अवश्य करना चाहिए; क्योंकि इससे भी पितरों की अक्षय्य तृप्ति होती है। युगादि तिथि में समुद्र स्नान से महापुण्य फल प्राप्त होता है। इस मास में अधिमास होने पर दोनों मासों में श्राद्ध करना श्रेयस्कर है। इसमें उपवास का भी अधिक फल है। यही परशुराम जयन्ती भी है। यह प्रथमयामव्यापिनी ग्राह्य (याम=प्रहर) है। यदि पूर्वदिन प्रथम याम व्याप्ति है तो वही ग्राह्य है। दोनों दिन रात्रि के प्रथम याम में समान रूप से व्याप्ति है तो पूर्वा और एक याम की व्याप्ति में विषमता है, तो परा ग्राह्य है। विषम का अर्थ है – प्रहर के किसी भाग से युक्त होना। इसमें सायंकाल परशुराम की पूजा करके अर्घ देना चाहिए। अर्घ का मन्त्र – ''जमदग्निसुतो०'' इत्यादि है।

**अथ ज्येष्ठशुक्लतृतीयायां रम्भाव्रतम्। सा पूर्वविद्धा ग्राह्या। यत्र पूर्वविद्धा ग्राह्यतया उच्यते तत्रास्तात्पूर्वं द्विमुहूर्ताधिकाया ग्राह्यत्वं ज्ञेयम्, न न्यूनायाः। तत्रापि यदि परे सूर्य्यास्तमयपर्यन्तं पूर्वविद्धायास्तिथेः सत्त्वे तदा सत्यपि पूर्वविद्धाग्राह्यत्ववचने पूर्वविद्धां त्यक्त्वा अखण्डत्वाच्छुद्धत्वात्परैव ग्राह्या, यदा तु ग्राह्यायाः पूर्वविद्धायाः पूर्वेद्युश्चास्तमयात् प्राक् समाप्तत्वं तदापि परैव ग्राह्या।**

**एवं सर्वत्र बोध्यम्। रम्भाव्रते पञ्चाग्निपरा स्त्री पुमान्वा सूर्य्योदये स्नात्वा व्रतं सङ्कल्प्य चतसृषु कुण्डेषु स्थण्डिलेषु वाग्नीन् संस्थाप्य पञ्चमो भास्कर इति पञ्चाग्निमध्ये वेदिकायां रम्भास्तम्भोपशोभितां पुष्पमण्डपिकां कृत्वा, तत्र देवीं स्वर्णप्रतिमामयीमावाह्य यथालब्धोपचारैर्नाममन्त्रैः पूज्य, सूर्यास्तमयपर्यन्तं तिष्ठेत्। ब्राह्मणादिभिः सौभाग्यद्रव्याणि हुत्वा चतुर्थ्यां द्विजदाम्पत्यं भोजयित्वा आचार्याय दक्षिणां दत्वा व्रतं समापयेदिति।**

ज्येष्ठशुक्ल तृतीया में रम्भाव्रत का विधान है। यह पूर्वविद्धा ग्राह्य है, इसमें पूर्वविद्धा का लक्षण – सूर्यास्त के पूर्व दो मुहूर्त से अधिक होने पर पूर्वा, न्यून होने पर नहीं। इसमें यदि दूसरे दिन तृतीया सूर्यास्त-पर्यन्त हो तो पूर्वविद्धा होने पर भी पर दिन सूर्यास्तवर्तिनी तृतीया ग्राह्य है। यदि पूर्वविद्धा तृतीया सूर्यास्त के पूर्व ही समाप्त हो जाती है तो परा ही ग्राह्य है। रम्भाव्रत में सर्वत्र इस नियम का पालन करना चाहिए।

पञ्चाग्निपरायण स्त्री या पुरुष सूर्योदय के समय स्नान-व्रत का संकल्प कर चार कुण्ड या चार वेदी पर चार अग्नि व पाँचवा अग्नि सूर्य को मानकर इस पञ्चाग्नि के मध्य वेदी को केले के स्तम्भों व पुष्पों से सुसज्जित कर स्वर्णमय देवी की प्रतिमा पर देवी का आवाहन कर यथोपलब्ध पूजन सामग्रियों से नाममन्त्रों के द्वारा पूजन करके व्रती सूर्यास्त तक इष्टचिन्तनपूर्वक काल व्यतीत करे और ब्राह्मणों के माध्यम से सौभाग्य द्रव्यों की आहुति देकर चतुर्थी में द्विजदम्पति को भोजन करावे और आचार्य को दक्षिणा देकर व्रत समाप्त करे। यह तृतीया में रम्भाव्रत का विधान है।

**अथ भाद्रशुक्लतृतीया हरितालिका। सा च मुहूर्तमात्रा। ततो न्यूनाऽपि परा ग्राह्या। यदा क्षयवशात् परदिने नास्ति, तदा द्वितीयायुताऽपि ग्राह्या, यदा तु शुद्धाधिका तदा पूर्वदिने षष्टिघटिकामितामपि त्यक्त्वा परदिने स्वल्पाऽपि चतुर्थीयुतैव ग्राह्या, गणेशप्राशस्त्यात्। दिवोदासीये तु –**

**"आद्या मधुश्रावणिका कज्जली हरितालिका।**

**चतुर्थीमिश्रिता स्त्रीभिर्दिवानक्तं विधीयते॥**

तृतीया नभसः शुक्ला मधुश्रावणिका स्मृता।
भाद्रस्य कज्जली कृष्णा शुक्ला तु हरितालिका'' ॥ इति।

अस्यां गौरीशङ्करपूजनमुपवासश्च स्त्रीणां नित्यः। अत्र नैवेद्यं तु गुडापूपम् –

''माघशुक्लतृतीयायां गुडस्य लवणस्य च।
दानं श्रेयस्करं राजन् स्त्रीणां पुरुषस्य च।
गुडेन तुष्यते देवी लवणेन स्वयं शिवः'' ॥

सर्वा तृतीया चतुर्थीयुतैवेति सिद्धान्तः। इति तृतीयानिर्णयः।

भाद्रशुक्ल तृतीया – यह हरितालिका व्रत के नाम से प्रसिद्ध है। यह तृतीया एक मुहूर्त या एक से भी न्यून परा ग्राह्य है। यदि क्षय होने से दूसरे दिन तृतीया न हो तो द्वितीया से पूर्वविद्धा ही ग्रहण की जाएगी। वृद्धि होने पर पूर्व दिन साठ घटी होने पर भी परा स्वल्पा भी तृतीया गणेशपरक होने से चतुर्थीयुता तृतीया ग्रहण की जाएगी; किन्तु दिवोदास के अनुसार आद्या (पूर्वा) ग्राह्य है। मधुश्रावणिका, कज्जली, हरितालिका – ये चतुर्थीयुता तृतीया व्रतादि में प्रशस्त है और स्त्रियाँ इसी तिथि में दिन व रात्रि व्रत करती हैं। ''श्रावणशुक्ल तृतीया मधुश्रवा, भाद्रकृष्ण तृतीया कज्जली व भाद्रशुक्ल तृतीया हरितालिका कही जाती है''। इसमें गौरीसहित शंकर की पूजा में गुडापूप (गुलगुला) का भोग लगता है। स्त्री-पुरुष दोनों को माघशुक्ल तृतीया में गुड़ व लवण (नमक) दान करना चाहिए। गुड़ से देवी व लवण से शिव प्रसन्न होते हैं। सभी तृतीया चतुर्थीयुता ही ग्रहण की जाती है।

अथ चतुर्थीनिर्णयः साधारणेन। चतुर्थी गणेशव्रतातिरिक्तोपवासकार्ये पञ्चमीयुता ग्राह्या, गौरीविनायकव्रतयोस्तु मध्याह्नव्यापिनी ग्राह्या, परदिन एव मध्याह्नव्यापिनी चेत्परैव, दिनद्वये मध्याह्नव्यापित्वे दिनद्वये मध्याह्नव्याप्त्यभावे साम्येन वैषम्येण वा एकदेशे व्याप्तौ च पूर्वैव, तृतीयायोगप्राशस्त्यात्। नागव्रते तु पूर्वदिन एव मध्याह्नव्यापिनी चेत् पूर्वैव, उभयदिनमध्याह्नव्याप्त्यादि-

**पक्षचतुष्टये पञ्चमीयुतैव ग्राह्या। सङ्कष्टचतुर्थी तु चन्द्रोदयव्यापिनी ग्राह्या, परदिन एव चन्द्रोदयव्याप्तौ परैव, उभयदिने चन्द्रोदयव्यापित्वे तृतीयायुतैव ग्राह्या, दिनद्वये चन्द्रोदयव्याप्त्यभावे परैवेति।**

अथ साधारण चतुर्थीनिर्णय– चतुर्थी गणेशव्रतातिरिक्त उपवास कार्यों में पञ्चमीयुता ग्राह्य है। गौरी व विनायक व्रत में मध्याह्नव्यापिनी चतुर्थी ग्राह्य है। दूसरे दिन मध्याह्नव्यापिनी हो तो वही ग्राह्य है। दोनों दिन मध्याह्नव्यापिनी में समता या अव्याप्ति में वैषम्य हो तो तृतीया-योग के प्राशस्त्य से मध्याह्नमान के किसी भाग से युक्त पूर्वा ही ग्राह्य है।

नागव्रत में यदि पूर्व दिन मध्याह्नव्यापिनी हो तो पूर्वा ही ग्राह्य है। यदि दोनों दिन चारों प्रकार की मध्याह्नव्यापिनी है, तो ये चारों पंचमीयुता ही ग्राह्य हैं। संकष्ट चतुर्थी तो चन्द्रोदय-व्यापिनी ही ग्राह्य है। यदि दूसरे दिन चन्द्रोदय-व्यापिनी हो तो दूसरे दिन वाली चतुर्थी ग्राह्य है। दोनों दिन चन्द्रोदय-व्याप्ति हो तो तृतीयायुता और यदि दोनों दिन चन्द्रोदय-व्याप्ति का अभाव हो तो परा ग्राह्य है।

**अथ विशेषनिर्णयः। अथ चैत्रशुक्लचतुर्थी। अस्यां मध्याह्नव्यापिन्यां लड्डुकादिभिः श्रीगणेशमभ्यर्च्य सर्वान् कामानवाप्नोति। अस्यामेव वार्षिक-विघ्नशमनार्थं दमनकपूजा। ज्येष्ठशुक्लचतुर्थ्यामुमावतारः, तत्र स्त्रीभिः सौभाग्य-वृद्धये नानाविधैरुपचारैर्जागरणनृत्यगीतोत्सवैर्दुग्धहोमैर्वस्त्रदानैश्चोमा पूज्येति।**

चतुर्थी का विशेष निर्णय– चैत्रशुक्ल मध्याह्नव्यापिनी चतुर्थी में सर्वोपचार से अर्चन व गुड़, लड्डुओं से श्रीगणेश को नैवेद्य अर्पण करने से सभी कामना पूर्ण हो जाती है। इसी में वार्षिक विघ्नशान्ति हेतु दमनक पूजा भी की जाती है। ज्येष्ठशुक्ल चतुर्थी में उमा का अवतार हुआ है, इसमें सौभाग्यवती स्त्रियों को नानाविध उपचारों से पूजन व जागरणादि तथा नृत्य, गीत, उत्सव, दुग्धहोम, वस्त्रदानादि से उमा की पूजा करनी चाहिए। इससे उनके सुखसौभाग्य में वृद्धि होती है।

अथ श्रावणकृष्णचतुर्थ्यां चन्द्रोदयव्यापिन्यामेकविंशतिवर्षसाध्यं सङ्कष्टव्रतमिति श्रावणशुक्लचतुर्थी मध्याह्नव्यापिनी पूर्वयुता ग्राह्या। गणेशव्रते तृतीयायुता चन्द्रोदयव्यापिनी सङ्कष्टाख्या। यत्तु—

"श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये।

तस्मिन्दिने व्रतं कार्यं सङ्कष्टाख्यं सुरेश्वरि"॥ इति स्कान्दे।

भाद्रशुक्लचतुर्थी शिवाख्या, तस्यां सिद्धिविनायकव्रतम्। सा मध्याह्नव्यापिनी ग्राह्या। दिनद्वये साकल्येन मध्याह्नव्याप्तावव्याप्तौ वा पूर्वा। दिनद्वये साम्येन वैषम्येण वैकदेशव्याप्तावपि पूर्वैव। वैषम्येण व्याप्तावधिकव्यापिनी चेत् परेति केचित्। पूर्वदिने सर्वथा मध्याह्नस्पर्शो नास्त्येव, परदिन एव मध्याह्नस्पर्शिनी, तदैव परा, पूर्वदिन एकदेशेन मध्याह्नव्यापिनी, परदिने सम्पूर्णमध्याह्नव्यापिनी तदा परैव। एवं मासान्तरेऽपि निर्णयः। सा चतुर्थी त्रिधेति भविष्ये। शिवा शान्ता सुखा चेति। भाद्रशुक्ले शिवा, माघशुक्ले शान्ता, सा भौमवारयुता चेत् सुखा, सैव रविवारयुता महाचतुर्थी। अत्र चतुर्थ्यां चन्द्रदर्शने मिथ्याभिदूषणं दोषः, तेन चतुर्थ्यामुदितस्य पञ्चम्यां दर्शनं विनायकव्रतदिनेऽपि न दोषाय। पूर्वदिने सायाह्नमारभ्य प्रवृत्तायां चतुर्थ्यां विनायकव्रताभावेऽपि पूर्वेद्युरेव चन्द्रदर्शने दोष इति सिद्ध्यति, चतुर्थ्यामुदितस्य न दर्शनमिति पक्षे त्ववशिष्टपञ्चषण्मुहूर्तमात्रचतुर्थीदिनेऽपि निषेधापत्तिः, इदानीं लोकास्त्वेकतरपक्षाश्रयेण विनायकव्रतदिन एव चन्द्रं न पश्यन्ति, न तूदयकाले दर्शनकाले वा चतुर्थीसत्त्वासत्त्वे नियमेनाश्रयन्ति, दर्शने जाते तद्दोषशान्तये विष्णुपुराणोक्तं मन्त्रं जपेत्—

"सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः।

सुकुमारकमारोदीस्तव ह्येष स्यमन्तकः"॥

अस्यां मृण्मयादिगणेशमूर्तौ प्राणस्थापनपूर्वकं षोडशोपचारैः सम्पूज्यैकमोदकेन नैवेद्यं दत्वा एकविंशतिदूर्वा गृहीत्वा "गणाधिपायोमापुत्रायाघनाशाय

**विनायकायेशपुत्राय सर्वसिद्धिप्रदायकायैकदन्तायेभवक्त्राय मूषकवाहनाय कुमारगुरवे'' इति नामदशकैः प्रत्येकं दूर्वाद्वयं समर्प्यावशिष्टामेकां दशनामभिः समर्पयेत्, दशमोदकान् विप्राय दत्वा स्वयं भुञ्जीतेति संक्षेपः। कार्तिककृष्णचतुर्थी करकचतुर्थी। सा चन्द्रोदयव्यापिनी ग्राह्या, दिनद्वये तद्व्याप्त्यादौ सङ्कष्टचतुर्थीवन्निर्णय इति। माघशुक्लचतुर्थी तिलचतुर्थी। सा प्रदोषव्यापिनी, अस्यां ढुण्ढिराजोद्देशेन नक्तव्रतम्, तत्पूजा तिललड्डुकनैवेद्यम्, तिलभक्षणमपि। अत्रैव प्रदोषे सदाशिवं कुन्दपुष्पैरभ्यर्च्योपवासं नक्तभोजनं वा कुर्वन् लक्ष्मीवान् भवति। इति चतुर्थीनिर्णयः।**

श्रावणकृष्ण चतुर्थी– यह चन्द्रोदयव्यापिनी ग्राह्य है। संकष्ट (संकट) चतुर्थीव्रत के नाम से प्रसिद्ध यह व्रत २१ वर्ष तक निरन्तर करने योग्य है। श्रावणशुक्ल चतुर्थी मध्याह्नव्यापिनी पूर्वयुता ग्राह्य है। गणेशव्रत में तृतीयायुता चन्द्रोदयव्यापिनी संकष्ट नाम से प्रसिद्ध है। इसका वर्णन स्कन्द-पुराण में माहात्म्य सहित है। भाद्रशुक्ल चतुर्थी शिवा नाम से प्रसिद्ध है। इसमें सिद्धिविनायकव्रत किया जाता है। यह मध्याह्नव्यापिनी ग्राह्य है। दोनों दिन समस्त सामान्य मध्याह्न व्याप्ति या अव्याप्ति में पूर्वा ग्राह्य है। दोनों दिन समता या विषमता से मध्याह्न में एकदेश व्याप्ति में पूर्वा ही ग्राह्य है, अर्थात् दोनों दिन चतुर्थी का घट्यात्मक मान समान रूप से विद्यमान हो तो प्रथम दिन की चतुर्थी ग्राह्य है। यदि घट्यात्मक मान में विषमता हो तो अधिक काल तक व्याप्त परा ही ग्रहण करनी चाहिए, यह किन्हीं आचार्यों का मत है। पूर्व दिन सर्वथा मध्याह्न स्पर्श न हो और दूसरे दिन मध्याह्न का स्पर्श करने वाली चतुर्थी हो तो परा ही ग्राह्य है। पूर्व दिन मध्याह्न के एकदेश से युक्त व दूसरे दिन पूर्ण मध्याह्नव्यापिनी हो तो परा ही दूसरे दिन वाली ग्राह्य है। चतुर्थी का यह निर्णय मासान्तरों में भी मान्य है।

भविष्यपुराण के अनुसार यह चतुर्थी शिवा, शान्ता व सुखा इन तीन नामों से प्रसिद्ध है। भाद्रशुक्ला शिवा, माघशुक्ला शान्ता,

यदि माघशुक्ला चतुर्थी भौमवार से युक्त हो तो सुखा व रविवार से युक्त हो तो महाचतुर्थी कही जाती है। इस भाद्रशुक्ल चतुर्थी में चन्द्रदर्शन से मिथ्या दोष (कलंक) लगता है। इस चतुर्थी में उदित चन्द्रमा का पंचमी में दर्शन करने से विनायक व्रत में भी दोष नहीं लगता है। अर्थात् यह पंचमीयुता चतुर्थी ग्राह्य है। यदि पूर्व दिन सायाह्न से प्रवृत्त चतुर्थी में विनायक व्रत के अभाव में भी पूर्व ही दिन चन्द्रदर्शन निषिद्ध है, तो यह चतुर्थी में उदय चन्द्र का दर्शन तो नहीं हुआ। ऐसा पक्ष उपस्थित होने पर पाँच-छः मुहूर्त अवशिष्ट चतुर्थी के दिन भी चन्द्रदर्शन दोष अप्राप्त है। इन दो पक्षों के विवाद के निराकरण में लोग विनायक व्रत के दिन चन्द्रोदय दर्शन में निषिद्ध पक्ष ग्रहण करें। चन्द्रोदयकालिक चतुर्थी है या नहीं, इस विडम्बना से दूर होकर दर्शन दोष शान्ति हेतु विष्णुपुराणोक्त मन्त्र का जप करें। इस विनायक व्रत (चतुर्थी) में मृण्मय गणेश मूर्ति का षोडशोपचार से पूजन करके एक मोदक नैवेद्य देकर २१ दूर्वांकुर लेकर दो-दो दूर्वा प्रत्येक नाम से चढ़ाया जाय और बचा एक दूर्वांकुर दश नामों के उच्चारण के बाद चढ़ा दिया जाय, "ॐ" का उच्चारण सभी नामों के साथ करें। गणाधिपाय, उमापुत्राय, अघनाशाय, विनायकाय, ईशपुत्राय, सर्वसिद्धिप्रदायकाय, एकदन्ताय, इभवक्त्राय, मूषकवाहनाय, कुमारगुरवे – ये दश नाम हैं। दश मोदक ब्राह्मण को देकर स्वयं भोजन करें।

कार्तिककृष्ण चतुर्थी। यह करका (करवा) चतुर्थी नाम से प्रसिद्ध है। यह चतुर्थी चन्द्रोदयव्यापिनी ग्राह्य है। दोनों दिन व्याप्ति होने पर संकष्टचतुर्थी जैसा निर्णय है। माघशुक्ल चतुर्थी तिल-चतुर्थी है। यह प्रदोषव्यापिनी ग्राह्य है, इसमें ढुण्ढिराज गणेश के उद्देश्य से नक्तव्रत,

तिल के लड्डुओं का नैवेद्य निवेदन करे व स्वयं तिल भक्षण करे। सायंकाल प्रदोष में कुन्द के पुष्पों से शिव की पूजा, नक्त भोजन या उपवास करने वाला लक्ष्मीवान् होता है।

**अथ पञ्चमीनिर्णयः सामान्येन। पञ्चमी कृष्णपक्षे शुक्लपक्षे च कर्ममात्रेऽपि चतुर्थीविद्धा ग्राह्या। स्कन्दोपवासे तु षष्ठीयुता ग्राह्या। नागव्रते पञ्चमी परविद्धा ग्राह्या। परेद्युस्त्रिमुहूर्त्तन्यूना पञ्चमी पूर्वेद्युस्त्रिमुहूर्त्तन्यूनचतुर्थ्या विद्धा तदा पूर्वैव, त्रिमुहूर्त्ताधिकचतुर्थीविधे द्विमुहूर्त्ताऽपि परैवेति।**

**अथ विशेषनिर्णयः। चैत्रशुक्लपञ्चम्यामनन्तादिनागान् पूजयित्वा क्षीरसर्पिर्नैवेद्यं दद्यात्। नागस्व-रूपन्तु—**

**"नागाश्चैव तु कर्तव्याः खड्गखेटकधारिणः।**

**अधस्सर्पाकृतिस्तेषां नाभेरूर्ध्वं तु पौरुषी॥**

**फणाश्च मूर्ध्नि कर्त्तव्या द्विजिह्वा बहवोऽसमाः॥ इति।**

**अस्यामेव लक्ष्मीपूजा। अत्रैवोच्चैःश्रवादिपूजनात्मकं हयव्रतमुक्तम्।**

**श्रावणशुक्ला नागपञ्चमी। इयमुदये त्रिमुहूर्त्तव्यापिनी परविद्धा ग्राह्या। परेद्युस्त्रिमुहूर्त्तन्यूना पञ्चमी पूर्वेद्युस्त्रिमुहूर्त्तन्यूना चतुर्थीविद्धा तदा पूर्वैव, त्रिमुहूर्त्ताधिकचतुर्थविधे द्विमुहूर्त्तापि परैव, मुहूर्त्तमात्रा तु न ग्राह्येति मम प्रतिभाति। अस्यां द्वारस्योभयपार्श्वयोर्गोमयेन नागान् विलिख्य दधिदूर्वाङ्कुर-पुष्पैः सम्पूज्य नागप्रीतये ब्राह्मणान् भोजयेत्, एवं कृते सर्पभयनिवृत्तिः।**

सामान्य पंचमी निर्णय। शुक्ला या कृष्णा पंचमी कर्ममात्र (कार्य मात्र के लिए) चतुर्थ्यादियुता ग्राह्य है। स्कन्दोपवास में षष्ठीयुता ग्राह्य है। नागव्रत में पंचमी परविद्धा ग्राह्य है। यदि दूसरे दिन पञ्चमी तीन

मुहूर्त से न्यून हो तो पूर्व दिन की ही पंचमी ग्राह्य है। प्रथम दिन तीन मुहूर्त से न्यून चतुर्थी से विद्ध पंचमी पूर्वा ग्राह्य है। पूर्व दिन तीन मुहूर्त से अधिक चतुर्थीवेध में परदिन दो मुहूर्त भी पंचमी परा ग्राह्य है।

अथ विशेष निर्णय। चैत्रशुक्ल पंचमी में अनन्तादि नागों की पूजा व दूध-घी का नैवेद्य देवे। खड्ग-खेट धारण किये अधोभाग सर्पाकार-नाभि के ऊपर पुरुषाकार तथा शिर फण व दो जीभ और परस्पर असमान आकृति वाले नागों की रचना कर पूजन करे। इसी पंचमी में लक्ष्मी-पूजन तथा उच्चैःश्रवादि पूजनात्मक हयव्रत करना चाहिए। श्रावणशुक्ला पञ्चमी उदय में तीन मुहूर्तों तक होने पर वही ग्राह्य है। दूसरे दिन तीन मुहूर्त से न्यून पञ्चमी है और प्रथम दिन तीन मुहूर्त न्यून चतुर्थी वेध हो तो पूर्वा ही ग्राह्य है। तीन मुहूर्त से अधिक चतुर्थी वेध होने पर दो मुहूर्त वाली परा पंचमी ग्राह्य है। किन्तु पर दिन में मुहूर्त मात्र अग्राह्य है, ऐसा मुझे लगता है, इसी में द्वार के दोनों भाग में गोमय का नाग लिखकर (आकृति बनाकर) दधि, दूब व पुष्पों से पूजा करके नागों की प्रीति हेतु ब्राह्मणों को भोजन कराना चाहिए, ऐसा करने से नागभय की निवृत्ति हो जाती है।

**अथ भाद्रशुक्ला ऋषिपञ्चमी। सा मध्याह्नव्यापिनी ग्राह्या। दिनद्वये मध्याह्नव्याप्तौ तदव्याप्तौ च पूर्वैव। अत्र गोमयोपलिप्तवेदिकायां रङ्गावलि-पुष्पान्वितायां भक्तियुक्तः सप्तर्षीनावाह्य सम्पूज्यार्घं दद्यात्। अनेन —**

**"कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः।**
**जमदग्निर्वसिष्ठश्च गृह्णन्त्वर्घं मयार्पितम्"॥**

**इति पूज्याकृष्टभूम्युत्पन्नशाकाहारेणोपोष्य सप्तवर्षाणि यावद् व्रतं कुर्यात्। अनेन महापातकोपपातकनिवृत्तिरिति।**

**अथाश्विनशुक्लपञ्चम्यामुपाङ्गललिताव्रतम्। अत्र पञ्चमी अपराह्णव्यापिनी ग्राह्या। अपराह्णस्यैव तत्पूजाकालत्वोपपत्तेः। दिनद्वये कार्त्स्न्येनापराह्णव्याप्तौ साम्येन वैषम्येण वाऽपराह्णैकदेशव्याप्तौ च पूर्वैव, युग्मवाक्यात् परत्रैवापराह्णव्याप्तौ परैव। अत्र पूजाव्रतादिग्रन्थान्तराज्ज्ञेयम्। अत्रैवेन्द्राणीसहितं कुशमयं नागं घृतादिभिः स्नापयित्वा नैवेद्यं दत्वोपवासेन नागाः प्रीताः पीडां न कुर्वन्ति। मार्गशीर्षशुक्लपञ्चम्यां नागपूजा दाक्षिणात्यानाम्। माघशुक्लपञ्चमी वसन्तपञ्चमी। तत्र वसन्तोत्सवः कामरतिपूजा च। इयं परत्रैव पूर्वाह्णव्याप्तौ परा, अन्यथा पूर्वैव, इति पक्षद्वयगतासु सर्वासु पञ्चमीसु तिथिपतित्वेन नागा एव पूज्याः। इति पञ्चमीनिर्णयः।**

भाद्रशुक्ल पंचमी ऋषिपंचमी नाम से प्रसिद्ध है। यह मध्याह्नव्यापिनी ग्राह्य है। दोनों दिन मध्याह्नव्याप्ति या अव्याप्ति में पूर्वा ही ग्रहणीय है। इसमें गोमयोपलिप्त भूमि पर निर्मित वेदिका को रंग व पुष्पों से रंजित, सज्जित करके उस पर सप्तर्षियों का आवाहन कर अर्घ्यादि से पूजन करना चाहिए। अर्घ का मन्त्र– "कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः। जंमदग्निर्वसिष्ठश्च गृह्णन्त्वर्घं मयार्पितम्" ॥ पवित्र व बिना जोती हुई भूमि में उत्पन्न शाकादि भोजन करके सात वर्ष तक व्रत का पालन करे। इस व्रत से महापातक, उपपातकादि नष्ट हो जाते हैं।

आश्विनशुक्ल पंचमी में उपांगललिताव्रत होता है। यह पंचमी अपराह्णव्यापिनी ग्राह्य है। अपराह्ण ही उपांगललिताव्रत की पूजा का काल है। दोनों दिन पूर्ण अपराह्णव्याप्ति समता या विषमता से अपराह्ण के लिए किसी एक देश में व्याप्त होने पर युग्म वाक्य से पूर्वा, किन्तु पराह्णव्याप्ति से परा ही ग्राह्य है। विशेष ज्ञान पूजाव्रतादि ग्रन्थान्तर से प्राप्त करें। इसमें इन्द्राणी के साथ नाग को घृतादि से स्नान कराकर नैवेद्य देकर विसर्जन करने से नाग प्रसन्न होकर पीड़ा नहीं देते हैं।

मार्गशीर्षशुक्ल पंचमी नागपंचमी नाम से प्रसिद्ध है। किन्तु यह नागपंचमी-पूजन दाक्षिणात्य परम्परा में ही प्रचलित है। माघशुक्ल पंचमी वसन्तपंचमी है। इसमें वसन्तोत्सव व काम-रति की पूजा होती है। पूर्वाह्ण व पराह्ण व्याप्ति में परा ही ग्राह्य है। दोनों पक्षों की पंचमी में पञ्चमी का स्वामी नाग होने से सर्वत्र नागों की पूजा की प्रधानता है।

**अथ षष्ठीसाधारणनिर्णयः। षष्ठी स्कन्दव्रते पूर्वविद्धा ग्राह्या। अन्यव्रते तु परविद्धैव। पूर्वेद्युः षण्मुहूर्तन्यूनपञ्चम्या वेधे पूर्वाऽपि। षष्ठीसप्तम्यो रविवासरयोगे पद्मकयोग इति।**

**अथ विशेषनिर्णयः। षष्ठ्यां स्कन्दस्य दमनकारोपणम्। आषाढशुक्लषष्ठी। सा पूर्वा। अत्र पञ्चम्यामुपोष्य कुमारः पूज्यः। यच्च –**

**"आषाढे शुक्लपक्षे तु तिथिः कौमारिला स्मृता।**

**कुमारमर्चयेत्तत्रोपोष्य पूर्वं तु पञ्चमीम्"॥ इति वाराहे।**

**इयमेव सूर्यषष्ठी। अत्र स्नात्वा भास्करं पूज्य, पञ्चगव्यं प्राश्य, महाफलमारोग्यं च लभते।**

**भाद्रपदकृष्णा षष्ठी। सा कपिला। तस्यां भास्करं प्रपूज्य विप्राय कपिलां दद्यात्। यच्च –**

**"भाद्रे मास्यसिते पक्षे भानौ चैव करस्थिते।**

**पातेषु चैव रोहिण्यां सा षष्ठी कपिला स्मृता"॥ इति पुराणसमुच्चये।**

**एषैव चन्द्रषष्ठी। सा चन्द्रोदयव्यापिनी। उभयत्र चन्द्रोदयव्यापिन्यां पूर्वविद्धैव। एषैव हलषष्ठी। सा सप्तमीयुतेति दिवोदासः।**

**भाद्रशुक्ला षष्ठी तु –**

**"शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम्।**

**प्राशनं पञ्चगव्यस्य अश्वमेधफलाधिकम्"॥ इति।**

**इयं सूर्यषष्ठी सप्तमीयुता ग्राह्या। अस्यामेव स्वामिकार्तिकेयदर्शनाद् ब्रह्महत्यादिपापनाशः।**

अथाश्विनशुक्लषष्ठ्यां ज्येष्ठानक्षत्रयुतायां केवलायां वा देवीपूजार्थं विल्ववृक्षनिमन्त्रणम्। तत्र मन्त्रः—

"रावणस्य वधार्थाय रामस्यानुग्रहाय च।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि ततः पुरा॥
श्रीशैलशिखरे जात श्रीफलश्रीनिकेतन।
नेतव्योऽसि मयाऽऽगच्छ पूज्यो दुर्गास्वरूपतः"॥ इति।

अत्रैव प्राप्ते मूलनक्षत्रे पुस्तकेषु सरस्वत्यावाहनं पूजा च। यच्च—

"मूलेष्वावाहनं देव्याः पूर्वाषाढासु पूजनम्।
उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत्"॥ इति।

कार्तिकशुक्लषष्ठ्यां भौमयुतायां वह्निं समभ्यर्च्य तत्प्रीत्यर्थं विप्रभोजनं कार्यम्।

अथ मार्गशीर्षशुक्ला चम्पाषष्ठी। अत्र तिथिद्वैधे यस्मिन्दिने रविवारभौमवारशततारकावैधृतीनां मध्येऽधिकैर्योगः सा पूर्वाऽपरा परा वा मुहूर्त्तत्रयव्यापिनी ग्राह्या। दिनद्वयेऽपि योगाभावे परैव त्रिमुहूर्त्ता ग्राह्या। अस्यामेव स्कन्दस्तारकं हतवान्, अतः स्कन्दं पूज्य दानादिकृतमक्षयं भवति। इति षष्ठीनिर्णयः।

सामान्य षष्ठी निर्णय। स्कन्दव्रत में षष्ठी पूर्वविद्धा ग्राह्य है। अन्य व्रतों में परविद्धा ही ग्राह्य है। पूर्व दिन छः मुहूर्त से न्यून पंचमी वेध में पूर्वा ग्राह्य है, किन्तु षष्ठी-सप्तमी-रविवार के योग में पद्मकयोग बनता है, ऐसी स्थिति में यही पद्मक-योगवती षष्ठी ही ग्राह्य है।

विशेष निर्णय। इसी षष्ठी में दमनक से स्कन्द का अर्चन होता है। आषाढशुक्ल षष्ठी पूर्वा ग्राह्य है। पंचमी में उपवास करके कुमार की पूजा की जाती है। यही सूर्यषष्ठी व्रत है। इसमें स्नान, पंचगव्यपान व सूर्य की पूजा से महाफल व आरोग्य-लाभ होता है। भाद्रकृष्ण षष्ठी कपिला षष्ठी है। इसमें सूर्य की पूजा व ब्राह्मण को कपिला गाय देना चाहिए। पुराण-समुच्चय के अनुसार भाद्रकृष्ण षष्ठी रोहिणी से युक्त हो तो कपिला षष्ठी होती है। यही चन्द्रोदयव्यापिनी होने से चन्द्रोदय

षष्ठी होती है। यही दोनों दिन चन्द्रोदयव्यापिनी हो तो पूर्वविद्धा ही ग्राह्य है। यही हलषष्ठी के नाम से भी कही जाती है। यह सप्तमी-विद्धा होनी चाहिए। यह दिवोदास का मत है। अथ भाद्रपदशुक्ला षष्ठी।इसमें स्नान, सूर्यपूजन, पंचगव्यप्राशन से अश्वमेध का फल होता है, यह सप्तमीयुता षष्ठी ग्राह्य है। इसी में स्वामिकार्तिकेय के दर्शन से ब्रह्महत्यादि पाप नष्ट होते हैं।

आश्विनशुक्ल षष्ठी, ज्येष्ठायुक्त हो या केवल हो, इस षष्ठी में देवी के पूजन हेतु विल्ववृक्ष को निमन्त्रण देना चाहिए। मन्त्र मूल में देखें।इसी षष्ठी में मूल नक्षत्र के योग में पुस्तकों पर सरस्वती का आवाहन व पूजन किया जाता है। कार्तिकशुक्ल षष्ठी भौमयुक्त हो तो अग्नि की पूजा व ब्राह्मण भोजन अवश्य कराना चाहिए। मार्गशीर्ष की शुक्ला षष्ठी पापषष्ठी के नाम से भी जानी जाती है। यह तिथि के द्वैधीभाव में रवि, भौमवार, शतभिषा, वैधृति इनमें से अधिक योग जिस दिन प्राप्त हो उस दिन पूर्वा, परा या तीन मुहूर्त व्याप्त षष्ठी ग्राह्य है। यदि दोनों दिन भी योग न हो तो तीन मुहूर्त व्याप्त परा ही ग्रहणीय है। इसी दिन स्कन्द ने तारकासुर को मारा है, इसलिए इस तिथि में स्कन्द की पूजा व दान अक्षय होता है।

**अथ साधारणसप्तमीनिर्णयः। सप्तमी कर्ममात्रे षष्ठीयुतैव ग्राह्या। यदा पूर्वेद्युरस्तमयपर्यन्ता षष्ठीतिथिर्दिवा षष्ठीविद्धा न लभ्यते, परेद्युश्चाष्टमीविद्धा, तदा चागत्या परैव, एवं तिथ्यन्तरनिर्णयेष्वप्यूह्यम्।**

**अथ विशेषनिर्णयः। सप्तम्यां दमनकेन भास्करपूजा, अनेनारोग्यं भोगप्राप्तिश्च।**

**वैशाखशुक्लसप्तम्यां श्रीगङ्गोत्पत्तिः। तस्यां मध्याह्नव्यापिन्यां गङ्गापूजनं कार्यम्। यच्च —**

**"वैशाख-शुक्लसप्तम्यां जह्नुना जाह्नवी स्वयम्।**
**क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात्॥**
**तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम्"॥इति।**

**एषैव निम्बसप्तमी। अस्यामुपोष्य निम्बवृक्षं पूज्य निम्बपत्रप्राशने रोगपापयोः शान्तिः।**

**अथाषाढशुक्लसप्तमी। तत्रोपोष्य विवस्वन्तं सूर्यं वर्त्तुलमण्डले समावाह्य षोडशोपचारैः सम्पूज्यारोग्यं कामांश्च लभते।**

सामान्य सप्तमी निर्णय। सप्तमी कर्ममात्र (कार्यमात्र) में षष्ठीयुता ग्राह्य है। यदि पूर्व दिन अस्तपर्यन्त षष्ठी होने से दिवा षष्ठी वेध नहीं प्राप्त है और दूसरे दिन अष्टमीविद्धा रही तो अगत्या परैव अष्टमीविद्धा सप्तमी ग्राह्य है। एवं तिथ्यन्तर (अन्य तिथियों के) निर्णय में भी समझना होगा। कार्यवश विशेष निर्णय दिया जा रहा है। सप्तमी में दमनक द्वारा भास्कर (सूर्य) की पूजा की जाती है। सूर्य व्रत व पूजन से आरोग्य और नाना प्रकार के सुखों एवं भोगों की प्राप्ति होती है। वैशाखशुक्ल सप्तमी में गंगा की उत्पत्ति हुई है, अतः मध्याह्नव्यापिनी सप्तमी में गंगा की पूजा करनी चाहिए। वैशाखशुक्ल सप्तमी को जह्नु ने क्रोध से गंगा का पान कर पुनः दक्षिण कर्ण से त्याग दिया था। यह पौराणिक कथा है। विस्तार पुराणों से जानना चाहिए। इसी को निम्बसप्तमी भी कहते हैं। इस सप्तमी में उपवास करके निम्बवृक्ष के पूजन से आरोग्य व पाप की शान्ति होती है। आषाढशुक्ल में उपवास और मण्डल (वृत्त) में आवाहन व षोडशोपचार पूजन से आरोग्य व मनोकामना की पूर्ति होती है।

**अथाश्विनशुक्लसप्तमी। देवीपूजायामियं परयुता ग्राह्या। अत्र सप्तम्यादिदिनत्रये पत्रिकापूजनं[1] विहितम्। अत्र सूर्योदयोत्तरं मुहूर्त्ताधिकव्यापिनी ग्राह्या। मुहूर्त्तन्यूनत्वे पूर्वा। अत्रैव मूलयुक्तायां केवलायां वा श्रीदेवीं पूज्य पुस्तकं स्थापयेत्। यच्च –**

**"मूलऋक्षे सुराधीश पूजनीया सरस्वती।**
**पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम्॥**

---

१. वङ्गदेशे प्रसिद्धम्।

नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन।
पुस्तके स्थापिते देवि विद्याकामो द्विजोत्तमः'' ॥ इति।

अथ मार्गशुक्ला मित्रसप्तमी। तत्र पूर्वदिने कृतक्षौरः स्नात्वा रविं पूज्योपोष्य ब्राह्मणान् भोजयित्वा स्वयमपि सप्तम्यामष्टम्यां च मधुप्लुतमिष्टान्नं भुञ्जीत।

अथ माघशुक्लसप्तमी रथसप्तमी। साऽरुणोदयव्यापिनी ग्राह्या। दिनद्वयेऽरुणोदयव्याप्तौ पूर्वा। यदा घटिकादिमात्रा षष्ठी सप्तमी च क्षयवशादरुणोदयात् पूर्वं समाप्यते, तदा षष्ठीयुता ग्राह्या। तत्र षष्ठ्यां सप्तमीक्षयघटीः प्रवेश्यारुणोदये स्नानं कार्यम्। अत्र व्रते षष्ठ्यामेकभक्तं कृत्वा सप्तम्यामरुणोदये स्नानं कार्यम्। तत्र मन्त्रः—

''यदाजन्मकृतं पापं मया जन्मसु जन्मसु।
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी॥
एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम्।
मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः॥
इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके।
सप्तव्याधिसमायुक्तं हर माकरि सप्तमि''॥
एवं स्नात्वार्घं दद्यात्। अनेन—
''सप्तसप्तिवहप्रीत सप्तलोकप्रदीपन।
सप्तमीसहितो देव गृहाणार्घं दिवाकर''॥ इति।
एषैवाचला जयन्ती च। यच्च—
''माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचन।
जयन्ती-नाम सा प्रोक्ता सर्वपापहराऽचला''॥ इति सप्तमीनिर्णयः।

आश्विनशुक्ल सप्तमी – देवी पूजा में परयुता (अष्टमीयुता) ग्राह्य है। सप्तमी से तीन दिन तक पत्रिका के पूजन का विधान है और दूसरे दिन एक मुहूर्त से अधिक व्यापिनी ग्राह्य है। दूसरे दिन यदि सप्तमी एक मुहूर्त से न्यून है तो पूर्वा ग्राह्य है, इसमें मूलनक्षत्र हो या न भी हो तो

भी पुस्तक पर सरस्वती की पूजा करने का विधान श्रवण नक्षत्र तक पढ़ना, पढ़ाना, लिखना आदि स्थगित रखने से विद्या की वृद्धि होती है।

मार्गशीर्षशुक्ल सप्तमी मित्र – सप्तमी नाम से जानी जाती है। इसमें पूर्वदिन क्षौरकर्म व सप्तमी में स्नान करके सूर्य की पूजा करे व दूसरे दिन मधुयुक्त मिष्ठान्न का ब्राह्मणों को भोजन करावे और स्वयं भी भोजन करे। माघशुक्ल सप्तमी रथसप्तमी नाम से प्रसिद्ध है। यह अरुणोदयव्यापिनी ग्राह्य है। दोनों दिन अरुणोदयव्यापिनी हो तो, पूर्वा ग्राह्य है। यदि १ घटिका षष्ठी हो व क्षय के कारण सप्तमी अरुणोदय से पूर्व ही समाप्त हो जाती हो, तो षष्ठीयुता सप्तमी ग्राह्य है। जिस दिन षष्ठी के क्षय से सप्तमी का प्रवेश हो उस दिन अरुणोदय में स्नान करना चाहिए। इस व्रत में षष्ठी में एक समय भोजन करना और सप्तमी अरुणोदय में स्नान करना चाहिए। स्नान का मन्त्र मूल में दिया गया है। इन मन्त्रों को पढ़कर स्नान करके सूर्यार्घ देने से सात जन्मों का पाप नष्ट हो जाता है। अर्घ का मन्त्र मूल में देखें। इसे अचला सप्तमी या जयन्ती भी कह सकते हैं। माघशुक्ला सप्तमी त्रिलोचन-जयन्ती नाम से भी प्रसिद्ध है। यह सब प्रकार के पापों को नष्ट करती है।

**अथाष्टमीसाधारणनिर्णयः। व्रतमात्रेऽष्टमी कृष्णपक्षे पूर्वा, शुक्लपक्षे परा ग्राह्या। मिलितशिवशक्त्योरुत्सवे कृष्णाऽपि परा। बुधाष्टमी शुक्लपक्षे प्रातः-कालमारभ्यापराह्णपर्य्यन्त यद्दिने मुहूर्त्तमात्रोऽपि बुधवासरयोगः सा ग्राह्या। सायाह्नकाले चैत्रमासे श्रावणादिमासचतुष्टये कृष्णपक्षे च न ग्राह्या। सर्वकृष्णाष्टमीषु कालभैरवोद्देशेन केचिदुपवसन्ति। तत्र मार्गशीर्षकृष्णाष्टम्यां भैरवजयन्तीत्वात्तद्वन्निर्णयौचित्येन मध्याह्नव्यापिनी ग्राह्या, दिनद्वये मध्याह्न-व्याप्तौ पूर्वैव, प्रदोषव्यापिनी तु कौस्तुभे। अत उदयदिने प्रदोषव्याप्तौ द्विविधवाक्याविरोधात्परैव। पूर्वत्र प्रदोषव्याप्तिरेव परत्र मध्याह्न एव, तदा बहुशिष्टाचारानुरोधात्प्रदोषगा पूर्वैव। यत्तु – "अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा" इति वचनाद्दिवाभोजननिषेधमात्रपालनम्, न तु किञ्चिद् व्रतम्। तत्र – "निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" इति वचनाद्भोजनकालव्यापिनीमष्टमीं**

**त्यक्त्वा नवम्यां सप्तम्यां वा भोक्तव्यमिति भाति, युक्तमयुक्तं वा सद्भिर्विचारणीयमिति।**

सर्वोपयोगी साधारण अष्टमी निर्णय। व्रत में कृष्णपक्ष की अष्टमी पूर्वा एवं शुक्लाष्टमी परा ग्राह्य है और सम्मिलित शिव-शक्ति के उत्सव में परा अष्टमी ग्राह्य है।

सूर्योदय से सूर्यास्त पर्यन्त एक घटी मात्र भी अष्टमी का बुध से योग होने पर बुधाष्टमी होती है। चैत्र मास व श्रावणादि चारों मासों के कृष्णपक्ष की अष्टमी सायाह्नकालिक ग्राह्य नहीं है। कालभैरव के उद्देश्य से सभी कृष्णाष्टमी में कुछ व्यक्ति व्रत करते हैं। मार्गशीर्ष कृष्णाष्टमी भैरव जयन्ती है। अतः इसका निर्णय आवश्यक है। यह मध्याह्नव्यापिनी ग्राह्य है। यदि दोनों दिन मध्याह्नव्याप्ति हो तो पूर्वा प्रथम दिन की अष्टमी ग्राह्य है। कौस्तुभ के अनुसार प्रदोषव्यापिनी ग्राह्य है। अतः उदय के दिन प्रदोषव्यापिनी होने पर दोनों (मध्याह्न, प्रदोष) वाक्यों में विरोध न होने से परा ही ग्राह्य है। पूर्वदिन प्रदोषव्याप्ति हो, परदिन मध्याह्न-व्याप्ति हो तो बहुविशिष्ट जनों से मान्य होने के कारण पूर्वा प्रदोषव्यापिनी ही ग्रहण की जाएगी, जो कि रात्रिकालिक चतुर्दशी व दिनव्यापिनी अष्टमी दोनों व्रतों के लिए निर्णीत है। इस वचन से अष्टमी में दिन में भोजन निषेध मात्र नियम पालन हो सकता है। निषेध निवृत्त्यात्मा है, यह मात्र काल की अपेक्षा करता है। इसके अनुसार भोजनकाल-व्यापिनी अष्टमी छोड़कर सप्तमी या नवमी में भोजन करना चाहिए। यही युक्तियुक्त है, इस पर सज्जनों को विचार करना चाहिए।

**अथ विशेषनिर्णयः। चैत्रशुक्लाष्टम्यां भवान्या उत्पत्तिः। सा नवमीयुता ग्राह्या। अस्यां पुनर्वसुयुतायां शोकनाशनायाशोकस्याष्टौ कलिकाः प्राश्याः। तत्र मन्त्रः—**

**"त्वामशोक नराभीष्ट मधुमाससमुद्भव।**
**पिबामि शोकसन्तप्तो मामशोकं सदा कुरु"॥ इति।**

अत्रैव योगविशेषे कृत्यम्—

"पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी।

प्रातस्तु विधिवत्स्नात्वा वाजपेयफलं लभेत्"॥ इति।

अत्र देव्या महापूजाऽपि कार्या। यत्तु—

"शरत्काले महापूजा क्रियते या च वार्षिकी"।

वार्षिकीत्यनेन संवत्सरस्यादौ चैत्रशुक्लप्रतिपत्क्रमादष्टमीपर्यन्तं क्रियमाणा विधीयते, अत एव दुर्गोत्सवे शरद्वसन्तयोस्तुल्यत्वमिति। अथ वैशाखशुक्लाष्टमी। तस्यामुपोषित आम्रफलरसेन स्नात्वा अपराख्यां देवीं मांसीबालकवारिभिः स्नापयित्वा पुनः शर्कराक्षीरनैवेद्यं दत्वा ब्राह्मणान् कुमारींश्च भोजयित्वा दक्षिणाभिः सन्तोष्य पारणे कृते सर्वतीर्थाभिषेकफलं लभते। ज्येष्ठशुक्लाष्टम्यां शुक्लादेवीं पूज्य नवम्यामुपोष्य देवीं पूजयेदिति। आषाढशुक्लाष्टम्यामुपोषितः हरिद्रातोयेन स्नात्वा महिषघ्नीनाम्नीं देवीं तेनैव स्नापयित्वा पूज्य प्रभूतनैवेद्यादिभिः सन्तोष्य ब्राह्मणान् कुमारींश्च सम्भोज्य दक्षिणां दत्वा विसृज्य रात्रौ दीपमालया सर्वान् कामान् लभते।

विशेष निर्णय— चैत्रशुक्ला अष्टमी में भवानी की उत्पत्ति है। इस अष्टमी में नवमी के योग की मान्यता है। इस अष्टमी का पुनर्वसु से योग होने पर शोकनाश के लिए अशोक की आठ कलिकाओं का भक्षण करना चाहिए। अशोककलिका प्राशन का मन्त्र मूल में दिया गया है और यदि यह अष्टमी पुनर्वसु और बुध से योग करती हो तो प्रातः शास्त्रविधि से स्नान करने से वाजपेय यज्ञ का फल मिलता है। इस वार्षिकीय नवरात्र की अष्टमी में शारदीय नवरात्र जैसी ही देवी की महापूजा की जाती है। चैत्रशुक्ल प्रतिपदा से अष्टमीपर्यन्त वही कार्य किये जाते हैं, जो शारदीय नवरात्र में होते हैं। इसलिए दुर्गोत्सव में चैत्र और आश्विन नवरात्रों में कोई भेद नहीं है।

वैशाखशुक्ल अष्टमी। इस अष्टमी में उपवास व आम्ररस से स्नान करके जटामासी व आँवला के रस से परादेवी को स्नान, दुग्ध, शर्करा

का नैवेद्य प्रदान कर कुमारी व ब्राह्मणों को भोजन व दक्षिणा से सन्तुष्ट कर पारण करने से समस्त तीर्थ के स्नान का फल प्राप्त होता है।

ज्येष्ठशुक्ल अष्टमी को देवी की पूजा, नवमीव्रत व पुनः देवी की पूजा करनी चाहिए। आषाढ़शुक्ल अष्टमी को व्रत व हरिद्रा के जल से स्नान कर एवं हरिद्रा जल से ही महिषमर्दिनी को स्नान कराकर पूजा करनी चाहिए और प्रभूत (बहुत) फल, पक्वान्न नैवेद्य अर्पण करना तथा कुमारी व ब्राह्मणों को भोजन, दक्षिणा से सन्तुष्ट कर रात्रि में दीपमाला से आरती करके विसर्जन करने से मनुष्य की सभी मनोकामना की पूर्ति होती है।

**अथ भाद्रकृष्णाऽष्टमी जन्माष्टमी। तत्राष्टमी द्विविधा— शुद्धा विद्धा च। दिवा रात्रौ वा सप्तमीयोगरहिता यत्र दिने यावती तत्र तावती शुद्धा। दिवा रात्रौ वा सप्तमीयोगवती यस्मिन्नहोरात्रे यावती तत्र तावती विद्धा। सा पुनर्द्विधा— रोहिणीसहिता रहिता चेति। तत्र रोहिणी केवलाष्टमीभेदा। सप्तमीनाड्यः ५९ पलानि ५९, अष्टमी ५८।५, अस्यां शुद्धायां निस्सन्देहः, द्वितीयकोट्यभावात्। सप्तमी २ अष्टमी ५५, अस्यां विद्धायामप्यसन्देहः, दिनान्तरेऽभावेन द्वितीयकोट्यभावात्। यदा दिनद्वये केवलाष्टमी वर्त्तते तदा चत्वारः पक्षाः— पूर्वेद्युरेव निशीथव्यापिनी १, परेद्युरेव निशीथव्यापिनी २, दिनद्वये निशीथव्यापिनी ३, दिनद्वये निशीथव्याप्त्यभाव इति ४। रात्र्यर्द्धं निशीथपदार्थः स्थूलदृष्ट्या त्वष्टमो मुहूर्त्तो निशीथः। तत्र पूर्वेद्युरेव निशीथव्यापिनी, यथा— सप्तमी ४०, अष्टमी ४२। अत्र सप्तमीयुता पूर्वविद्धैवाष्टम्युपोष्या, यथा— अष्टमी ६०।४।इयं शुद्धाधिका पूर्वैव। परेद्युरेव निशीथे यथा सप्तमी ४७, अष्टमी ४६। अत्र परैवाष्टम्युपोष्या। उभयत्र निशीथे यथा— सप्तमी ४२, अष्टमी ४६।अत्रापि परैवाष्टमी ग्राह्या। दिनद्वये निशीथव्याप्त्यभावो यथा— सप्तमी ४७, अष्टमी ४२। अत्रापि परैवाष्टमी ग्राह्या। अत्र सर्वत्र सप्तमीयुक्तायां रात्रिपूर्वार्द्धावसाने कलयाऽप्यष्टम्याः सत्त्व एव निशीथव्यापित्वं नवमीयुतायां रात्र्युत्तरार्द्धादिभागे सत्त्व एवोत्तरत्र**

**निशीथव्यापित्वम्, सप्तमीदिने उत्तरभाग एव सत्त्वे नवमीयुतदिने पूर्वभाग एव सत्त्वे च निशीथव्यापित्वपक्ष एव मन्तव्यः।**

भाद्रकृष्ण अष्टमी में श्रीकृष्ण-जन्माष्टमी होती है। इसके शुद्ध व विद्ध दो भेद हैं। दिन व रात्रि में सप्तमीयोगरहिता अष्टमी शुद्धा है। दिन व रात्रि के किसी भाग में अधिक मात्रा में सप्तमीयोगयुक्ता अष्टमी विद्धा होती है। पुनः उस अष्टमी के दो भेद हैं– प्रथम रोहिणीयुक्ता, दूसरी रोहिणीरहिता, अर्थात् केवल अष्टमी, उसमें भी भेद है, सप्तमी घटी ५९ पल ५९ व अष्टमी ५८।५ घटिका, इस अष्टमी की शुद्धता में कोई सन्देह नहीं है; क्योंकि द्वितीय दिन द्वितीय कोटि का अभाव है। सप्तमी घटी २ और अष्टमी ५५ घटिका है तो इसके विद्ध होने में भी सन्देह नहीं है; क्योंकि अष्टमी के अभाव से द्वितीय कोटि का अभाव है।

इससे भिन्न यदि दोनों दिन केवल अष्टमी हो तो, पूर्व दिन निशीथ-व्यापिनी प्रथम पक्ष, दूसरे दिन निशीथव्यापिनी दूसरा पक्ष है। दोनों दिन निशीथव्यापिनी तीसरा पक्ष है। चतुर्थ पक्ष में दोनों दिन निशीथ व्याप्ति का अभाव है। ये चार पक्ष उपस्थित हो सकते हैं। रात्रि के मध्य का समय निशीथ होता है। स्थूल दृष्टि से रात्रि में १५ मुहूर्त की कल्पना की गई है, अतः आठवाँ मुहूर्त निशीथ (अर्धरात्रि) काल है।

(१) यदि प्रथम दिन सप्तमी ४० घटिका है और दूसरे दिन अष्टमी ४२ घटिका है, तो प्रथम पक्ष सप्तमीविद्धा अष्टमी ग्राह्य है। (२) यदि प्रथम दिन अष्टमी ६०।४ घटिका है, तो यह शुद्धाधिका पूर्वा ही ग्राह्य है। (३) तृतीय कोटि में पूर्वदिन सप्तमी ४७ घटिका, दूसरे दिन अष्टमी ४६ घटिका है, तो परा अष्टमी ४६ घटिका ग्राह्य है। दोनों निशीथ व्याप्ति में यथा सप्तमी ४२ और अष्टमी ४६ है, तो यही ४६ घटिका वाली अष्टमी परा ही ग्राह्य है। दोनों दिन निशीथकाल व्याप्ति का अभाव यथा सप्तमी ४७ व अष्टमी ४२ घटिका है, तो भी परा ४२

घटिकात्मिका अष्टमी ग्राह्य है। पूर्वा में हेतु– यहाँ सर्वत्र सप्तमी में रात्रि के पूर्वार्ध के अवसान में कलामात्र की अष्टमी का योग होने से निशीथ-व्याप्ति होती है और दूसरे दिन नवमीयुता अष्टमी ४२ घटिका वाली रात्रि के उत्तरार्ध के प्रथम भाग में निशीथव्यापिनी है, यह दोनों पक्ष मान्य हैं।

**एवं वक्ष्यमाणरोहिणीभेदेष्वपि ज्ञेयम्। रोहिणीयुताष्टम्यामपि पूर्वदिन एव निशीथेऽष्टमीरोहिण्योर्योगः, परदिन एव तयोर्निशीथे योगः, दिनद्वये निशीथे योग इति पक्षत्रयं पूर्वेद्युरेव, निशीथे योगो यथा– सप्तमी ४०, तद्दिने कृत्तिका ३५, अष्टमी ४६, तद्दिने रोहिणी ३६। अत्र पूर्वविद्धैवाष्टम्युपोष्या। परदिन एव निशीथयोगो यथा– सप्तमी ४२, तद्दिने कृत्तिका ५०, अष्टमी ४७, रोहिणी ४६। अत्र परैवाष्टमी ग्राह्या। दिनद्वये निशीथेऽष्टमीरोहिण्योर्योगो यथा– सप्तमी ४२, कृत्तिका ४३, अष्टमी ४७, रोहिणी ४८। अत्र परैवाष्टमी ग्राह्या। अथ रोहिणीयुताष्टम्यामेव दिनद्वयेऽपि निशीथे रोहिणीयोगाभावो बहुधा सम्भवति। परेद्युरेव निशीथव्यापिनी अष्टमी परेद्युरेव निशीथादन्यत्र रोहिणीयुक्ता चेत्येकः पक्षः। यथा– सप्तमी ४७, अष्टमी ५०, अष्टमीदिने कृत्तिका ४६। अत्र पक्षे परैवाष्टमी ग्राह्या। एतत्तुल्ययुक्त्या पूर्वेद्युरेव निशीथव्यापिनी पूर्वेद्युरेव निशीथादन्यत्र रोहिणीयुतेति पक्षेऽपि पूर्वैव ग्राह्या। दिनद्वयेऽपि निशीथादन्यत्र रोहिणीयुतेति प्रथमः पक्षः। परेद्युरेव निशीथव्यापिनीति द्वितीयः पक्षः। सप्तमी ४८, तद्दिने कृत्तिका ३०, अष्टमी ४८, रोहिणी २५। अत्रापि परैव ग्राह्या। दिनद्वयेऽपि निशीथादन्यत्र रोहिणीयुक्ता। पूर्वेद्युरेव निशीथव्यापिनी। तृतीयो यथा सप्तमी २५, कृत्तिका ४८, अष्टमी २०, रोहिणी ४३। अत्रापि परैव रोहिणीयोगसाम्येऽपि पूर्वत्र सप्तमीविरुद्धत्वात्, यथाष्टमी ६०।४ कृत्तिका ५०। अत्रापि पूर्वैव ग्राह्या। अहोरात्रद्वये रोहिणीयोगसाम्ये पूर्वस्याः शुद्धत्वात् पूर्णव्याप्तेश्च दिनद्वयेऽपि निशीथव्यापिनी, परेद्युरेव निशीथादन्यत्र रोहिणीयुतेति। चतुर्थो यथा– सप्तमी ४३, अष्टमी**

४९, कृत्तिका ४६। अत्र परैवाष्टमी। एवं दिनद्वयेऽपि निशीथव्यापिनी पूर्वैव, निशीथादन्यत्र रोहिणीयुतेति। पञ्चमो यथा– सप्तमी ४१, तद्दिने रोहिणी ४३, अष्टमी ४७। अत्र पूर्वैवाष्टम्युपोष्या। दिनद्वयेऽपि निशीथव्यापिनी, दिनद्वयेऽपि निशीथादन्यत्र रोहिणीयुतेति। षष्ठो यथा– सप्तमी ४२, कृत्तिका ४८, अष्टमी ४९, रोहिणी ४२। अत्र परैव, दिनद्वयेऽपि निशीथादन्यत्र रोहिणीयुतेति। सप्तमो यथा– सप्तमी ४८, तद्दिने रोहिणी ५८, अष्टमी ४२। अत्र परैवाष्टमी ग्राह्या। अत्रैव पक्षे परेद्युरेवोभयत्र या निशीथादन्यत्र रोहिणीयोगेऽपि परैवेति कैमुत्येन सिद्धम्। पूर्वेद्युरेव निशीथव्यापिनी परेद्युरेव निशीथादन्यत्र रोहिणीयुतेति चरमः पक्षः। यथा– सप्तमी ३०, अष्टमी २५, तद्दिने कृत्तिका ५, यथा वाऽष्टमी ६०। ४, अष्टमीशेषदिने कृत्तिका १। अत्रोदाहरणद्वयेऽपि परैवाष्टमी ग्राह्या, स्वल्पस्यापि रोहिणीयोगस्य प्राशस्त्येन मुहूर्त्तमात्राया अपि परस्याग्राह्यतया पूर्वत्र विद्यमानाया निशीथव्याप्तेरनादरात्। सर्वपक्षेषु यदि परदिने मुहूर्त्तन्यूना वर्तते तदा सा न ग्राह्या। किन्तु पूर्वैवेति। परेद्युरेव निशीथव्यापिनी, पूर्वेद्युरेव निशीथादन्यत्र रोहिणीयुता, यथा– सप्तमी ४८, रोहिणी ५५, अष्टमी ४८। अत्र परैव विद्धायां निशीथोत्तरं रोहिणीयोगस्याप्रयोजकत्वात्।

अत्र विस्तरेणोक्तानां बहुपक्षाणां संक्षेपनिर्णयसंग्रहो माधवमतमाश्रित्य पुरुषार्थचिन्तामणौ शुद्धसमायां शुद्धन्यूनायां वा विद्धसमायां विद्धन्यूनायां वा केवलाष्टम्यां सन्देह एव नास्ति, शुद्धाधिका केवलाष्टमी पूर्वैव, विद्धाधिका तु पूर्वदिन एव निशीथव्याप्तौ पूर्वा दिनद्वये निशीथव्याप्तावव्याप्तौ वा परैवेति। अथ रोहिणीयोगे यदि शुद्धसमायां शुद्धन्यूनायां वा ईषदपि रोहिणीयोगस्तदा न सन्देहः। शुद्धाधिकायां पूर्वदिने दिनद्वयेऽपि वा रोहिणीयोगे पूर्वैव। शुद्धाधिकायामुत्तरदिन एव रोहिणीयोगे मुहूर्त्तमात्रा परैव, विद्धाधिकायां पूर्वदिन एव निशीथात्पूर्वं निशीथे वा रोहिणीयोगे पूर्वा, दिनद्वयेऽपि परत्रैव वा निशीथे निशीथं विहाय वा रोहिणीयोगे परैवेति संक्षेपेण निर्णयसंग्रहः। एवं कौस्तुभादिग्रन्थानुसृतमाधवमतानुसारेणाष्टमी निर्णीता।

अष्टमी के योग से उत्तरार्ध निशीथ व्याप्तिता होती है। यह दोनों पक्ष मान्य हैं। इसी प्रकार वक्ष्यमाण रोहिणी योग भेद में भी समझना चाहिए। रोहिणी-अष्टमी का योग पूर्वदिन निशीथकाल में है व परदिन भी रोहिणी-अष्टमी का योग निशीथकाल में है। ये दो पक्ष हैं। तृतीय पक्ष में पूर्वदिन निशीथयोग – यथा सप्तमी ४० घटिका, कृत्तिका ३५ घटिका, दूसरे दिन अष्टमी ४६ घटिका व रोहिणी ३६ घटिका है, तो यहाँ पूर्वविद्धा ही अष्टमी ग्राह्य है। दूसरे दिन का निशीथयोग – यथा सप्तमी ४२ घटिका, कृत्तिका ५० घटिका, दूसरे दिन अष्टमी ४७ घटिका, रोहिणी ४९ घटिका है, तो दूसरे दिन वाली परा अष्टमी ग्राह्य है। दोनों दिन निशीथकालिक रोहिणी-अष्टमी योग विचार जैसा पूर्वदिन सप्तमी ४२, कृत्तिका ५०, परदिन अष्टमी ४७, रोहिणी ४९ है, तो यहाँ दूसरे दिन वाली अष्टमी ग्राह्य है। दोनों दिन निशीथ में रोहिणी-अष्टमी योग, यथा – सप्तमी ४२ घटिका, कृत्तिका ४३ घटिका, दूसरे दिन अष्टमी ४७ घटिका, रोहिणी ४८ घटिका है, तो दूसरे दिन वाली परा अष्टमी ग्राह्य है।

अन्यत्र – रोहिणीयुक्त अष्टमी होने पर भी दोनों दिन निशीथ में रोहिणी योग का प्रायः अभाव रहता है। दूसरे दिन निशीथव्यापिनी अष्टमी उसी निशीथ से अन्यत्र भाग में रोहिणी का योग होता है तो यथा सप्तमी ४७, दूसरे दिन अष्टमी ५०, इसी दिन कृत्तिका ४६ है तो परा अष्टमी ग्राह्य है। इस तुल्य युक्ति से पूर्वदिन निशीथव्यापिनी और उसी दिन निशीथ से अन्य भाग में रोहिणी का योग हो तो इस पक्ष में पूर्वा ही ग्राह्य है।

दोनों दिन निशीथ से अन्यत्र भाग में रोहिणी-अष्टमी का योग एक पक्ष है। दूसरे दिन निशीथव्यापिनी हो यह दूसरा पक्ष है।

यथा – सप्तमी ४८, इसी दिन कृत्तिका ३० और दूसरे दिन अष्टमी ४८ व रोहिणी २५, इन पक्षों में दूसरे दिन वाली रोहिणीयुक्ता परा अष्टमी ही ग्राह्य है। यदि दोनों दिन निशीथ से अन्यत्र रोहिणीयुक्ता अष्टमी और पूर्वदिन निशीथव्यापिनी रोहिणी हो तो यह तृतीय पक्ष है। यथा – सप्तमी २५, कृत्तिका ४८, दूसरे दिन अष्टमी २०, रोहिणी ४३ है, तो यहाँ भी परा अष्टमी ही ग्राह्य है।

रोहिणी योग की समता होने पर भी पूर्वा मात्र सप्तमीयोग विरुद्धत्वात्, यथा – अष्टमी ६०, पर दिन अष्टमी ४, प्रथम दिन कृत्तिका ५०, यहाँ पूर्वा ही ग्राह्य है। अहोरात्र रोहिणी योग साम्य होने पर भी पूर्वाष्टमी की शुद्धता व पूर्णव्याप्ति यह दो कारण हैं, पूर्वा ६० घटिकात्मिका ग्राह्य है।

यदि दोनों दिन निशीथव्यापिनी व परदिन निशीथ से अन्यत्र रोहिणीयुता अष्टमी हो तो यह चौथा प्रकार है। यथा – सप्तमी ४३, दूसरे दिन अष्टमी ४९ व कृत्तिका ४६, यहाँ भी परा अष्टमी ही ग्राह्य है। इस प्रकार दोनों दिन निशीथव्यापिनी हो तो पूर्वा ही ग्राह्य है। निशीथ से अन्यत्र रोहिणीयुता अष्टमी होना – यह पाँचवाँ पक्ष है। यथा – सप्तमी ४१, उसी दिन रोहिणी ४३, दूसरे दिन अष्टमी ४९ है, तो पूर्वा अष्टमी ही ग्राह्य है। दोनों दिन निशीथव्यापिनी अष्टमी व रोहिणी का योग निशीथ से भिन्न समय में है तो यह छठाँ पक्ष है। यथा – सप्तमी ४२, कृत्तिका ४८, दूसरे दिन अष्टमी ४९, इसी दिन रोहिणी ४२ है, तो यहाँ परा अष्टमी ही ग्राह्य है।

दोनों दिन निशीथ से अन्यत्र रोहिणी योग सातवाँ पक्ष है। यथा सप्तमी ४८, इसी दिन रोहणी ५८, दूसरे दिन अष्टमी ४२, यहाँ पर

भी परा अष्टमी ही ग्राह्य है। इसी पक्ष में परदिन उभयत्र निशीथ से अन्यत्र रोहिणी योग होने पर भी परा अष्टमी ही ग्राह्य है। कैमुत्य न्याय से पूर्वदिन निशीथव्यापिनी व दूसरे दिन निशीथ से अन्यत्र रोहिणीयुता अष्टमी– यह अन्तिम पक्ष है। इसमें उदाहरण – पूर्वदिन सप्तमी ३०, परदिन अष्टमी २५, इसी दिन कृत्तिका ५, अथवा पूर्वदिन अष्टमी ६० व दूसरे दिन ४ हो तो दूसरे ४ घटिका वाली अष्टमी के दिन कृत्तिका १ घटिका है तो इन दोनों उदाहरणों में परैव अष्टमी ग्राह्य है; क्योंकि थोड़ी भी अष्टमी निशीथकालिक रोहिणी के योग से प्रशस्त है, यदि मुहूर्त मात्र भी अष्टमी है। निशीथव्यापिनी रोहिणी योगवश परा ही ग्राह्य है। अतः पूर्व निशीथव्यापिनी अष्टमी का योग रोहिणी से न होने से अग्राह्य है। पूर्व के सभी पक्षों में परदिन अष्टमी एक मुहूर्त से भी न्यून है तो वह अग्राह्य है। अन्यथा पूर्वा एव ग्राह्य है। दूसरे दिन निशीथव्यापिनी अष्टमी हो और पूर्वदिन निशीथ से उत्तर रोहिणी का योग हो तो परा ही ग्राह्य है। उदाहरण – सप्तमी ४८ घ०, रोहिणी ५५ घ०, अष्टमी ४८ घ०, इस उदाहरण में सप्तमी के दिन अर्धरात्रि में रोहिणी है; किन्तु इसका योग अष्टमी से अर्धरात्रि के बाद होने से वह पूर्वदिन अग्राह्य व परदिन रोहिणी के योगाभाव में भी पर दिन वाली अष्टमी अपेक्ष्य है; क्योंकि पूर्व दिन अर्धरात्रि में रोहिणी का सप्तमी से योग होता है जो अग्राह्य है। यह बहुपक्षाश्रित निर्णय है।

पुरुषार्थचिन्तामणि में माधव के मत से संक्षेप में निर्णय प्रस्तुत है। १ शुद्धसमा, २ शुद्धन्यूना, ३ विद्धसमा, ४ विद्धन्यूना व ५ केवला अष्टमी। इनमें कोई सन्देह का अवसर नहीं है। शुद्धाधिका केवलाष्टमी पूर्वा एव (६० घटिकात्मिका), विद्धाधिका पूर्वदिन निशीथ-व्याप्ति से

पूर्वा एव (सप्तमी ४२, पर दिन अष्टमी ४२), निशीथ-व्याप्ति हो या न हो तो भी परा एव ग्राह्य है, यहाँ रोहिणीयोग में शुद्ध समा या शुद्ध न्यूना हो क़िन्तु थोड़े भी रोहिणी के योग से युक्तः अष्टमी ग्राह्य है। यह निस्सन्देह है। शुद्धाधिका में पूर्व या दोनों दिन रोहिणी का योग होने से पूर्वा एव ग्राह्य है। शुद्धाधिका में उत्तरदिन मुहूर्त मात्र भी रोहिणी योग में परैव ग्राह्य है। विद्धाधिका में पूर्वदिन में निशीथ से पूर्व या निशीथ में रोहिणी के योग में परा ही ग्राह्य है़। संक्षेप से निर्णय संगृहीत है। इस प्रकार कौस्तुभ व माधव के मतानुसार अष्टमी का निर्णय है, यहाँ कोई केवल अष्टमी जन्माष्टमी वृद्धि रोहिणीयुता हो तो उसे जयन्ती मानते हैं।

**अत्र केचित्केवलाष्टमी जन्माष्टमी। सैव रोहिणीयुता जयन्तीसंज्ञेति जयन्त्यष्टम्योर्व्रतैक्यमाहुः। अन्ये तु जन्माष्टमीव्रतं जयन्तीव्रतं च भिन्नम्। रोहिणीयोगाभावे जयन्ती, व्रतलोपाज्जन्माष्टमीव्रतमेव कार्य्यम्। यस्मिन् वर्षे जयन्त्याख्ययोगो जन्माष्टमी तदा जयन्त्यामन्तर्भूता स्यादिति। जयन्तीदिने निशीथाख्यकर्मकालेऽष्टम्याद्यभावेऽपि साकल्यवचनापादितकर्मकालव्याप्तिमादाय व्रतद्वयमपि जयन्तीदिन एव तन्त्रेणानुष्ठेयम्। व्रतद्वयस्याप्यकरणे दोषश्रवणे न करणे फलश्रवणे च नित्यकाम्योभयरूपत्वात्, न तु निशीथव्याप्तायां पूर्वाष्टम्यां जन्माष्टमीव्रतं कृत्वा जयन्तीदिने पारणमनुष्ठेयम्। नित्यव्रतलोपे प्रत्यवायापातादित्याहुः।**

यहाँ जयन्ती व अष्टमी दोनों को एक ही व्रत मानते हैं; किन्तु अन्यों के अनुसार जयन्ती व अष्टमी भिन्न-भिन्न व्रत हैं। अतः रोहिणीयोग के अभाव भें जयन्ती व्रत भी लुप्त है। ऐसी स्थिति में

जन्माष्टमी व्रत ही करणीय है। जिस वर्ष जयन्तीयोगयुक्त अष्टमी है तो जयन्ती के अन्तर्गत अष्टमी भी हो जाती है। जयन्ती के दिन निशीथ कार्यकाल में अष्टमी के अभाव में भी साकल्य वचन से अन्यकालिक अष्टमीयोग से कर्मकालव्याप्ति जैसा (मन्यमान) मानते हुए दोनों व्रतों का पालन करना ही उत्तम है; क्योंकि दोनों व्रतों के न करने से दोष व करने से फलश्रुति होने से नित्य व काम्यव्रत परस्पर उभयनिष्ठ हैं। निशीथकालिक अष्टमी में व्रत व जयन्ती में पारण नहीं करना चाहिए; क्योंकि नित्यव्रत नष्ट होने पर विघ्न आता है।

**निर्णयसिन्धौ तूक्तरीत्या माधवमतमुपपाद्य हेमाद्रिमतेन जन्माष्टमीव्रतमेव नित्यं जयन्तीव्रतं तु नित्यमपि कलियुगे लुप्तमिति केचिन्नानुतिष्ठन्ति इत्युक्त्वा स्वमतेन यस्मिन्वर्षे पूर्वदिन एव निशीथेऽष्टमी, परदिन एव निशीथादन्यत्र जयन्त्याख्ययोगस्तत्रोपोषणद्वयं कार्यम्। व्रतद्वयस्यापि नित्यत्वेनाकरणे दोषाज्जयन्त्यामष्टम्यन्तर्भावोक्तिस्तु मूर्खप्रतारणमात्रमिति प्रतिपादितम्।**

**मम तु कौस्तुभादिग्रन्थपरिगृहीतमाधवमतरीत्या जयन्त्यन्तर्भावेनाष्टमीव्रतानुष्ठानमेव युक्तं प्रतिभाति। अत्र जयन्तीव्रते बुधसोमवारयोगः प्राशस्त्यविधायको न तु रोहिणीव निणार्यक इति। अथ द्वितीयदिने भोजनरूपं पारणं व्रताङ्गं विहितम्, तत्कालो निर्णीयते। केवलतिथ्युपवासे तिथ्यन्ते नक्षत्रयुक्ततिथ्युपवासे उभयान्ते पारणं कार्यम्। यदि तिथिनक्षत्रयोरेकतरान्तो दिने लभ्यते उभयान्तस्तु रात्रौ तदा दिवैवान्यतरान्ते पारणम्। यदा दिवा नैकस्याप्यन्तस्तदा निशीथादर्वागन्यतरान्ते उभयान्ते वा पारणम्। यदा तु निशीथाव्यवहितपूर्वपक्षेण एकतरान्त उभयान्तो वा तदा निशीथेऽपि पारणं कार्यम्। भोजनासम्भवे पारणासम्पत्त्यर्थं फलाद्याहारो विधेयः। केचित्तूक्तविषये निशीथे पारणं न कार्यम्; किन्तूपवासतृतीयेऽह्नि दिवा कार्यमिति प्राहुस्तन्न युक्तम्, अशक्तस्त्वेकतरान्ताभावेऽप्युत्सवान्ते प्रातरेव देवपूजाविसर्जनादि कृत्वा पारणं कुर्यादिति जन्माष्टमीनिर्णयः।**

निर्णयसिन्धु में उक्त रीति से माधव मत उपस्थापित कर हेमाद्रि के मत से जन्माष्टमी व्रत नित्य व जयन्ती व्रत नित्य होते हुये भी कलियुग में लुप्तप्राय है, जिसे कुछ लोग नहीं करते हैं। यह कहकर अपने अनुसार जिस वर्ष पूर्वदिन निशीथ में अष्टमी, दूसरे दिन निशीथ से अन्यत्र जयन्ती (रोहिणी-अष्टमीयोग) हो वहाँ दोनों उपवास करना चाहिए; क्योंकि दोनों व्रत नित्य हैं व नित्य के न करने में दोष है। जयन्ती के अन्तर्गत अष्टमी हो गई है, ऐसा कहना मूर्खप्रतारण मात्र है, ऐसा कहा है।

मुझे कौस्तुभादि ग्रन्थों से परिगृहीत माधव मत के अनुसार जयन्ती के अन्तर्भूत अष्टमी होने से पृथक् अष्टमी व्रत अकरणीय है यह युक्तियुक्त प्रतीत हो रहा है। यहाँ जयन्ती व्रत में बुध या सोमवार का योग प्रशस्ति-विधायक है, न कि रोहिणी की भाँति निर्णायक है।

द्वितीय दिन व्रतांगरूप पारण अर्थात् भोजन पर विचार व निर्णय– केवल तिथिव्रत में, नक्षत्रयुक्त तिथि के उपवास में दोनों के अन्त में पारण करना चाहिए। यदि तिथि-नक्षत्रों में एक का दिन में अन्त हो जाय, तो दूसरे के अन्त की प्रतीक्षा न कर दिन में ही भोजन कर लेना चाहिए। यदि दिन में एक का भी अन्त न हो तो निशीथ के पूर्व एक के अन्त में या दोनों के अन्त में पारण करना चाहिए। अव्यवहित निशीथ व्यवधानरहित एक के अन्त या दोनों के अन्त में निशीथ में भी पारण कर सकते हैं। यदि भोजन सम्भव न हो तो पारण हेतु फलाहार भी कर सकते हैं। कुछ आचार्यों ने पारण के विषय में निशीथ का निषेध किया है, पूर्व में निशीथ पारण न करके तीसरे दिन में ही पारण करना चाहिए; किन्तु यह पक्ष युक्त नहीं है। असमर्थ व्यक्ति को एक के अन्त के अभाव में उत्सवान्त में व्रत सम्बन्धी देवता का प्रातः पूजनादि, विसर्जन करके पारण कर लेना चाहिए। यह जन्माष्टमी का निर्णय है।

अथ भाद्रशुक्ला दूर्वाष्टमी। सा पूर्वविद्धैव ग्राह्या। इयं ज्येष्ठामूलर्क्षयुता त्याज्या। इदं दूर्वापूजनव्रतं कन्यार्केऽगस्त्योदये च वर्ज्यम्। इदं स्त्रीणां नित्यम्। अगस्त्योदये दूर्वापूजने ज्येष्ठामूलयोश्च पतिपुत्रनाशिनीति शातातपः। यदा पुनर्ज्येष्ठादिविरहो न सम्भवति तदा दूर्वामभ्यर्च्यैकभक्तं कार्यम्। अतोऽस्यां पूर्वविद्धायां ज्येष्ठामूलरहितायामगस्त्यानुदये सिंहस्थे सूर्ये दूर्वामभ्यर्च्याग्निपक्वमन्नं भोक्तव्यम्, एवं कृते नारी सप्तजन्मनि पतिपुत्रविरहं नाप्नोतीति। अत्रैव ज्येष्ठादेवीपूजाव्रतम्। तत्र केवलाष्टमीप्राधान्येन ज्येष्ठानक्षत्रप्राधान्येन चोक्तम्। अत्र दाक्षिणात्याः केवलज्येष्ठानक्षत्रे एव कुर्वन्ति। तच्चानुराधायामावाहनम्, ज्येष्ठायां पूजनम्, मूले विसर्जनमिति त्रिदिनरूपम्। तत्र यदा पूर्वमध्याह्नमारभ्य प्रवृत्ता ज्येष्ठा द्वितीयदिने मध्याह्ने मध्याह्नात्पूर्वं वा समाप्यते तदा पूर्वदिन एव पूजनम्, यदा पूर्वदिने मध्याह्नोत्तरं प्रवृत्ता परदिने मध्याह्ने समाप्ता तदाऽष्टमीयोगवशेन पूर्वा परा वा ग्राह्या। उभयत्राष्टमीयोगे पूर्वैव। यदा पूर्वत्र मध्याह्नमारभ्य मध्याह्नोत्तरं वा प्रवृत्ता परदिने मध्याह्नोत्तरमपराह्नं स्पृशति तदाऽष्टमीयोगाभावेऽपि परैवेति।

भाद्रशुक्ला अष्टमी दूर्वाष्टमी के नाम से प्रसिद्ध है। यह पूर्वा (पूर्वविद्धा) ग्राह्य है। ज्येष्ठा व मूल नक्षत्र युक्त अष्टमी त्याज्य है। यह दूर्वापूजन व्रत कन्या के सूर्य व अगस्त्य के उदय होने पर त्याज्य है। यह दूर्वापूजन व्रत अगस्त्योदय, ज्येष्ठा, मूल में करने से स्त्रियों के पति-पुत्र का नाश होता है। यह महर्षि शातातप का वचन है। यदि ज्येष्ठादि दोषरहित भाद्रशुक्ला अष्टमी उपलब्ध हो तो दूर्वा की पूजा करके एकभुक्त व्रत करना चाहिए। अतः पूर्वविद्धा ज्येष्ठा-मूलरहित अगस्त्यास्त व सिंहस्थ सूर्य में व्रत विहित है। दूर्वा की पूजा करके अग्निपक्व अन्न खाना चहिए। ऐसा करने से सात जन्म तक स्त्री पुत्र-पति की विरहिणी नहीं हो सकती। इसी में ज्येष्ठा

देवी की पूजा व व्रत होता है। यह व्रत केवल अष्टमी तिथि प्रधान व्रत है, ज्येष्ठा की प्रधानता दाक्षिणात्य मानते हैं। वे ज्येष्ठा ही में ज्येष्ठा की पूजा करते हैं। वे इस तीन दिन के व्रत का अनुराधा में आवाहन, ज्येष्ठा में पूजन और मूल में विसर्जन करते हैं। यदि पूर्वदिन मध्याह्न से प्रारम्भ होकर दूसरे दिन मध्याह्न या मध्याह्न के पूर्व ज्येष्ठा समाप्त हो जाय तो पूर्वदिन पूजन करना चाहिए। यदि पूर्वदिन मध्याह्न के बाद प्रारम्भ हो और दूसरे दिन मध्याह्न में समाप्त हो तो अष्टमी– योगवश पूर्वा या परा ग्रहण करें, दोनों दिन अष्टमी-योग से पूर्वा ही ग्राह्य है। यदि पूर्वदिन मध्याह्न या मध्याह्नोत्तर से प्रारम्भ होकर दूसरे दिन मध्याह्नोत्तर या मध्याह्न का स्पर्श करे तो अष्टमी-योग के अभाव में भी पर दिन की अष्टमी ग्राह्य है।

**अथाश्विनकृष्णाष्टमी। तत्र दोषचतुष्टयरहितायां महालक्ष्मीव्रतं कार्यम्, ते च दोषाश्च –**

**"त्रिदिने चावमे चैव अष्टमीं नोपवासयेत्।**

**पुत्रहा नवमीविद्धा स्वघ्नी कन्यागते रवौ"॥ इति।**

**स्वं धनं त्रिदिने पूर्वमध्योत्तरेति, वृद्धौ त्रिस्पृगेव, अवमे लुप्ततिथौ, एतन्निषेधचतुष्कं प्रारम्भे वर्ज्यम्। षोडशवर्षसाध्यव्रतस्यान्तरा दोषसम्भवेऽकरणं प्रसज्येत, नवमीवेधनिषेधोऽपि चन्द्रोदयादर्वागेव चन्द्रोदयादूर्ध्वगा त्रिमुहूर्त्ताऽष्टमी चेत् त्रिमुहूर्त्तव्यापित्वे चन्द्रोदय एव पूजार्घादिविधानात् सैवोपोष्येति चन्द्रोदयेऽष्टम्यभावे नवमीविद्धैवेति।**

आश्विनकृष्णा अष्टमी। यह चार दोषों से रहित अष्टमी महालक्ष्मी व्रत करने योग्य होती है। ये चार दोष -- १. नवमीवेध, २. क्षय तिथि, ३. वृद्धि तिथि, ४. कन्या का सूर्य हैं। पूर्व, मध्य व अन्तिम इन तीनों दिनों में क्षय व वृद्धि दोष नहीं रहना चाहिए। अन्यथा नवमीवेध से पुत्रहानि, कन्या के सूर्य से धनहानि, क्षय-वृद्धि से पतिहानि होती है।

इस व्रत में क्षय, वृद्धि, त्रिस्पृक् तिथियाँ नहीं होनी चाहिए। ये चार निषेध प्रारम्भ में त्याज्य हैं। यह सोलह (षोडश) वर्ष तक व्रत करना चाहिए। यदि बीच में कोई दोष उपस्थित हो तो भी प्रायश्चित्तादि करके व्रत करना चाहिए।नवमीवेध निषिद्ध होने पर भी चन्द्रोदय के बाद तीन मुहूर्त तक अष्टमी की व्याप्ति होने पर चन्द्रोदय में पूजा, अर्घादिविधान होने से यह अष्टमी व्रत के योग्य मानी गई है। यदि अष्टमी में चन्द्रोदय नहीं होता है तो नवमीविद्ध ही अष्टमी ग्राह्य है।

**अथाश्विनशुक्ला महाष्टमी। सा घटिकामात्राऽप्यौदयिकी नवमीयुता ग्राह्या, सप्तमीस्वल्पयुता सर्वथा त्याज्या। यदा तु पूर्वत्र सप्तमीयुता परत्रोदये नास्ति घटिकान्यूना वा वर्त्तते तदा पूर्वा सप्तमीविद्धाऽपि ग्राह्या। इयं भौमवारेऽतिप्रशस्ता। यदा च पूर्वदिने षष्टिघटिकाष्टमी परदिने मुहूर्त्तादिव्यापिनी तदा नवमीयुताऽप्युत्तरां त्यक्त्वा सम्पूर्णत्वात्पूर्वैव ग्राह्या। एवं नवम्याः क्षयवशेन दशमीदिने सूर्योदयोत्तरमनुवृत्त्यभावेऽष्टमीनवमीयुतामौदयिकीमपि त्यक्त्वा सप्तमीयुतैवाष्टमी ग्राह्या। अष्टम्यां पुत्रवता उपवासो न कार्यः। कुलाचारप्राप्तौ किञ्चिद्भक्ष्यं प्रकल्प्य कार्य इति।**

**अथ कार्त्तिककृष्णाष्टमी कालाष्टमी। सा मध्याह्नव्यापिनी ग्राह्या। दिनद्वये मध्याह्नव्याप्तौ पूर्वेति निर्णयसिन्धुः। कौस्तुभादौ प्रदोषव्यापिनी। उभयदिने प्रदोषव्याप्तौ तदैकदेशस्पर्शे वा परैव। यदा पूर्वत्र प्रदोषव्याप्तिरेव तदा बहुशिष्टानुरोधात् प्रदोषव्याप्त्यैव निर्णयो न मध्याह्नव्याप्तेति भाति। अत्र कालभैरवपूजां कृत्वा त्रयोऽर्घ्या देयाः, उपवासो जागरश्च कार्य इति।**

**अथ कार्त्तिकशुक्लाष्टमी गोपाष्टमी। अत्र गोपूजनगोप्रदक्षिण-गोग्रासगवानुगमनैरिष्टकामावाप्तिर्महत्फलं चेति।**

**अथ पौषशुक्लाष्टमी बुधवारयुता महाभद्रा। तत्र स्नानजपहोमतर्पण-विप्रभोजनमहेश्वरपूजादीनि कार्याणि। अस्यां भरणीयोगे महापुण्यत्वमित्येके। रोहिण्यार्द्रायोगेऽप्यपरे।**

अथ माघशुक्लाष्टमी भीष्माष्टमी। अस्यां भीष्मोद्देशेन ये श्राद्धं कुर्वन्ति ते सन्ततिमन्तो भवन्ति। अत्र श्राद्धं काम्यं तर्पणं तु नित्यम्, तर्पणे कृते संवत्सरोपात्तदुरितनाशः, अकृते पुण्यनाश इत्युक्तेः। तत्र तर्पणमन्त्रः–

"वैयाघ्रपदगोत्राय सांकृत्यप्रवराय च।
गङ्गापुत्राय भीष्माय आजन्मब्रह्मचारिणे॥
अपुत्राय जलं दद्मि नमो भीष्माय वर्मणे।
भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः॥
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्"॥ इति।

एवमपसव्येन तर्पणं कृत्वा आचम्य सव्येनार्घ्यं दद्यात्। मन्त्रः–

"वसूनामवताराय शन्तनोरात्मजाय च।
अर्घ्यं ददामि भीष्माय आबाल्यब्रह्मचारिणे"॥ इति।

अत्र जीवत्पितृकस्य नाधिकार इति कौस्तुभे। जीवत्पितृकस्याधिकार इति बहवः। अत्र मध्याह्नव्यापिन्यष्टमी ग्राह्या श्राद्धादेरेकोद्दिष्टत्वादिति। अथ फाल्गुनशुक्लाष्टम्यां लक्ष्मीः सीता च पूज्या। तच्च प्रातः स्नात्वा षोडशोपचारैः सीतां सम्पूज्य यदन्ननैवेद्यं तदेव ब्राह्मणेभ्यो दत्वा स्वयमपि भुक्त्वा प्रदोषे यथाशक्त्या दीपमाला कार्य्या। बुधवारश्चेदेकभक्तं कार्य्यमित्यष्टमीनिर्णयस्समाप्तः।

आश्विनशुक्ला अष्टमी उदयकालव्यापिनी नवमीयुता ही ग्राह्य है। थोड़ी भी सप्तमीयुता अष्टमी ग्राह्य नहीं है। पूर्वा सप्तमीयुता परदिन उदय में अष्टमी का अभाव या एक घटिका से न्यून अष्टमी हो तो सप्तमीविद्धा अष्टमी ही ग्राह्य है। यह मंगल के दिन अतिप्रशस्त मानी गई है।

यदि प्रथम दिन साठ ६० घटिका अष्टमी हो और दूसरे दिन मुहूर्तादि व्यापिनी हो तो पूर्वा षष्टिघटिकात्मिका अष्टमी ग्राह्य है और पर दिन में नवमीयुता भी अष्टमी त्याज्य है। यदि नवमी का क्षय हो और दूसरे दिन दशमी में सूर्योदय होता है तो उदयकालिकी नवमीयुता अष्टमी का परित्याग करके सप्तमीयुता ही अष्टमी ग्राह्य

है। अष्टमी में पुत्रवान् उपवास न करें, यदि कुलाचारानुकूल व्रत अनिवार्य है, तो फलमूलादि स्वल्पाहार करके व्रत करना चाहिए।

अथ कार्त्तिककृष्ण अष्टमी निर्णय – यह मध्याह्नव्यापिनी ग्राह्य है। इसे कालाष्टमी कहते हैं। दोनों दिन मध्याह्न-व्याप्ति में पूर्वा ग्राह्य है, यह निर्णयसिन्धु का मत है। कौस्तुभादि के अनुसार प्रदोषव्यापिनी ग्राह्य है, दोनों दिन प्रदोषव्यापिनी या प्रदोष के एकदेश (भाग) का स्पर्श करने वाली प्राप्त है तो परा ही ग्राह्य है, यदि पूर्वोक्त दोष व्याप्ति होने पर भी शिष्टानुरोध से प्रदोषव्यापिनी ही ग्राह्य है। इसमें कालभैरव की पूजा करके तीन अर्घ्य प्रदान कर, उपवास व जागरण करना चाहिए। कार्त्तिकशुक्ला अष्टमी गोपाष्टमी है। इसमें गोपूजन, गोप्रदक्षिणा, गोग्रास और गवानुगमन (गाय के पीछे चलने) से इष्ट कार्य की सिद्धि होती है और महान् पुण्य-फल होता है।

पौषशुक्ला अष्टमी बुधवारयुक्त होने पर महाकल्याणकारिणी होती है। इसमें स्नान-दान-जप-होम-तर्पण-ब्राह्मणभोजन व भगवान् शिव की पूजा आदि पुण्य कार्य किये जाते हैं। भरणी के योग से यह विशिष्ट फलदात्री होती है। यह किसी का मत है। अन्य रोहिणी-आर्द्रा योग में विशेष मानते हैं। माघशुक्ला अष्टमी भीष्माष्टमी है। इसमें भीष्म के उद्देश्य से श्राद्ध किया जाता है, जिससे व्रती सन्ततिवान् हो जाता है। इसमें श्राद्ध व संवत्सरपर्यन्त नित्य तर्पण करने से सर्वदुरितनाश हो जाता है और न करने से पुण्य का नाश होता है। तर्पण का मन्त्र मूल में है। अपसव्य होकर तर्पण व सव्य होकर अर्घ देना चाहिए। अर्घ का मन्त्र मूल में है। यह भीष्मोद्देशक श्राद्ध-तर्पण जीवितपिता पुरुष के लिए नहीं है। यह कौस्तुभकार का मत है। अनेकों का मत है कि जीवितपिता को भी श्राद्ध-तर्पण करना चाहिए। एकोद्दिष्ट श्राद्ध होने से यह मध्याह्नव्यापिनी अष्टमी ग्राह्य है।

अथ फाल्गुनशुक्ला अष्टमी। इसमें लक्ष्मी व सीता की पूजा होती है। प्रातः स्नान कर षोडशोपचार से सीता की पूजा कर जो अन्न

नैवेद्य के रूप में चढ़ाया जाय (अर्पण किया जाय) उसे ब्राह्मण को दे देना चाहिए और स्वयं भी भोजन करना चाहिए, सायंकाल यथाशक्ति दीपमालिकोत्सव मनाना चाहिए। यदि इस दिन बुधवार हो तो एकभक्त (एक बार भोजन) होना चाहिए।

**अथ सामान्यनवमीनिर्णयः। नवमी सर्वत्राष्टमीविद्धैव कार्या इति। अथ विशेषनिर्णयः। चैत्रशुक्ला रामनवमी, पुनर्वसुयुतायां मध्याह्ने श्रीरामजन्म-श्रवणात्। अस्यां मध्याह्नव्यापिन्यामुपोषणं कार्यम्। पूर्वेद्युरेव मध्याह्ने सत्त्वे सैव ग्राह्या। दिनद्वये मध्याह्नव्याप्तावव्याप्तौ वा परा, अष्टमीविद्धाया निषेधात्। अतः पूर्वेद्युः सकलमध्याह्नव्यापिनीमपि त्यक्त्वा मध्याह्नैकदेशव्यापिन्यपि परैव ग्राह्या। केचित्त्वष्टमीविद्धां मध्याह्नव्यापिनीं पुनर्वसुयुतामपि त्यक्त्वा परेद्युस्त्रिमुहूर्त्ताऽपि सर्वैरप्युपोष्या। यदि तु दशम्या ह्रासवशेन पारणादिने स्मार्त्तानामेकादशीव्रतप्राप्तिस्तदा स्मार्तैरष्टमीविद्धोपोष्या, वैष्णवैर्मुहूर्त्तत्रययुता परैवोपोष्या, शुद्धाया नवम्या अलाभे मुहूर्त्तत्रयन्यूनत्वे वा सर्वैरप्यष्टमीविद्धैवो-पोष्येत्याहुः। इदं व्रतं नित्यं काम्यं च। अत्र कृत्यं तु—**

**"उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम्।**

**तस्मिन्दिने तु कर्त्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः"॥**

**अस्या उपोषणे कैवल्यप्राप्तिरनुपोषणे कुम्भीपाकभयमिति। अत्र सर्वेऽधिकारिण इति रामनवमी। अस्यामेव नवम्यां देवीनवरात्रसमाप्तिः कार्या। अत्र निर्णय आश्विननवरात्रनवमीवदिति।**

**अथ वैशाखनवमी। अत्र पक्षद्वयगतायामपि व्रतं दुर्गापूजां च कृत्वा कुमारीं भोजयेत्। ततो महदनिष्टशान्तिः सौभाग्यप्राप्तिश्च। अथ ज्येष्ठशुक्लनवमी। तस्यामुमां सर्वोपचारैः सम्पूज्य ब्राह्मणान् कुमारींश्च भोजयित्वा नक्तव्रती पायसान्नं वाग्युतो भुक्त्वा व्रतं समापयेदिति। आषाढस्योभयनवम्यामुपोष्य पञ्चगव्येन स्नात ऐन्द्रीं गजारूढामावाह्य सर्वोपचारैः पूज्य ब्राह्मणान् कुमारींश्च सम्भोज्य स्वयं नक्तव्रती भवेदिति। श्रावणस्योभयनवम्यां कौमारीनाम्नीं देवीं रौप्यमयीं क्षीरेण स्नापयित्वा अगरुचन्दनैः करवीरपुष्पैर्दशाङ्गधूपैर्मोदकनैवेद्यैः**

सम्पूज्य कुमारीः सुवासिनीर्ब्राह्मणांश्च सम्भोज्य स्वयं विल्वपत्राशन उपवसेद्वा क्षीरषष्ठिकपायसेन नक्तं कुर्यादिति। अथ भाद्रशुक्लनवम्यामुपोष्य नन्दानाम्नीं दुर्गां भक्त्या पूज्य नक्तव्रतेन विष्णुलोकप्राप्तिफलं पापहानिः सर्वापन्नाशश्चेति। आश्विनकृष्णनवम्यां देवीं पूज्य गीतवादित्रनिःस्वनैर्देवीं बोधयेदिति देवीपुराणे। आश्विनशुक्ला महानवमी मन्वादिश्च। सा तु बलिदानव्यतिरिक्तविषये पूजोपोषणादावष्टमीविद्धा ग्राह्या। सा च यद्यष्टमी दिनं सायं त्रिमुहूर्त्ता स्यात्तदैव ग्राह्या। त्रिमुहूर्त्तन्यूनत्वे परैव ग्राह्या। नवमीप्रयुक्तमहाबलिदाने तु दशमीविद्धा। यदा शुद्धाधिका नवमी तदा बलिदानमपि पूर्णत्वात्पूर्वत्रैव कार्यम्। अष्टमीनवम्योः सन्धौ पूजोक्ता, साऽष्टमीनवम्योः पृथक्त्वे दिवारात्रौ वाऽष्टम्यन्तनाडी नवम्याद्यनाड्योः कार्या, यदि त्वष्टमीनवम्योर्मध्याह्नेऽपराह्ने वा योगस्तदाऽष्टमी-नवमीपूजयोरप्येकदिन एव प्राप्तेरष्टमीनवमीपूजां तत्सन्धिपूजां च तन्त्रेण करिष्य इति सङ्कल्प्य तन्त्रेण पूजा कार्या। यदि शुद्धाधिकाऽष्टमी तदा पूर्वेद्युरष्टमीपूजा, परेद्युः सन्धिपूजानवमीपूजयोस्तन्त्रमिति। कार्तिकशुक्लनवम्यां मथुराप्रदक्षिणोक्ता। इयं युगादिरपि। अस्यां पूर्वाह्णव्यापिन्याममपिण्डक-श्राद्धमुक्तमिति। मार्गशीर्षशुक्लनवमी नन्दिनीनाम। अस्यां त्रिरात्रोपोषितः श्रीदेवीं पूजयित्वाऽश्वमेधफलं विष्णुलोकप्राप्तिरिति भविष्ये। माघशुक्ल-नवम्यां महानद्यां स्नानदानादिकमक्षययम्। सर्वासु नवमीषु तिथिपतित्वेन सरस्वती पूज्येति नवमीनिर्णयः।

अथ सामान्य नवमी निर्णय। नवमी सर्वत्र अष्टमीविद्धा ग्राह्य है। यह सामान्य निर्णय है। विशेष निर्णय – पुनर्वसुयुता मध्याह्नव्यापिनी चैत्रशुक्ल रामनवमी में राम का जन्मोत्सव मनाया जाता है। यही व्रत के योग्य है। यदि पूर्वदिन मध्याह्नव्यापिनी हो तो पूर्वा ही ग्राह्य है, दोनों दिन मध्याह्नव्याप्ति हो तो परा ही ग्राह्य है; क्योंकि अष्टमी-

विद्धा का निषेध है। पूर्वदिन सम्पूर्ण मध्याह्नव्यापिनी का त्याग करके, मध्याह्न के एकदेश से व्याप्त होने पर भी परा ही ग्राह्य है। कुछ आचार्यों ने अष्टमीविद्धा मध्याह्न-व्यापिनी पुनर्वसुयुता भी नवमी का त्याग कर दूसरे दिन त्रिमुहूर्त्तव्यापिनी नवमी का ग्रहण माना है। यदि दशमी की हानि हो तो एकादशी के दिन स्मार्तों के पारण का अवसर प्राप्त होगा, ऐसी स्थिति में अष्टमीविद्धा ही नवमी ग्राह्य है। वैष्णवों को मुहूर्तत्रययोगवती परा ही नवमी ग्राह्य है। यदि शुद्धा नवमी की प्राप्ति न हो अथवा दूसरे दिन तीन मुहूर्त से न्यून नवमी हो तो सभी अष्टमीयुता ही नवमी व्रत कर सकते हैं। यह व्रत नित्य व काम्य दोनों है। रामनवमी में उपवास, जागरण व पितृतर्पण करने से ब्रह्म की प्राप्ति होती है और इस व्रत के प्रभाव से कैवल्य मुक्ति मिलती है तथा व्रत न करने से कुम्भीपाक नरक मिलता है। इस व्रत के लिए सभी अधिकृत हैं। इसी नवमी में देवी के नवरात्र-व्रतोपासना की समाप्ति की जाती है। इस नवरात्र का निर्णय, आश्विन नवरात्र नवमी जैसा ही समझना चाहिए। जो यथास्थान उक्त है।

अथ वैशाख नवमी। वैशाख के दोनों पक्षों की नवमी में व्रत, दूर्गापूजा करके कुमारियों को भोजन कराने से महान् अरिष्ट की शान्ति व सौभाग्य की प्राप्ति होती है। ज्येष्ठशुक्ल नवमी में उमा का सर्वोपचार से पूजन करना, कुमारी-ब्राह्मण-भोजन कराना और स्वयं नक्तव्रती हो उपवास करना व पायसान्न भोजन कर व्रत का समापन करना चाहिए। आषाढ़ के दोनों पक्षों की नवमी व्रत में पञ्चगव्य से स्नान कर गजारूढ ऐन्द्री (इन्द्राणी) का आवाहन, सर्वोपचार से पूजन कर ब्राह्मण व कुमारी को भोजन कराकर स्वयं नक्तव्रती होना चाहिए।

श्रावण की दोनों नवमी के दिन देवी की चाँदी की मूर्ति को दूध से स्नान कराकर सुगन्ध चन्दन, कनेर पुष्प, दशांग धूप, मोदक नैवेद्य से पूजन कर कुमारी, सुवासिनी व ब्राह्मणों को भोजन कराकर स्वयं विल्वपत्र खाकर उपवास करे या रात्रि में साठी के चावल की खीर का भोजन करे। भाद्रशुक्ला नवमी, इसमें नन्दा नाम से प्रसिद्ध दुर्गादेवी का भक्तिभावपूर्वक पूजन व रात्रिव्रत करने से विष्णुलोक की प्राप्ति होती है और सभी पापों व आपदाओं का नाश हो जाता है। आश्विन-कृष्णा नवमी में देवी का गीत-वाद्य के साथ पूजन और रात्रिजागरण करना चाहिए। यह देवीपुराण का वचन है। आश्विनशुक्ला नवमी मनु-आविर्भाव की आदि तिथि है। यह तिथि प्रथम मनु की उत्पत्ति तिथि है। यह पूजा, उपवास, बलिदान आदि कार्यों के लिए विद्धा अष्टमी ग्राह्य है। यह अष्टमी के दिन सायंकाल तीन मुहूर्त (लगभग ६ घटिका) प्राप्त हो जाय, तो यही ग्राह्य है, यदि तीन मुहूर्त से न्यून हों तो परा ग्राह्य है। नवमीप्रयुक्त महाबलिदान में दशमीविद्धा नवमी ग्राह्य है। यदि नवमी शुद्धाधिका अर्थात् ६० घटिका हो तो इसी में बलिदान करना चाहिए। यदि दूसरे दिन दशमीविद्धा स्वल्प नवमी हो तो उसमें बलिप्रदानादि कर्म नहीं करना चाहिए। जो पूजा अष्टमी-नवमी की सन्धि में होती है, वह पूजा यदि अष्टमी, नवमी को पृथक् कर हो तो दिन या रात्रि में अष्टमी की अन्तिम व नवमी की आदि नाड़ियों में करनी चाहिए। अष्टमी, नवमी के दिन मध्याह्न या अपराह्ण में जो कार्य होता है वह, इन दोनों तिथियों में की जाने वाली पूजा व सन्धिपूजा एक संकल्प व एक तन्त्र से एक ही दिन (मध्याह्न या अपराह्ण योग के ही दिन) तीनों पूजा करनी चाहिए। यदि शुद्धा अष्टमी

अधिक हो तो उसी दिन अष्टमी की पूजा और दूसरे दिन नवमी व सन्धि की दोनों पूजा एक साथ एक तन्त्र से करनी चाहिए। इस नवरात्र में जो स्वयं पूजा करने में असमर्थ हो वह नवरात्रनिमित्तक सम्पूर्ण विधि दूसरे से पूर्ण करा सकता है। यदि षोडशोपचार पूजन में असमर्थ हो तो पञ्चोपचार से ही पूजन करे।

कार्त्तिकशुक्ला नवमी। इसमें मथुरा नगरी की परिक्रमा होती है। यह युगादि तिथि भी है जो पूर्वाह्णव्यापिनी ग्राह्य है, इसमें विना पिण्ड का श्राद्ध (आमान्न दान) होता है। मार्गशीर्षशुक्ला नवमी नन्दिनी नाम से प्रसिद्ध है। इसमें तीन रात्रि उपवास करके श्रीदेवी की पूजा करनी चाहिए। इस व्रतोपवास व पूजा से अश्वमेध का फल व विष्णुलोक की प्राप्ति होती है। यह भविष्यपुराण का वचन है। माघ-शुक्ला नवमी में पुण्य नदी में स्नान और दान से अक्षय फल की प्राप्ति होती है। नवमी तिथि की स्वामिनी सरस्वती होने से सभी नवमी में सरस्वती की पूजा की जाती है।

**अथ साधारणदशमीनिर्णयः। दशमी तूपवासादौ नवमीयुतैव ग्राह्या। पूर्वविद्धाया अलाभे उत्तरविद्धा ग्राह्येति। अथ विशेषनिर्णयः। अथ चैत्रशुक्लदशमी। अस्यां यमं पूजयेत्। ज्येष्ठशुक्लदशमी दशहरा। अस्यां गङ्गावतारः। अत्र दशयोगाश्च। ज्येष्ठे मासि १ सितेपक्षे २ दशम्यां ३ बुध-४ हस्तयोः। ५ व्यतीपाते ६ गरा ७ नन्दे ८ कन्याचन्द्रे ९ वृषे रवौ १०॥ दशपापहरा तिथिः, गराख्यं करणं बुधवारहस्तयोग आनन्दाख्यो योगः। अत्र दशमीव्यतीपातयोर्मुख्यत्वम्। अस्यामेव भौमदिनहस्तर्क्षयोर्योगे सर्वपापहरा। पापानि तु दश मनुनोक्तानि – परद्रव्याभिधानं परानिष्टचिन्तनं**

**मिथ्याभिनिवेशश्चेति त्रिविधं मानसम्, पारुष्यम् अनृतं पैशुन्यं असम्बद्धालापश्चेति चतुर्विधं वाचिकम्, परदत्तस्वदत्तोपादानम्, अविधिहिंसा परदारसेवा चेति त्रिविधं कायिकमिति। अत्र यस्मिन्दिने कतिपययोगवती दशमी पूर्वाह्ने लभ्यते तत्र दशहराव्रतं कार्यम्। दिनद्वये पूर्वाह्ने तत्सत्त्वे यत्र बहूनां योगः सा ग्राह्या। ज्येष्ठे मलमासे सति तत्रैव दशहरा, न शुद्धे। दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु। इति हेमाद्रौ ऋष्यशृङ्गः। अत्र काशीस्थैर्दशाश्वमेधतीर्थे स्नात्वा गङ्गापूजनं कार्यम्, इतरदेशस्थैः स्वसन्निहितनद्यां स्नात्वा गङ्गापूजनं कार्यम्। अत्र गङ्गास्नानं पूजनं तिलदानं गङ्गामन्त्रजपो घृतहोमो गङ्गास्तोत्रपाठश्चानन्तपुण्यदः। पूर्वोक्तदशपापहरः, एकविंशकुलोद्धारकः, ब्रह्मलोकप्राप्तिफलकमिति बहुषु पुराणेषु प्रसिद्धमिति। आषाढशुक्लपक्षे दशमी पौर्णमासी च मन्वादिः।**

साधारण दशमी निर्णय – उपवास आदि कार्यों में नवमीविद्धा दशमी ग्राह्य है। पूर्वविद्धा (नवमीविद्धा) के अभाव में परविद्धा ही ग्राह्य है। अथ विशेष निर्णय – चैत्रशुक्ला दशमी में यम की पूजा होती है। ज्येष्ठशुक्ला दशमी में गंगावतार हुआ है। इसमें १. ज्येष्ठमास, २. शुक्लपक्ष, ३. दशमी तिथि, ४. बुध दिन, ५. हस्त नक्षत्र, ६. व्यतीपात योग, ७. गर करण, ८. आनन्द योग, ९. कन्या का चन्द्र, १०. वृष राशि का सूर्य, ये दश योग होने पर इसका नाम दशहरा पड़ा है। बुध व हस्त के योग से आनन्द योग बनता है। भौम-हस्त के योग से दशपापहरा योग होता है, इसमें दशमी व व्यतीपात का योग मुख्य है। इन सब के योग से विशेष फल की प्राप्ति है, इसलिए इन दशों में अधिक से अधिक योगों का पूर्वाह्न दशमी में होने पर दशहरा के व्रत का पर्व महामान्य है। यदि दो दिन पूर्वाह्नव्यापिनी

दशमी हो तो अधिक योगों वाली दशमी ग्राह्य है। ज्येष्ठमास में मलमास होने पर मलमास का ही दशहरा ग्राह्य है, शुद्ध का नहीं; क्योंकि हेमाद्रि में ऋष्यशृङ्ग के अनुसार दशहरा व चारों युगादि तिथियों में गौण व मुख्य का विचार करना व्यर्थ है। इसमें काशीनिवासियों को दशाश्वमेध में स्नान व गंगा पूजन तथा अन्यत्र निवासियों को सुविधानुसार प्राप्त नदी में स्नान व गंगापूजन करना चाहिए। इस पुण्य पर्व के अवसर पर गंगास्नान, पूजन, तिलदान, गंगामन्त्र-जप, घृतहोम, गंगास्तोत्र का पाठ करने से अनन्त पुण्य फल की प्राप्ति, दश महापापों का हरण, इक्कीस कुलों का उद्धार व ब्रह्मलोक की प्राप्ति होती है। अनेक पुराणों में इस व्रत की महिमा कही गयी है। १. परद्रव्यापहरण, २. परानिष्टचिन्तन, ३. मिथ्याभिनिवेश – यह त्रिविध मानस पाप हैं। कठोरता, मिथ्या भाषण, जुगुप्सा, असम्बन्ध वार्तालाप – ये चतुर्विध वाचिक पाप हैं। परदत्तोपादान या स्वदत्तोपादान, अविधि हिंसा, परदाराभिगमन – ये त्रिविध पाप होते हैं। ये दशविध पाप मनु द्वारा कहे गये हैं। आषाढ़शुक्ल दशमी व पूर्णिमा मन्वादि तिथि हैं।

**अथाश्विनशुक्ला दशमी। अत्रादौ नवरात्रव्रतिनां पारणाविसर्जनयोः कालो निर्णीयते। तत्र विसर्जनं दशम्यां कार्यम्। दिनद्वये दशमीसत्त्वे पूर्वदशम्यां श्रवणान्त्यपादयोगे तत्रैव विसर्जनम्। तत्र तद्योगाभावे परदशम्यामेव परत्र दशम्यभावे पूर्वदशम्यां नक्षत्रयोगे सत्यसति वा कार्यम्। नक्षत्रयोगानुरोधेन क्रियमाणं विसर्जनमपराह्णेऽपि भवति। अन्यथा प्रातरेव। तत्र मृदादिप्रतिमाया विसर्जनपूर्वकं जलादौ त्यागः। परम्परया पूजिताया धातुप्रतिमायास्तु घटादिस्थापनादुत्तिष्ठेत्यादिमन्त्रैरुत्थापनमात्रं कार्यम्, न तु विसर्जनम्। यद्दिने विसर्जनं तत्रैव नियमत्यागस्यौचित्यात्। विसर्जनोत्तरं**

तद्दिन एव पारणं कार्यम्, अन्ये तु सत्यपि दशम्यां विसर्जनविधौ नवम्यामेव पारणं कार्यम्। नवम्यां पारणं कुर्याद्दशम्यामभिषेकं च कृत्वा मूर्तिं विसर्जयेदित्यादिवचनादित्याहुः। अत्रैवं व्यवस्था – प्रथमदिने स्वल्पाष्टम्या युक्ता नवमी, द्वितीयदिने पारणपर्याप्तनवम्या युक्ता दशमी, तत्परदिने श्रवणयुक्ता विसर्जनार्हा दशमी, तत्राष्टमीनवम्युपवासयोः प्रथमदिने सिद्धत्वादवशिष्टनवम्यां पारणमवशिष्टदशम्यां विसर्जनम्। यदा त्ववशिष्ट-नवमीदिन एव दशमी श्रवणनक्षत्रयुक्ता विसर्जनार्हा तदा विसर्जनोत्तरं पारणम्। यदा पूर्वदिने षष्टिदण्डाष्टमी परदिनेऽष्टमीशेषयुता नवमी तत्परदिने नवमीशेषयुता दशमी, तदा नवमीयुक्तदशम्यामेव विसर्जनोत्तरं पारणम्। अथ नवमी षष्टिदण्डा द्वितीयदिने नवमीशेषयुक्ता दशमी, तत्रापि नवमीयुक्तदशम्यामेव विसर्जनपारणे। यदा त्वष्टमीनवमीदशम्यस्तिस्रोऽपि तिथयः सूर्योदयमारभ्यास्तमयपर्यन्तमखण्डास्तत्तत्कृत्यपर्य्याप्तास्तदा दाक्षिणात्यानां नवम्यामेव पारणाचारान्नवम्यामेव पारणविसर्जने, येषां दशम्यामेवाचारस्तेषां दशम्यामेव, तदुभयमिति कुलाचारेण व्यवस्थेति नवरात्रविसर्जनपारणनिर्णयः।

अथ विजयदशमी। सा परदिन एवापराह्णव्याप्तौ परा, दिनद्वयेऽपराह्णव्याप्तौ दिनद्वयेऽपि श्रवणयोगे सत्यसति वा पूर्वा, एवं दिनद्वयेऽपराह्णव्याप्त्यभावेऽपि श्रवणयोगसत्त्वासत्त्वयोः पूर्वैव, दिनद्वयेऽपराह्णव्याप्त्यव्याप्त्योरेकतरदिने श्रवणयोगे यद्दिने श्रवणयोगस्सैव ग्राह्या। एवमपराह्णैकदेशव्याप्तावूह्यम्। यदा पूर्वदिन एवापराह्णव्याप्ता परदिने च श्रवणयोगाभावस्तदापि पूर्वैव, यदा तु पूर्वदिन एवापराह्णव्यापिनी परदिने च मुहूर्त्तत्रयादिव्यापिनी अपराह्णात् पूर्वमेव समाप्ता परत्रैव श्रवणयोगवती तदा परैव, अपराह्णे दशम्यभावेऽपि ''यां तिथिं समनुप्राप्य उदयं याति भास्करः'' इति साकल्यवचनैः श्रवणयुक्ताया ग्राह्याया

**औदयिकस्वल्पदशम्याः कर्मकाले सत्त्वापादनात्, सिन्धौ तु इदं परदिनेऽपराह्णकाले श्रवणसत्त्व एव श्रवणस्याप्यपराह्णात्पूर्वमेव समाप्तौ पूर्वैवेत्युक्तम्, युक्तं चैतत्, यदा परदिन एवापराह्णव्याप्तिः पूर्वदिन एवापराह्णात्परत्र सायाह्नादौ श्रवणयोगस्तदा तु परैव ग्राह्येति मम प्रतिभाति। अत्रापराजितापूजनं सीमोल्लङ्घनं शमीपूजनं देशान्तरयात्रार्थिनां प्रस्थानं च विहितमिति विजयदशमी। सर्वासु दशमीषु यमः पूज्यस्तिथिपतित्वात्। इति दशमीनिर्णयः।**

आश्विनशुक्ला दशमी। इसमें नवरात्र-व्रत-पारण तथा विसर्जन दशमी में ही होना चाहिए। यदि दो दिन दशमी हो तो पूर्व दशमी व श्रवण के चतुर्थ चरण के योग में विसर्जन होना विहित है। श्रवण-दशमी के योग के अभाव में दूसरे दिन की दशमी में, इसके अभाव में पूर्व दशमी में, नक्षत्र योग हो या न हो, विसर्जन होना चाहिए। नक्षत्र योग के अनुकूल दूसरे दिन विसर्जन करने वाले को अपराह्ण में ही विसर्जन कर देना चाहिए। अन्यथा प्रातःकाल ही मृण्मय मूर्ति का विसर्जन या जल में त्याग होना उचित है।

धातुमयी मूर्ति का विसर्जन तथा स्थापित घट का उत्थापन विसर्जन मन्त्रों से ही करना चाहिए। धातुमयी मूर्ति का नद्यादि में त्याग नहीं करना चाहिए। विसर्जन के अनन्तर व्रत के नियमों का त्याग भी किया जाता है। विसर्जन के बाद उसी दिन पारण भी करना चाहिए। कुछ का मानना है कि दशमी में विसर्जन का विधान होने पर भी नवमी में पारण करना चाहिए; क्योंकि इसमें यह वचन उपलब्ध है कि नवमी में पारण व दशमी में अभिषेक करके मूर्ति का विसर्जन करना चाहिए। इसमें इस प्रकार व्यवस्था है कि प्रथम दिन थोड़ी अष्टमीयुक्त नवमी है व दूसरे दिन अर्थात् पारण के दिन पर्याप्त नवमीयुक्त दशमी है,

तो दूसरे दिन श्रवणयुक्त दशमी विसर्जन के योग्य है तथा अष्टमी व नवमी का उपवास पहले दिन सिद्ध है। इसमें अवशिष्ट नवमी के दिन पारण तथा अवशिष्ट दशमी के दिन विसर्जन, यदि अवशिष्ट नवमी के दिन श्रवण नक्षत्र युक्त दशमी हो तो वही विसर्जन योग्य है और तब विसर्जन के बाद पारण करे। यदि पूर्व दिन अष्टमी ६० घटी है व दूसरे दिन स्वल्प अष्टमी से युक्त नवमीं हो और दूसरे दिन शेष नवमी से युक्त दशमी हो तो नवमीयुक्त दशमी में विसर्जन करके पारण करे और यदि नवमी ६० घटी व दूसरे दिन अवशिष्ट नवमीयुक्त दशमी हो तब भी नवमीयुक्त दशमी में पारण व विसर्जन दोनों करे। यदि अष्टमी-नवमी-दशमी ये तीनों तिथियाँ सूर्योदय से सूर्यास्तपर्यन्त अखण्ड हों व दिन के कार्य के लिए पर्याप्त समय हो तो नवमी में पारण व विसर्जन दोनों करने का विधान है; परन्तु यह दाक्षिणात्य परम्परा के अनुसार है। जहाँ आचारसंहिता दशमी की है वे दोनों विसर्जन व पारण दशमी में ही करें। यह दशमी अपराह्णव्यापिनी ग्राह्य है। यह सामान्य नियम है। दोनों दिन अपराह्णव्याप्ति होने पर श्रवणयोगयुक्ता पूर्वा ही ग्राह्य है, श्रवण योग के अभाव में परा त्याज्य है। १. ऐसे ही दिनद्वय दशमी की पराह्णव्याप्ति व अव्याप्ति में श्रवणयोग युक्त पक्ष ही ग्राह्य है। इससे ऊपर का वक्तव्य पुष्ट होता है। २. इसी प्रकार अपराह्ण की एकदेश-व्याप्ति में ऊहा-पोह करना चाहिए। पूर्वदिन अपराह्णव्यापिनी दशमी हो, किन्तु दूसरे दिन श्रवण का योग न हो तो भी पूर्वदिन अपराह्णव्यापिनी ग्राह्य है। ३. यदि पूर्वदिन अपराह्णव्यापिनी दशमी हो और दूसरे दिन अपराह्ण से पूर्व समाप्त मुहूर्तत्रयादि व्यापिनी दशमी हो और श्रवणयुक्ता हो तो परदिन की दशमी ही ग्राह्य है। ४. यद्यपि अपराह्ण में दशमी का अभाव है, किन्तु श्रवणयोगवती उदयकालव्यापिनी दशमी पूर्णकालव्यापिनी मानी जाएगी तथा अपराह्ण में क्रियमाण कार्य अपराह्ण में ही किए

जायेंगे। यह साकल्य के वचनों से सिद्ध है। साकल्य का वचन है कि जिस तिथि में सूयोदय हो वह दान, स्नान और अध्ययनादि कार्यों में पूरी मानी जाती है।

निर्णयसिन्धु के अनुसार परदिन अपराह्ण में श्रवण हो तो परा या अपराह्ण के पूर्व श्रवण समाप्त हो जाय, तो पूर्वा मान्य है, धर्मसिन्धुकार भी इसे ही युक्तियुक्त मानते हैं। उनका कहना है कि परदिन अपराह्णव्यापिनी दशमी हो व पूर्वदिन अपराह्ण के बाद सायाह्न के आदि में श्रवण का योग हो तो परदिन वाली दशमी श्रवणयुक्ता अपराह्णव्यापिनी ही ग्राह्य है। इस अर्थ से इसी प्रकरण की तृतीय व चतुर्थ पंक्ति का अर्थ स्पष्ट हो जाता है, जो हिन्दी १ व २ में प्रतिपादित है। इसी दशमी में अपराजितापूजन, सीमोल्लंघन, शमीपूजन व अपेक्षित देशान्तर की यात्रा होती है। तिथि का स्वामी यम होने से सभी दशमी तिथियों में यम की पूजा करनी चाहिए।

**अथैकादशीसामान्यनिर्णयः। तत्र व्रतव्यवस्था। एकादश्युपवासो द्वेधा – भोजननिषेधपरिपालनात्मको व्रतात्मकश्च। आद्ये पुत्रवद्गृहस्थानां कृष्णपक्षेऽपि अधिकारः, व्रतात्मकोपवासस्तु अपत्ययुक्तगृहस्थैश्च कृष्णपक्षे न कार्यः; किन्तु समन्त्रकं सङ्कल्पमकृत्वा यथाशक्ति नियमयुतं भोजनवर्जनमेव कार्यम्। एवं तिथिक्षये शुक्लैकादश्यामपि ज्ञेयम्। शयनीबोधिनीमध्यवर्त्तिकृष्णैकादशीषु सापत्यगृहस्थादीनां सर्वेषामधिकारः, विष्णुसायुज्यकामैरायुःकामैः पुत्रकामैश्च काम्यव्रतं पक्षद्वयेऽपि कार्यम्, तत्र न कोऽपि निषेधः। वैष्णवगृहीणां कृष्णैकादश्यपि नित्योपोष्या। इदमेकादशीव्रतं शैववैष्णवसौरादीनां सर्वेषां नित्यम्, अकरणे प्रत्यवायश्रवणात्, सम्पत्त्यादिफलश्रवणात् काम्यं च भवति।**

**केचिन्मुहूर्त्तादिमितदशमीसत्त्वे दशम्यामेव भोजनं कार्यम्, सूर्योदयात्पूर्वमेव प्रवृत्तायां शुद्धाधिकद्वादशिकायां तु नैरन्तर्येणोपवासद्वयं कार्यमिति तिथिपालनमपि वदन्ति, तन्न युक्तम्, अष्टमवर्षादूर्ध्वमशीतिवर्षपर्यन्तमेकादशीव्रताधिकारः। शक्तस्य तु अशीतेरूर्ध्वमप्यधिकारः। सभर्तृकाणां स्त्रीणां भर्त्रनुज्ञां पित्राद्यनुज्ञां विनोपवासव्रताद्याचरणे व्रतवैफल्यं भर्त्रायुःक्षयो नरकश्च। अशक्तानान्तु –**

**"नक्तं हविष्यान्नमनौदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम्।**

**यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च"॥**

**इति पक्षेषु शक्तितारतम्येनैकपक्षाश्रयणम्, न त्वेकादशीत्यागः। प्रमादादिनैकादश्यामुपोषणाद्यकरणे द्वादश्यामपि व्रतं कार्यम्, द्वादश्यामप्यकरणे यवमध्यचान्द्रायणं प्रायश्चित्तम्, नास्तिक्यादकरणे पिपीलिकामध्यचान्द्रायणम्, अशक्तपतिपुत्राद्युद्देशेन स्त्रीपुत्रभगिनीभ्रात्रादिभिरेकादशीव्रताचरणे क्रतुशतजं पुण्यमिति।**

एकादशी सामान्य निर्णय। इसमें उपवास दो प्रकार से होता है– प्रथम भोजन निषेध का परिपालन, दूसरा व्रतात्मक। प्रथम पुत्रवान् गृहस्थ के लिए कृष्णपक्ष में भी अधिकार है। अपत्ययुक्तगृहस्थ व्रतात्मक उपवास कृष्णपक्ष में न करें; किन्तु समन्त्रक संकल्प के बिना यथाशक्ति नियमयुक्त भोजननिषेधात्मक व्रत का पालन करें। इसी प्रकार तिथिक्षय होने पर शुक्ला एकादशी में भी करना चाहिए; परन्तु विष्णुशयन व प्रबोधिनी में मध्यवर्ती दोनों पक्षों के एकादशीव्रत में सापत्यगृहस्थादि सभी का अधिकार है और इसी प्रकार विष्णुसायुज्य में भी। आयुष्य और पुत्रादि कामना से काम्यव्रत दोनों पक्षों में कोई भी व्रती कर सकता है। काम्यव्रत का किसी के लिए निषेध नहीं है।

वैष्णव गृहस्थों को कृष्णा एकादशी नियमपूर्वक करनी चाहिए। यह एकादशीव्रत शैव, वैष्णव, सौर आदि सभी सम्प्रदायों के लिए नित्य

करना चाहिए; क्योंकि न करने पर विघ्न व करने से कामना की सिद्धि होती है।

कोई मुहूर्तादि परिमित (स्वल्प) दशमी होने पर भी दशमी में भोजन व सूर्योदय से पूर्व प्रविष्ट शुद्धाधिका (६० घटी से अधिक) द्वादशी में निरन्तर दो उपवास व तिथिपालन भी करने को कहते हैं। वह उचित नहीं है। आठ वर्ष से अस्सी वर्ष तक व्रत करने का अधिकार है। समर्थ होने पर अस्सी से ऊपर भी अधिकार है। सधवा स्त्री पति की आज्ञा अथवा पिता आदि गुरुजनों की आज्ञा के बिना व्रतोपवासादि का आचरण करने की अधिकारिणी नहीं है। उपर्युक्त का उल्लंघन कर आचरण करने से पति की आयु क्षीण होती है और वह नरकगामिनी भी होती है। असमर्थ के लिए रात्रि में अनौदन (चावल-भिन्न) हविष्यान्न अथवा फल, तिल, क्षीर, जल, घी, पंचगव्य इनमें उत्तरोत्तर प्रशस्त माना गया है। इनमें से शक्ति के अनुसार किसी एक ही पदार्थ का ग्रहण कर एकादशी व्रत करना चाहिए, व्रत का त्याग करना उचित नहीं है। प्रमाद या भ्रम (भूल) से एकादशी में उपवास न कर सके तो द्वादशी में व्रत करना चाहिए। द्वादशी में भी व्रत न करने पर यवमध्य[1] चान्द्रायणव्रतरूप प्रायश्चित्त का विधान है। नास्तिकतावश व्रत न करने पर पिपीलिकामध्य चान्द्रायण-व्रत प्रायश्चित्त का विधान है। अशक्त को पति, पुत्र आदि के उद्देश्य से स्त्री, पुत्र, भगिनी, भ्राता आदि अन्य प्रतिनिधि द्वारा एकादशी व्रत सम्पादित कराने से एकादशी व्रत का फल पति-पुत्रादि को प्राप्त होता है और कर्त्ता को सभी यज्ञों का फल प्राप्त होता है।

**अत्र व्रताधिकारिणो द्विविधाः— वैष्णवाः स्मार्त्ताश्च। तत्र यद्यपि यस्य दीक्षाऽस्ति वैष्णवीत्यादिलक्षणयुक्ता वैष्णवास्तद्भिन्नाः स्मार्त्ता इति वृहन्निबन्धादिषूक्तं तथापि स्वपारम्पर्य्यप्रसिद्धमेव वैष्णवत्वं स्मार्त्तत्वं च वृद्धा मन्यन्त इति**

---

१. यव के बराबर का चान्द्रायण-व्रत।

निर्णयसिन्धूक्तमेव सर्वदेशे सर्वशिष्टपरिगृहीतं प्रचरति। अथ निर्णयः। वेधोऽपि द्विविधः — अरुणोदये दशमीवेधः, सूर्योदये तद्वेधश्च। सूर्योदयात्प्राक् चतुर्घटिकात्मकोऽरुणोदयः, सूर्योदयस्तु स्पष्टः। तेन षट्पञ्चाशद्घटिकानन्तरं कलामात्रदशमीप्रवेशेऽरुणोदयवेधो वैष्णवविषयः, षष्टिघटिकात्मक-सूर्योदयोत्तरपलादिमात्रदशमीसत्त्वे सूर्योदयवेधः स्मार्त्तविषयः। ज्योतिर्विदादिवादेन वेधादिसन्देहे तु —

"बहुवाक्यविरोधेन ब्राह्मणेषु विवादिषु।
एकादशीं परित्यज्य द्वादशीं समुपोषयेत्"॥इति।

तथा च एकादशी द्विविधा — विद्धा शुद्धा च। अरुणोदयवेधवती विद्धा, तां त्यक्त्वा वैष्णवैर्द्वादश्यैवोपोष्या। अरुणोदयवेधरहिता शुद्धा। सा चतुर्विधा — १. एकादशीमात्राधिक्यवती, २. द्वादशीमात्राधिक्यवती, ३. उभयाधिक्यवती, ४. अनुभयाधिक्यवती च। अत्राधिक्यं सूर्योदयोत्तरसत्त्वम्। अत्रोदाहरणं यथा दशमीनाड्यः ५५, एकादशी ६०।१, द्वादश्याः क्षयः ५८। इयमेकादशीमात्राधिक्यवती वैष्णवैः परोपोष्या स्मार्त्तगृहस्थैः पूर्वा। अथ दशमी ५५, एकादशी ५८, द्वादशी ६०, इयं शुद्धा द्वादशीमात्राधिक्यवती, अत्र वैष्णवानां द्वादश्यामुपोषणं स्मार्त्तानां पूर्वा। अथ दशमी ५५, एकादशी ६०।१, द्वादशी ५, इयं शुद्धा उभयाधिक्यवती, अत्र सर्वैर्वैष्णवैः स्मार्त्तैश्च परैवोपोष्या। अथ दशमी ५५, एकादशी ५७, द्वादशी ५८, इयमनुभयाधिक्यवती शुद्धा वैष्णवैः स्मार्तैश्च पूर्वैवोपोष्या, इति संक्षेपतो वैष्णवनिर्णयः।

अथ स्मार्त्तनिर्णयः। तत्र सूर्योदयवेधवती विद्धा तद्रहिता शुद्धा चेति। द्विविधाऽपि प्रत्येकं चतुर्द्धा। एकादशीमात्राधिक्यवती, उभयाधिक्यवती, द्वादशीमात्राधिक्यवती, अनुभयाधिक्यवतीत्येवमष्टभेदा भवन्ति। अत्रोदाहरणानि — दशमी ५८, एकादशी ६०।१, द्वादश्याः क्षयः ५८, इयं शुद्धा एकादशीमात्राधिक्यवती। दशमी ४, एकादशी २, द्वादश्याः क्षयः ५८, एवं विद्धा एकादशीमात्राधिक्यवती। अत्रोभयत्रापि स्मार्त्तानां गृहिणां पूर्वोपोष्या, यतिभिर्निष्कामिगृहिभिर्वनस्थैर्विधवाभिर्वैष्णवैश्च परैवोपोष्या,

**विष्णुप्रीतिकामैः स्मार्तैरुपवासद्वयं कार्यमिति केचित्। उभयाधिक्यवती शुद्धा, यथा– दशमी ५८, एकादशी ६०।१, द्वादशी ४। उभयाधिक्यवती विद्धा, यथा– दशमी २, एकादशी ३, द्वादशी ४, अत्र उभयत्रापि स्मार्त्तैर्वैष्णवैश्च सर्वैश्चावशिष्टा परैवैकादश्युपोष्या। द्वादशीमात्राधिक्यवती शुद्धा, यथा– दशमी ५८, एकादशी ५९, द्वादशी ६०।१, अत्र शुद्धत्वात्स्मार्त्तानामेकादश्यामेवोपवासो न द्वादश्यामिति माधवमतम्। हेमाद्रिमते तु सर्वैः परा द्वादश्येवोपोष्या, केचित्तु मुमुक्षुभिः स्मार्त्तैः परोपोष्येत्याहुः। द्वादशीमात्राधिका विद्धा, यथा– दशमी १, एकादशी क्षयगामिनी ५८, द्वादश्या वृद्धिः ६०।१, अत्रैकादश्यामेव स्मार्त्तानामुपवासः। एवं चोभयाधिक्ये द्वादशीमात्राधिक्ये च स्मार्त्तानां विद्धायास्त्यागो नान्यत्र, वैष्णवानां तु षड्विधामप्याधिक्यवतीं त्यक्त्वा द्वादश्युपोष्या।**

इस एकादशी व्रत के स्मार्त व वैष्णव दोनों ही अधिकारी हैं। यद्यपि वैष्णवी दीक्षा से दीक्षित वैष्णव और इससे भिन्न स्मार्त हैं। यह बृहन्निबन्धादि में कहा गया है। तथापि अपनी परम्परागत पद्धति के अनुसार वैष्णव व स्मार्त होते हैं, यह वृद्धों की मान्यता है। यह निर्णयसिन्धु का वचन सभी देशों में शिष्यपरम्परागत चला आ रहा है।

सूर्योदय के भेद से अब निर्णय प्रस्तुत है। अरुणोदय के भेद से वेध दो प्रकार का है। अरुणोदय दशमी वेध– यह सूर्योदय के पूर्व चार घटी काल अरुणोदय काल है। सूर्योदय स्पष्ट है। सूर्योदय से ५६ घटी के बाद कला मात्र भी दशमी प्रवेश अरुणोदय काल होता है, यह वैष्णवों का विषय है। साठ घटिकात्मक सूर्योदय के पूर्व पलमात्र भी दशमी की व्याप्ति, यह अरुणोदय वेध स्मार्तों के लिए है और ज्योतिषियों के विवाद से वेध आदि में सन्देह होने पर वचन है कि बहुत वाक्यों के परस्पर विरोध से ब्राह्मणों में विवाद होने पर, एकादशी छोड़ द्वादशी व्रत करें। पूर्वोक्त अरुणोदय वेध छोड़कर वैष्णव द्वादशी व्रत करें। अरुणोदय वेध से रहित शुद्धा एकादशी चार प्रकार की होती है– १. एकादशी का मान अधिक, २. द्वादशी का मान अधिक,

३. दोनों का मान अधिक, ४. दोनों का मान न्यून। मान से तात्पर्य है– सूर्योदय के बाद घटिकादि।

उदाहरण– दशमी ५५ घटी, एकादशी ६० घटी, द्वादशी क्षय ५८ घटी, यह एकादशी-मान अधिक वाला है। इसमें वैष्णव पर और स्मार्त पूर्व में व्रत करें। यदि दशमी ५५, एकादशी ५८, द्वादशी ६० घटी है तो शुद्धाधिका द्वादशी है। इसमें वैष्णव द्वादशी में व्रत करें। स्मार्त पूर्व में (एकादशी) व्रत करें। यदि दशमी ५५, एकादशी ५ घटी हो तो इसे शुद्धोभयाधिक्यवती (शुद्धा) द्वादशी कहते हैं। इसमें स्मार्त व वैष्णव दोनों परा वाला व्रत करें। यदि दशमी ५५, एकादशी ५७, द्वादशी ५८ है तो दोनों अधिकता दोष से रहित हैं। यहाँ दोनों में पहली ५७ वाली एकादशी का व्रत करें। यह संक्षेप में वैष्णवों का निर्णय है।

स्मार्तों के लिए एकादशी निर्णय। यह सूर्योदय वेधवाली विद्धा व इससे भिन्न शुद्धा है। यह दोनों भेदवाली प्रत्येक चार-चार प्रकार की होती है– १. एकादशी मात्र की अधिकता वाली, २. दोनों की अधिकता वाली, ३. दोनों अधिक न हों। ४. द्वादशीमात्र अधिकता वाली एवं दोनों मिल (शुद्धा-विद्धा) कर आठ भेद की होती है।

इसमें उदाहरण– दशमी ५८, एकादशी ६०।१, द्वादशी क्षय ५८, यह शुद्ध एकादशी मात्र की अधिकता वाली है। इन दोनों में भी गृहस्थ प्रथम एकादशी का व्रत करें और संन्यासी, निष्काम गृहस्थ, वानप्रस्थी व विधवा स्त्री और वैष्णव परा २ घटिका वाली एकादशी का व्रत करें। कोई कहते हैं कि विष्णुप्रीति की कामना करने वाले व स्मार्त दोनों उपवास करें।

दोनों की अधिकतावाली शुद्धा का उदाहरण – दशमी ५८, एकादशी ६०, द्वादशी ४ घटिका हो। दोनों की अधिकता वाली विद्धा-दशमी २, एकादशी ३, द्वादशी ४ घटिका हो। इन दोनों में स्मार्त-वैष्णव सम्पूर्ण ६०, अवशिष्ट ३ एकादशी व्रत करें, अर्थात् प्रथम ६० और अवशिष्ट ३ घटिका वाली एकादशी दोनों वर्गों के लिए मान्य है।

द्वादशीमात्र की अधिकता वाली शुद्धा, यथा – दशमी ५८, एकादशी ५९, द्वादशी ६०।१ हो तो इसमें शुद्ध होने से स्मार्त एकादशी ५९ घटी वाली में व्रत करें, द्वादशी में नहीं। यह माधव का मत है। हेमाद्रि के अनुसार परा द्वादशीव्रत करने का निर्देश है। कोई कहते हैं कि मुमुक्षु गृही परा (६०।१ द्वादशी) में उपवास करें।

द्वादशीमात्र अधिकता वाली विद्धा=दशमी १, एकादशी क्षय (हानि) ५८ घटिका व द्वादशी ६०।१ हो, तो इसमें एकादशी ही स्मार्तों के उपवास के योग्य है। इसमें दोनों की अधिकता व द्वादशी मात्र की अधिकता में स्मार्तों को विद्धा का त्याग करना चाहिए, अन्यत्र यह नियम प्रवृत्त नहीं होगा। वैष्णवों को छः प्रकार की अधिकता वाली को छोड़कर द्वादशी में ही व्रत करना चाहिए।

**अनुभयाधिक्यवती शुद्धा, यथा – दशमी ५७, एकादशी ५८, द्वादशी ५९। स्मार्त्तानामेकादश्यामेवोपवासो न द्वादश्याम्, वैष्णवानां तु विद्धत्वाद् द्वादश्यामेवोपवासः। अनुभयाधिक्यवती विद्धा, यथा – दशमी २, एकादश्याः क्षयः ५६, द्वादशी ५५, अत्रापि स्मार्त्तानामेकादश्यामुपवासः, वैष्णवानां द्वादश्यामुपवासः, अस्मिन्नुभयाधिक्यवती विद्धा, चरमे भेदे प्रथमभेदद्वय इव यतिभिर्मुमुक्षुभिर्विधवाभिश्च परोपोष्या, विष्णुप्रीतिकामैरुप-वासद्वयं कार्यमिति तुल्ययुक्त्या प्रतिभाति। इदानीं शिष्टास्तु हेमाद्रिमतं निष्कामत्वादिकं चानादृत्य माधवमतेनैव स्मार्त्तनिर्णयमविशेषेण वदन्ति, न तु क्वचिदुपवासद्वयम्, शुद्धाधिकद्वादशिकायां सर्वेषामेकं परोपवासं**

इसमें नक्त (रात्रि) भोजन महाफलदायक है। कार्तिकशुक्ल चतुर्दशी में गौरी की आराधना व रात्रि में पाषाणभक्ष्य व्रत करने से सौभाग्य की वृद्धि होती है। यही वैकुण्ठचतुर्दशी कही जाती है। इसमें प्रथम दिन उपवास करके, दूसरे दिन अरुणोदयव्यापिनी चतुर्दशी में भगवान् शिव की पूजा करके, प्रातः पारण करना चाहिए। इस चतुर्दशी की दोनों दिन अरुणोदय-व्याप्ति में दूसरे अरुणोदय में पूजा व सर्वत्रोपवास करना चाहिए। उभयत्र व्याप्ति के अभाव में चतुर्दशीयुक्त अहोरात्र में ही अरुणोदय में पूजा व पूर्वोपवास करना चाहिए। कोई कहते हैं कि विष्णुपूजा में यह निशीथ-व्यापिनी ग्राह्य है। दोनों दिन निशीथ-व्याप्ति में निशीथ व प्रदोष-व्यापिनी ही ग्राह्य है। इसी परविद्धा चतुर्दशी में कार्त्तिक स्नान की समाप्ति होती है।

**अथ माघकृष्णचतुर्दशी अरटन्त्याख्या। तत्रानुदिते स्नात्वा यमं पूज्य सतिलजलेन यमं सन्तर्प्य पितृश्राद्धं विधाय ब्राह्मणेभ्यः कृशरान्नभोजनं दत्वा स्वयमपि कृशरान्नं भुक्त्वा पापैः प्रमुच्यते।**

**अथ शिवरात्रिनिर्णयः। सा निशीथव्यापिनी ग्राह्या। निशीथस्तु रात्रेरष्टमो मुहूर्त्त इत्युक्तम्। तत्र परदिन एवार्द्धरात्रौ परा, पूर्वत्रैव तद्व्याप्तौ पूर्वा, दिनद्वयेऽप्यर्द्धरात्रव्याप्त्यभावेऽपि परैव, दिनद्वये कार्त्स्न्येनैकदेशेन वार्द्धरात्र-व्याप्तौ पूर्वेति हेमाद्र्याशयानुसारी कौस्तुभः, परैवेति माधवनिर्णयसिन्धु-पुरुषार्थचिन्तामण्यादयो बहवः। परेद्युर्निशीथैकदेशव्याप्तौ पूर्वेद्युः सम्पूर्णतद्-व्याप्तौ पूर्वैव, पूर्वदिने निशीथैकदेशव्याप्तौ परदिने सम्पूर्णतद्व्याप्तौ परैव। इदं व्रतं रविवारभौमवारयोगे शिवयोगयोगे चातिशस्तमिति।**

माघकृष्ण चतुर्दशी अरटन्ती नाम से प्रसिद्ध है। इसमें सूर्योदय से पूर्व स्नान करके यमराज की पूजा व तिलतर्पण श्राद्ध व ब्राह्मणों को कृशरान्न का भोजन कराकर स्वयं भी भोजन कर सभी पापों से जीव मुक्त हो जाता है।

शिवरात्रि निर्णय । यह निशीथव्यापिनी ग्राह्य है । निशीथ रात्रि का आठवाँ मुहूर्त होता है । यदि पर दिन निशीथ-व्याप्ति हो तो परा, अन्यथा पूर्वदिन निशीथ-व्याप्ति हो तो पूर्वा ही ग्राह्य है । दोनों दिन अर्धरात्रि की व्याप्ति का अभाव हो तो भी परा ही ग्राह्य है । दोनों दिन सम्पूर्ण अर्धरात्रि व एकदेश या अर्धरात्रि की व्याप्ति में पूर्वा ही ग्रहण की जाय । यह हेमाद्रि और कौस्तुभ का मत है । माधव , निर्णयसिन्धु व पुरुषार्थचिन्तामणि आदि बहुतों के अनुसार परा ही ग्राह्य है । दूसरे दिन निशीथ में एकदेश व्याप्ति हो और पूर्वदिन पूर्ण अर्धरात्रि में व्याप्ति हो तो पूर्वा ही ग्राह्य है । यदि पूर्वदिन निशीथ के एकदेश में व्याप्ति व दूसरे दिन पूर्ण निशीथ काल की व्याप्ति हो तो परा ही ग्राह्य है । यह रवि या भौम के दिन शिवयोग के योग से अतिप्रशस्त मानी गई है ।

**अथ पारणानिर्णयः। यामत्रयादर्वाक् चर्तुर्दशीसमाप्तौ चतुर्दश्यन्ते पारणम्, यामत्रयोर्ध्वगामिन्यां चतुर्दश्यां प्रातश्चतुर्दशीमध्य एव पारणमिति माधवादयः, निर्णयसिन्धौ तु यामत्रयादर्वाक् चतुर्दशीमध्य एव पारणम्, न तु कदाचिदपि चतुर्दश्यन्ते –**

**"उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम् ।**

**कृतैः सुकृतलक्षैस्तु लभ्यते यदि वा न वा ॥**

**सिक्थे सिक्थे फलं तस्य शक्तो वक्तुं न पार्वति" ॥**

**इत्यादिना चतुर्दशीमध्ये पारणे पुण्यातिशयोक्तेरित्युक्तम् । अत्रैवं व्यवस्था ज्ञेया – यदा निजकृत्यपूर्वकपारणपर्याप्ता नास्ति तदा वा येषां चतुर्दशीशेष-दिने दर्शादिश्राद्धप्रसक्तिस्तैर्वा तिथ्यन्ते पारणम्, द्वादश्यामिवात्रापि नित्यकृत्यापकर्षकवाक्याभावात् । तिथ्यन्तपारणविधायकवाक्यसत्त्वेन सङ्कट-विषयकजलपारणविधिवाक्यानामत्राप्रवृत्तेश्च कर्मपर्याप्तचतुर्दशीसत्त्वे श्राद्ध-प्रसक्त्यभावे च तिथिमध्य एव पारणमिति । इति चतुर्दशीनिर्णयः।**

पारणा निर्णय। दूसरे दिन एक प्रहर के पूर्व यदि चतुर्दशी समाप्त होती है तो चतुर्दशी के अन्त में पारण होगा और यदि चतुर्दशी तीन प्रहर से अधिक हो तो प्रातः चतुर्दशी में ही पारण करना चाहिए। यह निर्णय माधव आदि विद्वानों का है। निर्णयसिन्धु के अनुसार तीन याम भी यदि चतुर्दशी समाप्त होती है तब भी चतुर्दशी में ही पारण करना चाहिए। चतुर्दशी के अन्त में कभी भी पारण युक्त नहीं है; क्योंकि चतुर्दशी में उपवास व चतुर्दशी में ही पारण से लाख गुना फल की वृद्धि होती है। हे पार्वती ! मैं इस फल को कहने में असमर्थ हूँ (यह वाक्य है)। यदि चतुर्दशी इतनी न्यून हो कि उसमें नित्य-कर्म की समाप्ति व पारण दोनों सम्भव न हों अथवा दर्शश्राद्ध करना हो तो उन्हें तिथि के अन्त में पारण करना चाहिए; क्योंकि द्वादशी जैसा इसमें कोई नित्यकर्म बाधक नहीं है। तिथि के अन्त में पारण करने के विधान का वाक्य भी है। संकट में तिथि के मध्य में पारण के स्थान पर जल का पारण करने जैसा इसमें कोई विधान नहीं है। यदि श्राद्ध न करना हो या चतुर्दशी के मध्य में नित्यकर्म की समाप्ति हो जाती हो, तो तिथि के मध्य में ही पारण कर लेना चाहिए।

**अथ पूर्णमासीसाधारणनिर्णयः। पूर्णमास्यमावास्ये तु सावित्रीव्रतं विना परे ग्राह्ये। यत्तु कैश्चिच्छ्रावणीहुताशनीपौर्णमास्योः कुलधर्मादौ पूर्वविद्धयोर्ग्राह्यत्वोक्तेः सर्वा पौर्णमासी कुलधर्मादौ पूर्वा गृह्यते। तत्र मूलं मृग्यम्। अष्टादशनाडिकातो न्यूनचतुर्दशीसत्वे तादृशचतुर्दशीवेधस्य भूतोऽष्टादशनाडीभिरिति वचनाददूषकत्वप्रतीतेरस्तु वा तादृशस्थले कुलधर्मे पूर्वत्र ग्राह्यत्वम्। अष्टादशनाडिकाधिकचतुर्दशीवेधे तु पूर्वविद्धा पौर्णमासी न ग्राह्येति मे प्रतिभाति। अमावास्या भौमसोमवारयुता स्नानदानादौ महापुण्या। एवं भानुयुता सप्तमी भौमयुता चतुर्थी च। यत्तु सोमयुतायाममावास्या-**

**यामश्वत्थपूजाद्यात्मकं सोमवतीव्रतमनुष्ठीयते तत्रापराह्णपर्यन्तं मुहूर्त्तमात्र-योगेऽपि व्रतं कार्यम्, दिनान्त्यषड्घटिकात्मकसायाह्णयोगे रात्रियोगे च न कार्यमिति शिष्टाचारः। यतीनां क्षौरादावुदये त्रिमुहूर्त्तव्यापिनी पौर्णमासी ग्राह्या, तृतीयमुहूर्त्तस्पर्शाभावे चतुर्दशीयुतेति।**

पूर्णिमा साधारण निर्णय। पूर्णिमा व अमावास्या सावित्री व्रत के अतिरिक्त परा ग्राह्य है। यह सामान्य नियम है। श्रावणी, होलिका आदि में पूर्णिमा परम्परा के अनुसार पूर्वा ग्राह्य है, अर्थात् सभी पूर्णिमा कुलधर्म में पूर्वा ही ग्राह्य है। इस मूल का प्रमाण खोजना (देखना) आवश्यक है। यहाँ पर कुलधर्मानुसार तिथि-ग्रहण में कोई प्रमाण नहीं है। अस्तु चतुर्दशी १८ घटिका से न्यून होने पर चतुर्दशी से पूर्णिमा का वेध दूषित नहीं होता है; क्योंकि चतुर्दशी १८ घटिका से पूर्णिमा को वेधती है। अतः कुलधर्मचर्या में पूर्व के स्थान पर चतुर्दशी का घटीमान १८ से न्यून हो तभी कुलधर्मानुसार पूर्णिमा पूर्वा ग्राह्य हो सकती है। अतः १८ घटी से अधिक चतुर्दशी से विद्धा पूर्णिमा ग्राह्य नहीं है। ऐसा प्रतीत होता है।

मंगल व सोम से युक्त अमा अतीव पवित्र मानी गयी है एवं रविवारयुक्त सप्तमी, मंगलवारयुक्त चतुर्थी भी पवित्र है। सोमवती अमा पीपल पूजा का व्रत है। वह सोम के दिन अपराह्ण में कम से कम एक मुहूर्त व्यापिनी होनी चाहिए। दिन के अन्त में सायाह्न से ६ घटिका योग या चतुर्दशी का रात्रियोग सोमवती में ग्राह्य नहीं है। ऐसा शिष्टाचार है। संन्यासियों के मुण्डन में उदय काल में तीन मुहूर्त व्यापिनी पूर्णिमा ग्राह्य है। दूसरे दिन यदि पूर्णिमा का तीसरे मुहूर्त से स्पर्श मात्र भी न हो, तो चतुर्दशीयुक्त पूर्णिमा ग्राह्य है।

**अथ पौर्णमास्या विशेषनिर्णयः। अथ चैत्रशुक्ला पूर्णा, सा मन्वादिः। अस्यां चित्रायुतायां चित्रवस्त्रदानेन सौभाग्यवृद्धिः। अत्रैव—**

**"मन्दे वार्के गुरौ वापि वारेष्वेतेषु चैत्रकी।**
**तत्राश्वमेधिकं पुण्यं स्नानेन लभते नरः॥**
**दानमक्षयतां याति पितॄणां तर्पणं तथा"॥ इति।**

**अत्रैव संवत्सरकृतपूजासाफल्यार्थं स्वोपास्यदेवस्य दमनकेन पूजेति।**

अथ पूर्णिमा विशेष निर्णय। चैत्रशुक्ल पूर्णिमा मन्वादि है। इसमें चित्रा का योग होने से चित्र-वस्त्रों के दान से सौभाग्य की वृद्धि होती है। यदि यही चित्रायुक्त पूर्णिमा शनि, सूर्य व गुरु के दिनों में किसी दिन हो जाय, तो स्नानमात्र से अश्वमेध यज्ञ का फल होता है, दान अक्षय होता है और तर्पण से पितरों की अक्षय तृप्ति होती है। संवत्सर पूजा की सफलता हेतु दमनक (दवना) से इष्ट देवता की पूजा की जाती है।

**अथ वैशाखी पूर्णिमा। अस्यां विशाखायुक्तायां तद्धीनायामपि शृतान्न-सहितोदकुम्भदानेन गोदानफलम्, स्वर्णतिलयुक्तद्वादशोदकुम्भदानेन ब्रह्महत्यापापान्मुक्तिः। अत्रैव कृष्णमृगाजिने तिलहिरण्यमधुसर्पींषि न्यस्य ब्राह्मणाय दाने सागरान्तपृथ्वीदानफलं सर्वपापनाशश्च। अत्र तिलस्नानं तिलहोमस्तिलपात्रदानं तिलतैलेन दीपदानं तिलैः पितृतर्पणं समधुतिलदानं महाफलम्। अत्र तिलपात्रदानमन्त्रः—**

**"तिला वै सोमदैवत्याः सुरैः सृष्टास्तु गोसवे।**
**स्वर्गप्रदाः स्वतन्त्राश्च ते मां रक्षन्तु नित्यशः"॥ इति।**

**अत्रैव वैशाखस्नानोद्यापनमपीति।**

वैशाख पूर्णिमा यदि विशाखा से युक्त हो या न भी हो तो इसमें पक्वान्न, चीनी, चावल व जलपूर्ण घट (कलश) दान से गोदान का फल होता है। सुवर्ण व तिल के साथ जलपूर्ण बारह कलश दान से ब्रह्महत्या के पाप से मुक्ति हो जाती है।

वैशाखशुक्ल पूर्णिमा को मृगचर्म के ऊपर तिल, सोना, मधु व घी रखकर दान देने से सागरपर्यन्त भूमिदान का फल प्राप्त होता है और समस्त पापों का नाश हो जाता है। इसमें तिलस्नान, तिल-होम, तिलपात्र-दान, तिल-तेल का दीपदान, तिल से पितृतर्पण व मधुसहित तिल-दान से महाफल होता है। तिलपात्रदान का मन्त्र मूल में उक्त है। तिल का देवता सोम है। सभी यज्ञों के लिए ही देवताओं ने तिल उत्पन्न किये हैं। तिलदानादि की सहायता के विना स्वर्ग की प्राप्ति नहीं होती है। ये तिल मेरी सदा रक्षा करें। इसी पूर्णिमा में वैशाख स्नान का उद्यापन भी होता है।

**अथ ज्येष्ठी पूर्णिमा। सा ज्येष्ठायुताऽतिपुण्या। अस्यां यदि ज्येष्ठानक्षत्रे बृहस्पतिश्चन्द्रश्च रोहिणीनक्षत्रे सूर्यस्तदा महाज्येष्ठीयोगः, तत्र स्नानदानादि-कृतमक्षयं भवति। अस्यां मन्वादित्वादत्र पिण्डरहितं श्राद्धं कार्यम्। अस्यामेव विप्रेभ्यश्चन्दनव्यजनोदकुम्भछत्रोपानत्तिलदानं त्रिविक्रमप्रीत्यै देयमिति।**

ज्येष्ठ की पूर्णिमा। यदि यह ज्येष्ठा से युक्त हो तो अतिपुण्य-दायिनी होती है। यदि इसमें ज्येष्ठा नक्षत्र पर गुरु व चन्द्रमा हों और रोहिणी नक्षत्र पर सूर्य हों तो महाज्येष्ठी योग होता है। इसमें स्नान-दान से महापुण्य होता है। यह ज्येष्ठ-पूर्णिमा मन्वादि है। अतः इसमें पिण्डरहित श्राद्ध भी किया जाता है और इसमें चन्दन, व्यजन (पंखा), जलपूर्ण घट, छाता, उपानह (जूता) और तिल का दान त्रिविक्रम (वामन) भगवान् की प्रीति के लिए दिया जाता है।

**अथाषाढी पूर्णा। अस्यामाषाढायुतायामन्नादिदानमक्षयम्। तत्रैव चतुर्दश्यामुपोष्य पौर्णमास्यां विष्णुपूजनेऽनन्तफलम्। एषा कोकिलाव्रते सन्ध्याकालव्यापिनी ग्राह्या। अस्यामेव प्रदोषव्यापिन्यां शिवस्य शयनोत्सवः, शिवस्य पवित्रारोपणमपि विधेयम्। अस्यामेव पौर्णमास्यां संन्यासिनां क्षौरवर्जनपूर्वकं चातुर्मास्यनिवासव्रतं व्यासपूजा च। अत्र कर्मण्यौदयिकी त्रिमुहूर्त्तपौर्णमासी ग्राह्या।**

**"चातुर्मास्यस्य मध्ये तु वपनं वर्जयेद्यतिः।**
**चातुर्मासं द्विमासं वा सदैकत्रैव संवसेत्"॥ इति।**

आषाढी पूर्णिमा। इसमें यदि पूर्वाषाढा नक्षत्र हो तो अन्नदान का अक्षय फल होता है। इसमें कोकिला व्रत होता है। यह सन्ध्या-काल-व्यापिनी ग्राह्य है और प्रदोष-व्यापिनी में भगवान् शिव का शयनोत्सव मनाया जाता है। शिव के लिए पवित्रारोपण भी होता है। इसी में संन्यासिगण का क्षौरवर्जित चातुर्मास निवास व्रत प्रारम्भ होता है और व्यासपूजा की जाती है। इन कर्मों में तीन मुहूर्त व्यापिनी औदयिकी पूर्णिमा ग्राह्य है। चातुर्मास व्रत के बीच मुण्डन निषिद्ध है। यह निषेध संन्यासी उद्देश्यक है। संन्यासियों के लिए इस चातुर्मास्य काल में चार मास या दो मास सदा एक ही स्थान में रहना उचित है।

**अथ श्रावणी पूर्णा। एषा श्रवणर्क्षयुताऽत्युत्तमा। अस्यां शिवपवित्रं चतुर्दश्यामष्टम्यां वा कार्यम्, देवीगणेशसूर्यविष्णूनां स्वस्वतिथिषु पवित्रोत्सवं च, अकरणे सांवत्सरी पूजा विफला भवति, तत्प्रायश्चित्तं तु मूलमन्त्रस्यायुतजपः। अत्रैव पौर्णमास्यां ग्रहणसंक्रान्तिदोषसहितायामुदयकालव्यापिन्यां ब्रीह्यौषधि-प्रादुर्भावेऽपि यजुःशाखाध्यायिन उपाकर्म, श्रावणमासस्य श्रवणधनिष्ठानक्षत्रे बह्वृचाः, श्रावणमासस्य पञ्चम्यां हस्तयुतायां सामवेदिनः, औषधिप्रादुर्भाव-ग्रहणादिदोषरहितायां च सर्वेषां तुल्यम्। अस्योपाकर्मणो विशेषव्यवस्था निर्णयसिन्ध्वादिबृहन्निबन्धे द्रष्टव्येति।**

श्रावणी पूर्णिमा। यह श्रवण नक्षत्र से युक्त उत्तम मानी जाती है। इसमें चतुर्दशी या अष्टमी में शिवपवित्रीकरण भी होता है। पवित्रीकरण इसके पहले वाले पृष्ठ पर देखें। देवी-गणेश-सूर्य-विष्णु इनकी अपनी-अपनी तिथियों में पवित्रोत्सव मनाना चाहिए। इस पवित्रीकरण के विना सांवत्सरी पूजा व्यर्थ हो जाती है। इसका प्रायश्चित्त मूल मन्त्र का दश हजार जप करने से होता है। ब्रीहि धान्यादि, औषध के प्रादुर्भाव काल में यजुःशाखीय ब्राह्मण इसी पूर्णिमा में उपाकर्म करते हैं; परन्तु यह ग्रहण, संक्रान्ति दोषयुक्त उदयकालव्यापिनी पूर्णिमा

सभी के लिए उपाकर्म में निषिद्ध है। बह्वृचों के लिए श्रवण व धनिष्ठा नक्षत्र में और सामवेदियों के लिए हस्त नक्षत्रयुक्ता पंचमी में उपाकर्म करना चाहिए। इस उपाकर्म की विशेष व्यवस्था निर्णयसिन्ध्वादि बृहन्निबन्धादि ग्रन्थों में देखनी चाहिए।

**अथास्यामेव पौर्णमास्यां भद्रारहितायां त्रिमुहूर्ताधिकोदयव्यापिन्यामपराह्णे प्रदोषे वा रक्षाबन्धनं कार्यम्, उदये त्रिमुहूर्त्तन्यूनत्वे पूर्वेद्युर्भद्रारहिते प्रदोषादि-काले कार्यम्। इदं ग्रहणसंक्रान्तिदिनेऽपि कार्यम्। मन्त्रस्तु—**

**"येन बद्धो बली राजा दानवेन्द्रो महाबलः।**

**तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल॥ इति।**

**अत्रैव पूर्णिमायां हयग्रीवोत्पत्तिः। श्रावणपूर्णिमा कुलधर्मादौ त्रिमुहूर्त्त-सायाह्नव्याप्ता पूर्वविद्धैव ग्राह्या, त्रिमुहूर्त्तन्यूनत्वे परा। अस्यामेव पौर्णमास्या-माश्वलायनानां श्रवणाकर्म सर्पबलिश्च रात्रावुक्तः, तैत्तिरीयाणां तु सर्पबलिरेवोक्तः, कात्यायनानां सामगानां च श्रवणाकर्म-सर्पबली द्वावप्युक्तौ। श्रवणाकर्मसर्पबल्याश्वयुजिप्रत्यवरोहणादिपाकसंस्थानां स्वस्व-कालेष्वकरणे प्राजापत्यं प्रायश्चित्तम्, न तु कालान्तरे तदनुष्ठानम्, श्रवणाकर्मादिसंस्थाः पत्न्यामृतुमत्यामपि कार्याः, प्रथमारम्भे निषेधः। अत्र पौर्णमासी अस्तमयप्रभृतिप्रवृत्तकर्मपर्याप्तकालव्यापिनी पूर्वैव चेत्पूर्वैव ग्राह्या, दिनद्वये तत्सम्बन्धस्य सत्त्वेऽप्यसत्त्वे वा परैव, प्रयोगस्तु स्वस्वसूत्रे ज्ञेय इति।**

इसी श्रावण की त्रिमुहूर्त्ताधिकोदयकाल अपराह्ण या प्रदोष-व्यापिनी भद्रारहित पूर्णिमा में रक्षाबन्धन कार्य होना चाहिए। उदय में तीन मुहूर्त से न्यून पूर्णिमा हो तो पूर्वदिन प्रदोषव्यापिनी भद्रारहित पूर्णिमा में रक्षाबन्धन कार्य करें। यह रक्षाबन्धन ग्रहण या संक्रान्ति दोष होने पर भी किया जायेगा। मन्त्र मूल में उक्त है।

इस पूर्णिमा में भगवान् हयग्रीव की उत्पत्ति हुई है। कुलधर्मों में श्रावण पूर्णिमा तीन मुहूर्त सायाह्न-व्यापिनी पूर्वा ग्राह्य है और तीन मुहूर्त से न्यून होने पर परा ग्राह्य है। इसी पूर्णिमा में आश्वलायनों का श्रवणाकर्म व सर्पबलि रात्रि में होती है। तैत्तिरीय, कात्यायन और सामवेद शाखियों के भी श्रवणाकर्म एवं सर्पबलि में तीन मुहूर्त से न्यून सायाह्न-व्यापिनी पूर्णिमा हो तो परा ही ग्राह्य है। सर्पबलि आदि समस्त करणीय कार्य निर्दिष्ट काल में न करने से प्राजापत्य प्रायश्चित्त करना होता है। इनके कालान्तर में करने का विधान नहीं है। पत्नी के ऋतुमती होने पर भी उपाकर्मादि कार्य करने चाहिए; किन्तु प्रथम आरम्भ में निषेध है। यह पूर्णिमा सूर्यास्त से प्रारम्भ होकर कार्य की पूर्णता काल तक व्याप्त रहनी चाहिए। कार्यकाल-व्यापिनी पूर्वा हो तो पूर्वा ही ग्रहण करें। दोनों दिन कार्यकाल-व्यापिनी हो या न भी हो तो परा में ही करना चाहिए। इन कार्यों का प्रयोग अपने-अपने सूत्रों के अनुसार ही ज्ञात करें।

**अथ भाद्री पूर्णा। अस्याः पूर्वं त्रयोदशीमारभ्य शक्तेन त्रिदिनव्रतम्, अशक्तेन तु त्रयोदश्यां नक्तं चतुर्दश्यामयाचितं पौर्णमास्यामुपवास इति।**

**अथाश्विनपूर्णिमा। इयमेव कौमुदी। अस्यामैरावतस्थितमिन्द्रं लक्ष्मीं च पूज्य रात्रौ जागरणं विधाय सुवर्णयुक्तं घृतपूर्णपात्रं ब्राह्मणाय दत्वा दीप्ताग्निर्भवति।**

भाद्रपद-पूर्णिमा। इस पूर्णिमा के पूर्व त्रयोदशी से व्रत प्रारम्भ करके यदि सामर्थ्य हो तो तीन दिन तक व्रत करना चाहिए। अशक्त होने पर त्रयोदशी में रात्रि व चतुर्दशी में अयाचित (विना माँगे) भोजन करें और पूर्णिमा में उपवास करना चाहिए।

आश्विनशुक्ल पूर्णिमा ही कौमुदी पूर्णिमा है। इसमें व्रती ऐरावत पर सवार इन्द्र व लक्ष्मी की पूजा, रात्रि-जागरण, सुवर्णयुक्त घृतपूर्ण पात्र ब्राह्मणों को दान देकर प्रज्ज्वलित अग्नि जैसा देदीप्यमान हो जाता है।

**अथ कार्त्तिकी पूर्णा। अस्यां काम्यवृषोत्सर्गं कार्यम्। अत्रैव हरेर्नीराजनं घृतधेनुदानं च। अत्रैव क्षीरसागरदानम्। अन्यच्च—**

**"विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः।**
**स योगः पद्मको नाम पुष्करेष्वतिदुर्लभः॥**
**आग्नेयं च यदा ऋक्षं कार्तिक्यां भवति क्वचित्।**
**महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा॥**
**प्राजापत्यं तथा ऋक्षं तिथौ तस्यां नराधिप।**
**सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा॥**
**यदा तु याम्यं भवति ऋक्षं तस्यां तिथौ क्वचित्।**
**तिथिः साऽपि महापुण्या मुनिभिः परिकीर्तिता"॥ इति।**

कार्तिकी पूर्णिमा। इसमें काम्य वृषोत्सर्ग किया जाता है। इसी में विष्णु की आरती, घृत-धेनु-दान व क्षीरसागर-दान किया जाता है। यदि इस पूर्णिमा के समय विशाखा में सूर्य और कृत्तिका में चन्द्रमा हो तो यह पद्मक योग बनता है, इस पद्मक योग का पुष्कर क्षेत्र के लिये बड़ा माहात्म्य है और ऐसा दुर्लभ अवसर बड़े भाग्य से ही प्राप्त होता है। मात्र कृत्तिका से युक्त होने पर महती नाम की पूर्णिमा होती है, यह स्नान-दान के लिए देवों के लिए भी दुर्लभ है। यदि पूर्णिमा में कदाचिद् भरणी हो जाय, तो मुनियों ने इसे महा-पुण्यप्रदा कहा है।

**अथ मार्गशीर्षपौर्णिमा। अस्यां मृगशिरोयुक्तायां कुलस्त्रीभिश्चन्द्रमाः पूज्यः, पूजान्ते चन्द्रोदये प्रस्थमितं लवणं ससुवर्णं ब्राह्मणाय दत्वा स्वयमपि पायसं भुक्त्वा व्रतं कुर्यादिति।**

**अथ पौषी पूर्णा। अस्यां पुष्ययुक्तायामलक्ष्मीनाशनार्थं गङ्गादितीर्थे स्नात्वा यथाशक्तिदानादि दत्वा सघृतं पायसं भोक्तव्यमिति।**

**अथ माघी पूर्णा। तत्र मघायुक्तायां तिलैः श्राद्धं कृत्वा ब्राह्मणं सम्पूज्य तिलपूरितपात्राणि कम्बलमजिनमुपानच्च देयम्। अनेनाश्वमेधफलमिति।**

मार्गशीर्ष-पूर्णिमा। यह यदि मृगशिरा नक्षत्र से युक्त हो तो इसमें स्त्रियों को चन्द्रोदय होने पर चन्द्रमा की पूजा के अन्त में एक प्रस्थ लवण (नमक), सुवर्ण के साथ ब्राह्मण को देकर स्वयं खीर खाकर व्रत करने से सौभाग्य की वृद्धि होती है। पुष्य से युक्त पूष की पूर्णिमा में दरिद्रता के नाश के लिए गंगास्नान व यथाशक्ति दान देकर घृतयुक्त खीर का भोजन करें।

माघ-पूर्णिमा। यह यदि मघा नक्षत्र से युक्त हो तो तिल से श्राद्ध कर ब्राह्मण की पूजा, तिलपूर्ण पात्र, कम्बल, मृगचर्म, और उपानह (जूता) दान देने से अश्वमेध यज्ञ का फल होता है।

**अथ फाल्गुनी पूर्णा। सा मन्वादिः पौर्वाह्णिकी। इयमेव होलिका। सा भद्रारहिता प्रदोषव्यापिनी ग्राह्या। दिनद्वये प्रदोषव्याप्तौ परदिने प्रदोषैकदेश-व्याप्तौ वा परैव। पूर्वदिने भद्रादोषात् परदिने, प्रदोषस्पर्शाभावे पूर्वदिने, प्रदोषे भद्रासत्त्वे यदि पूर्णिमा परदिने सार्द्धत्रियामा ततोऽधिका वा तत्परदिने च प्रतिपद्वृद्धिगामिनी तदा परदिने प्रतिपदि प्रदोषव्यापिन्यां होलिका। उक्तविषये यदि प्रतिपदो ह्रासस्तदा पूर्वदिने, भद्रापुच्छे वा भद्रामुखमात्रं त्यक्त्वा भद्रायामेव होलिकादीपनम्, परदिने प्रदोषस्पर्शाभावे पूर्वदिने यदि निशीथात् प्राग् भद्रासमाप्तिस्तदा भद्रावसानोत्तरमेव होलिकादीपनम्। निशीथोत्तरं भद्रासमाप्तौ भद्रामुखं त्यक्त्वा भद्रायामेव। प्रदोषे भद्रामुखव्याप्ते भद्रोत्तरं प्रदोषोत्तरं वा। दिनद्वयेऽपि पूर्णिमायाः प्रदोषस्पर्शाभावे पूर्वदिन एव। भद्रा-पुच्छे तदलाभे भद्रायामेव प्रदोषोत्तरमेव होलिका, रात्रौ पूर्वार्द्धभद्राया ग्राह्यत्वोक्तेः। न तु पूर्वप्रदोषादौ चतुर्दश्याम्, न वा परत्र सायाह्नादौ दिवा होलिकादीपनम्, सर्वग्रन्थविरुद्धम्। इदं होलिकापूजनं श्रवणाकर्मादिवद्भुक्त्वाऽपि कुर्वन्ति, युक्तं चैतत्। केचिद्धोलिकां पूजयित्वा भुञ्जते। तेषां भोजनस्य पूजनस्य वा न नियमेन शास्त्रविहितकाललाभः। इदं चन्द्रग्रहणसत्त्वे वेधमध्येऽपि कार्यम्। अस्तोदये परदिने प्रदोषे पूर्णिमासत्त्वे ग्रहणमध्य एव कार्यम्, अन्यथा पूर्वदिने। भद्रामुखपुच्छलक्षणं ज्योतिश्शास्त्रतो ज्ञेयम्। होलाविधिस्तु वृद्धनिबन्धतो ज्ञेयः। होलाप्रातः श्वपचं स्पृष्ट्वा स्नानेन दुष्कृतिनाशः। इति होलिकानिर्णयः, पौर्णमासीनिर्णयश्च।**

फाल्गुन-पूर्णिमा। यह मन्वादि तिथि है। यह पूर्वा ग्राह्य है। इसे होलिका भी कहते हैं। यह भद्रारहित प्रदोषव्यापिनी ग्राह्य है। दोनों दिन प्रदोष-व्याप्ति में यदि परदिन प्रदोष के किसी भाग से युक्त पूर्णिमा हो तो परा ग्राह्य है। क्योंकि पूर्वदिन भद्रा-दोष, पर-दिन प्रदोष-व्याप्ति का अभाव ऐसे में अग्रिम दिन ३ $^{१}/_{२}$ प्रहर या उससे भी अधिक पूर्णिमा हो और तीसरे दिन प्रतिपदा की वृद्धि हो, तो दूसरे दिन प्रदोष-व्यापिनी प्रतिपदा में होली होगी। यदि यहाँ प्रतिपदा का ह्रास है, तो पूर्वदिन भद्रा-पुच्छ में, यदि पुच्छ भी न मिले तो भद्रा का मुख छोड़कर भद्रा में ही होलिका-दाह करेंगे। परदिन पूर्णिमा का प्रदोष स्पर्श का अभाव और पूर्वदिन अर्धरात्रि के पूर्व ही भद्रा समाप्त हो जाय, तो भद्रा के अन्त में रात्रिशेष में होलिका-दाह किया जाएगा। यदि अर्धरात्रि के बाद भद्रा समाप्त हो और सूर्योदय के पूर्व भद्रान्त में पूर्णिमा न मिले तो भद्रामुख का त्याग कर भद्रा ही में होलिका-दाह होगा। यदि प्रदोष में भद्रामुख व्याप्त है तो प्रदोष व भद्रा दोनों के बाद पूर्णिमा में होलिका-दाह होगा। अन्य पक्ष – दोनों दिन प्रदोष-व्यापिनी पूर्णिमा का अभाव हो तो पूर्वदिन भद्रा के बाद सूर्योदय के पूर्व शेष रात्रि में होलिका-दाह होगा (यह लोक में प्रसिद्ध सम्प्रदायसिद्ध है)। रात्रि के पूर्वार्द्ध में भद्रा हो तो रात्रि के उत्तरार्द्ध शेषरात्रि में होलिकादाह होगा। पूर्व प्रदोषव्यापिनी चतुर्दशी व परदिन सायाह्नव्यापिनी पूर्णिमा व दिन में होलिकादाह सर्वग्रन्थ विरुद्ध है।

सब का निष्कर्ष व सम्प्रदायानुसार वृद्धानुगत भद्रान्त पूर्णिमा व रात्रि होलिका-दाह में विहित है। यदि रात्रि के किसी भाग में भद्रान्त में पूर्णिमा का अभाव हो तो भद्रापुच्छ या मुख छोड़कर भद्रा व पूर्णिमा के योग में होलिका-दाह करना श्रेयस्कर है। इस होलिका का पूजन श्रवणाकर्म की भाँति विहित है। ऐसा उक्त भी है और किया भी जाता है। कुछ लोग होलिका-पूजन के बाद भोजन करते हैं। उनका पूजन व भोजन शास्त्र-नियमों के अनुकूल नहीं है।

यदि इसमें चन्द्रमा का ग्रहण हो जाय, तो ग्रहणवेध में यह होलिका-दाह कर सकते हैं। ग्रहण के अस्तोदय में दूसरे दिन प्रदोष-

व्यापिनी पूर्णिमा होने पर भी ग्रहणमध्य में ही दाह किया जाएगा। अन्यथा 'पूर्वदिने शुद्धे' पूर्व प्रतिपादित नियमों के अनुसार कार्य किया जा सकता है। भद्रा का मुख व पुच्छ ज्यौतिष-शास्त्र से ज्ञात करें। होलिका-विधि बृहन्निबन्ध ग्रन्थों से प्राप्त करें। होलिका के प्रातः श्वपच स्पर्श कर स्नान करने से दुष्कृत का नाश होता है।

**अथामावास्यानिर्णयः। अमा चोपवासादिषु प्रतिपद्युतैव वटसावित्रीव्रतेषु ग्राह्या। अथ ज्येष्ठामायां पूर्वविद्धायां वटसावित्रीव्रतम्। ज्येष्ठकृष्णत्रयोदशी-मारभ्य त्रिरात्रोपोषणव्रतम्, अशक्तौ त्रयोदश्यां नक्तम्, चतुर्दश्यामयाचितम्, अमावास्यायामुपवासः। तत्र सौवर्णीं सावित्रीप्रतिमां वंशपात्रे वस्त्रावृतां वटमूले संस्थाप्य सम्पूज्य जागरणादिकं कृत्वा व्रतं समाप्य प्रतिमां ब्राह्मणाय दद्यात्। तत्र मन्त्रः—**

**"सावित्रीयं मया दत्ता सहिरण्या महासती।**
**ब्राह्मणप्रीणनार्थाय ब्राह्मण प्रतिगृह्यताम्" ॥ इति।**

**॥ इति वटसावित्री ॥**

अमावास्या का निर्णय। वटसावित्री आदि व्रतों में प्रतिपदा-युता अमा ग्राह्य है; किन्तु पूर्वविद्धा ज्येष्ठकृष्ण अमा सावित्री व्रत में ग्राह्य है। ज्येष्ठकृष्ण त्रयोदशी से प्रारम्भ कर अमावास्या तक तीन दिन का उपवास व्रत है। अशक्त होने पर त्रयोदशी में नक्त, चतुर्दशी में अयाचित भोजन करके, अमावास्या में उपवास करें। सुवर्णमय सावित्री प्रतिमा बाँस के पात्र में वट के मूल में स्थापित कर दिया जाय और उसकी पूजा, जागरण से व्रत समाप्त कर प्रतिमा ब्राह्मण को दे दें। प्रतिमा-दान का मन्त्र मूल में देखें।

**अथ भाद्रामायां कुशग्रहणम्—**

**"मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः।**
**अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥**

कुशाः काशा यवा दूर्वा उसीराश्च सकुन्दकाः।
गोधूमा व्रीहयो मुञ्जा दश दर्भा सवल्वजाः'' ॥
तत्र क्रमः—
''शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः।
प्रणवेन च तं स्पृष्ट्वा हुं फट्कारेण चोद्धरेत् ॥
विरञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज।
नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव ॥
कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः।
कुशाग्रे तु हरो देवस्त्रयो देवा कुशे स्थिताः'' ॥
कुशलक्षणञ्च—
''अच्छिन्नाग्रान् शप्तपर्णान् समूलान् कोमलान् शुभान्।
देवपितृयजार्थं च समादद्यात् कुशान् द्विजः ॥
सप्तपर्णाः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः।
ते समस्ता नियोक्तव्या दैवे पित्र्ये च कर्मणि ॥
जातमात्रो भवेद्दर्भः साग्रमूलः कुशः स्मृतः।
सप्तपर्णस्तु कुतपश्छिन्नाग्रस्तृण उच्यते ॥
अच्छिन्नाग्रा ह्यशुष्काग्रा ह्रस्वा प्रादेशमात्रकाः।
कुतपा इति विज्ञेयास्तैस्तु श्राद्धं समाचरेत्'' ॥

चतुर्भिर्दर्भैर्विप्रस्य पवित्रकम्, क्षत्रियादेरेकैकं न्यूनम्, सर्वेषां द्वाभ्यां वा ग्रन्थितमग्रन्थितं पवित्रं ज्ञेयमिति।

भाद्र अमा में कुशग्रहण करना चाहिए। इस अमा में शुद्ध कुशा ग्रहण करना चाहिए। यह कुशा मृतक से अतिरिक्त कर्म में बार-बार प्रयुक्त हो सकता है। मृतक कर्म में प्रयुक्त होने पर वह अग्राह्य हो जाता है। कुश-काश, यव (जौ), दूब, उशीर (खस),

कुन्दपुष्प, गोधूम, धान, मूँज व वल्वज ये दर्भ कर्म कहे जाते हैं। पवित्र होकर पूर्व या उत्तर मुख होकर कुश ग्रहण करें। उखाड़ने का मन्त्र है "ॐ हुँ फट्"। "ब्रह्मा के साथ परमेष्ठी के स्वभाव से तुम उत्पन्न हुए हो। इसलिए हे दर्भ ! तुम सब पापों को दूर कर हमारे लिए कल्याणकारी बन जाओ"। एक बार जड़ को ढीली करके उखाड़ना चाहिए।

कुश के मूल में ब्रह्मा, मध्य में केशव और अग्र में शंकर निवास करते हैं। ये तीन देव कुश में सर्वदा निवास करते हैं। इसका ध्यान रखकर कुशा का व्यवहार करें। पवित्री वर्णक्रम से ४।३।२ कुशों की अथवा सभी के लिए दो कुशों की होगी। कुश का लक्षण – अग्रभाग कटा न हो, सात पत्र हों, मूलसहित और कोमल हो, इन लक्षणों का कुश शुभ है। यही कुश देव-पितृ यज्ञों में उपयोगी है। तिल के खेत में उत्पन्न सात पत्र के कुश सभी देव-पितृ कार्यों में लिए जाते हैं। उत्पन्न मात्र से दर्भ, मूल-अग्र सहित कुश व मूल-अग्र सप्तपर्ण कुश कुतप (सर्वोत्तम) है तथा अग्र कट जाने पर तृण हो जाता है। अग्रसहित शुष्क व प्रादेशमात्र कुश कुतुप कहलाते हैं।

**अथ कार्तिकी अमावास्या दीपमाला। अस्यां प्रातरभ्यङ्गः, प्रदोषे दीपदानलक्ष्मीपूजनादि विहितम्, तत्र सूर्योदयं व्याप्यास्तोत्तरं घटिकाधिकरात्रिव्यापिनि दर्शे सति न सन्देहः। अत्र प्रातरभ्यङ्गदेवपूजादिकं कृत्वा, अपराह्णे पार्वणश्राद्धं कृत्वा, प्रदोषसमये दीपदानोल्काप्रदर्शनलक्ष्मीपूजनानि कृत्वा भोजनं कार्यम्। अत्र दर्शे बालवृद्धादिभिर्नैर्दिवा न भोक्तव्यम्, रात्रौ भोक्तव्यमिति, विशेषो वाचनिकः। तथा च परदिन एव दिनद्वये वा प्रदोषव्याप्तौ परा, पूर्वत्रैव प्रदोषव्याप्तौ लक्ष्मीपूजनादौ पूर्वा, अभ्यङ्गस्नानादौ परा, एवमुभयत्र प्रदोषव्याप्त्यभावेऽपि। पुरुषार्थचिन्तामणौ तु पूर्वत्रैव व्याप्तिरिति। पक्षे परत्र यामत्रयाधिकव्यापिदर्शे दशपिक्षया प्रतिपद्वृद्धिसत्त्वे लक्ष्मीपूजादिकमपि परत्रैवेत्युक्तम्, एतन्मते उभयत्र प्रदोषव्याप्तिपक्षेऽपि परत्र दर्शस्य सार्द्धयामत्रयाधिकव्यापित्वात् परैव युक्तेति भाति। चतुर्दश्यादिदिन-**

**त्रयेऽपि दीपावलिसंज्ञके यत्र यत्राह्नि स्वातीसंयोगस्तस्य तस्य प्राशस्त्यातिशयः। अस्यामेव निशीथोत्तरं नगरस्त्रीभिः स्वगृहाङ्गणादलक्ष्मीनिःसारणं कार्यमिति।**

कार्तिकी अमावास्या। यह दीपमालिका के नाम से प्रसिद्ध है। इसमें प्रातः अभ्यङ्ग व प्रदोष में दीपदान तथा लक्ष्मीपूजन कार्य होता है। सूर्योदय से सूर्यास्त के बाद अधिक-घटिका-व्यापिनी अमा हो तो इसे अमा मानने में कोई सन्देह नहीं है। इस अमावास्या में प्रातः अभ्यङ्ग, देवपूजन व अपराह्ण में पार्वण श्राद्ध करके प्रदोष में दीपदान, आकाशदीप-प्रदर्शन, लक्ष्मीपूजन करके भोजन करना चाहिए। इस अमा में बाल, वृद्धों को छोड़ अन्य व्यक्ति दिन में भोजन न कर रात्रि में भोजन करें। यह विशेष कथन है। दूसरे दिन या दोनों दिन प्रदोष-व्याप्ति होने पर दूसरे दिन की अमा ग्राह्य है। यदि पूर्वदिन में ही प्रदोष-व्याप्ति हो तो पूर्वदिन में ही लक्ष्मीपूजनादि कार्य करें और दूसरे दिन अभ्यङ्ग-स्नानादि कार्य होंगे। इस प्रकार दोनों दिन प्रदोष-व्याप्ति के अभाव में पूर्वा ही ग्रहण करनी चाहिए, यह पुरुषार्थचिन्तामणि का मत है। व्याप्ति के पक्ष में दूसरे दिन तीन प्रहर से अधिक अमा हो और अमावास्या की अपेक्षा तीसरे दिन प्रतिपदा का घटिकामान अधिक हो तो, लक्ष्मीपूजन आदि कार्य दूसरे दिन ही करेंगे। इस आधार पर दोनों दिन प्रदोष-व्याप्ति के पक्ष में परा (दूसरे दिन) अमावास्या ग्राह्य है। साढ़े तीन याम से अधिक अमावास्या की व्याप्ति में परा ही ग्राह्य है, यह युक्तियुक्त प्रतीत होता है। चतुर्दशी से तीन दिन तक दीपावली मनाने के पक्ष में जिस दिन स्वाती नक्षत्र का योग हो, उस दिन की शुभता विशेष है, उसी में अर्धरात्रि के बाद नगर-स्त्रियाँ अपने घर से दरिद्रता का निःसारण करती हैं।

**अथ माघी अमावास्या। तस्यां ब्रह्माणं सावित्रीसहितं पूज्य नवनीतधेनुं दद्यात्।**

**"अत्रामार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः।**
**अर्द्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः॥**
**दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन।**
**अर्द्धोदये तु सम्प्राप्ते सर्वं गङ्गासमं जलम्॥**
**शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसत्तमाः।**
**यत्किञ्चिद्दीयते दानं तद्दानं मेरुसन्निभम्"॥**

**तत्र चतुष्षष्टिपलमितताम्रपात्रं पायसगुञ्जामितसुवर्णयुतं ब्राह्मणाय दत्वा पृथ्वीदानसमं फलं प्राप्नोति।**

माघी अमावास्या। इस अमावस्या में सुवर्णनिर्मित सावित्र के सहित ब्रह्मा की पूजा करके नवनीत धेनु का भी दान देना चाहिए। इसमें अर्द्धोदय योग भी होता है, जो पौष व माघ की अमावास्या के दिन रविवार व श्रवण के योग से अर्द्धोदय योग बनता है। इसमें स्नान, दान से कोटि सूर्यग्रहण के समान फल होता है। यह योग दिन में ही मान्य होता है, रात्रि में कदापि नहीं। इस योग की प्राप्ति में सभी जल गंगा के समान हो जाते हैं और शुद्धात्मा सभी ब्राह्मण ब्रह्मा के समान हो जाते हैं। इसमें जो भी दान दिया जाय वह मेरु दान के बराबर हो जाता है। इसमें ताँबे के पात्र में चौसठ पल खीर सुवर्ण सहित दान से पृथ्वी दान का फल मिलता है।

**अथ फाल्गुनी अमावास्या। अस्यामपराह्णव्यापिन्यां युगादित्वादपिण्डकं श्राद्धं कार्यम्। तत्र दर्शश्राद्धेन सह तन्त्रं कार्दम्। अस्यां शततारकायोगे परमः पुण्यकालः। अत्र श्राद्धात्परमा पितृतृप्तिः, धनिष्ठायोगे तु तिलान्नेन श्राद्धं कायम्, तेन वर्षायुतकालं तृप्तिरित्यमावास्यानिर्णयः। अथ श्राद्धेऽमावास्या निर्णीयते। तत्र साऽपराह्णव्यापिन्येव, यथा पञ्चधा**

विभक्तदिनचतुर्थभागाख्यापराह्णव्यापिन्यमावास्या श्राद्धे ग्राह्या। पूर्वेद्युरेव परेद्युरेव वाऽपराह्णे कार्त्स्न्येनैकदेशेन व्यापित्वे सैव ग्राह्या। उभयदिनेऽप्यपराह्णे वैषम्येणैकदेशव्यापित्वे याऽधिकव्यापिनी, सा ग्राह्या, दिनद्वये साम्येनैकदेश-व्याप्तौ तिथिक्षये पूर्वा, तिथिवृद्धौ तिथिसाम्ये च परा, तत्र समयव्याप्तौ तिथिवृद्धिक्षयसाम्योदाहरणानि — चतुर्दशी १९, अमा २३ दिनं ३०, अत्र दिनद्वयेऽपि समा पञ्चघटिकैक्कदेशव्याप्तिश्चतुर्दश्यपेक्षया चतुर्घटिकाभिरामाया वृद्धिसत्त्वादुत्तरा ग्राह्या, तथा चतुर्दशी २३, अमा १९, अत्रैका घटिका समा व्याप्तिघटिकाचतुष्टयेन तिथिक्षयात्पूर्वा ग्राह्या। अथ चतुर्दशी २१, अमा २१, अत्र घटीत्रयेण दिनद्वयेंऽशतः समा व्याप्तिस्तिथेस्तु वृद्धिक्षयाभावेन समत्वात्परा ग्राह्या, दिनद्वये पूर्णा पराह्णव्याप्तौ तिथिवृद्धित्वात्परा ग्राह्या, यदा दिनद्वयेऽप्यपराह्णस्पर्शाभावस्तदा गृह्याग्निमद्भिः श्रौताग्निमद्भिश्च सिनीवालीसंज्ञका चतुर्दशीमिश्रा पूर्वा ग्राह्या, निरग्निकैः स्त्रीशूद्रादिभिश्च कुहूसंज्ञका प्रतिपन्मिश्रा परा ग्राह्येति माधवाचार्यसम्मतो दर्शनिर्णयः प्रायः सर्वत्र शिष्टैराद्रियत इति। अत्र च साग्निकानां बह्वृचतैत्तिरीयसामगानां बृहन्निबन्धे व्यवस्था द्रष्टव्येति।

फाल्गुनी अमा युगादि है। यह अपराह्ण-व्यापिनी ग्राह्य है। इस युगादि में पिण्ड-दान के विना श्राद्ध किया जाता है। किन्तु यह श्राद्ध दर्श-श्राद्ध के साथ एकतन्त्र से करना चाहिए। यदि इसमें शतभिषा का योग हो जाय, तो यह अतिशय पुण्यदायिनी होती है। इसमें श्राद्ध करने से पितरों को अपरिमित सुख मिलता है। इस फाल्गुनी अमा में धनिष्ठायोग होने पर यदि तिलान्न श्राद्ध किया जाय, तो दस हजार वर्ष तक पितृगण तृप्त रहते हैं।

अब श्राद्ध में अमावस्या का निर्णय किया जाता है। यह अपराह्ण-व्यापिनी ही ग्राह्य है। दिनमान को पाँच भागों में विभक्त कर दिन के चतुर्थ भाग में व्यापिनी अमा श्राद्धकार्य में ग्राह्य है। पूर्व या पर

दिन पूर्ण अपराह्ण काल की ("पञ्चभक्तदिनमानस्यैकचतुर्थभाग-पूर्णकालव्याप्तेस्तात्पर्यः") व्याप्ति वाली अमा ग्राह्य है, एकदेश व्याप्ति वाली नहीं।

विषमता होने पर दोनों दिन अपराह्ण-व्याप्ति में जो अधिककाल तक व्यापक हो वही ग्राह्य है। दोनों दिन एकदेश व्याप्ति में जो अधिक-देश व्याप्ति हो वही ग्राह्य है। दोनों दिन व्याप्ति में समता होने पर तिथिक्षय में पूर्वा, तिथि-वृद्धि व तिथि-समता में परा ग्राह्य है।

वृद्धि-क्षय का उदाहरण– चतुर्दशी १९, दूसरे दिन अमा २३, दिनमान ३० है तो दोनों दिन चतुर्थभाग के एकदेश की व्याप्ति मिलती है। परन्तु द्वितीय दिन चार घटिका अधिक होने से परा ही ग्राह्य है। यदि चतुर्दशी २३ घटिका है और द्वितीय दिन अमा १९ घटिका है और दिनमान ३० है तो पूर्व दिन परापेक्षया ४ घटिका अधिक होने से पूर्वा ही ग्राह्य है। पुनः चतुर्दशी २१ व दूसरे दिन अमा २१ घटिका, दिनमान ३० है तो दोनों दिन चतुर्थभाग अपराह्णकाल में समान व्याप्ति है और तिथियों में ह्रास-वृद्धि का अभाव है तो परा ही ग्राह्य है। दोनों दिन पूर्ण अपराह्ण व्याप्ति में पूर्वोदाहरण में दोनों दिन अमा २४ घटिका हो तो भी परा ग्राह्य है। यदि दोनों दिन अपराह्णस्पर्शाभाव हो तो गृह्याग्नि व श्रौताग्नि को सिनीवालीसंज्ञक चतुर्दशीमिश्रा अमा पूर्वा ही ग्राह्य है। निरग्निक स्त्री-शूद्रादिकों को कुहूसंज्ञक प्रतिपद्युता अमा ग्राह्य है। यह माधवाचार्य निर्णीत दर्शश्राद्धीय अमा प्रायः सर्वत्र शिष्टगृहीत है। गृहीताग्निक बह्वृच, तैत्तिरीय एवं सामवेदियों को बृहन्निबन्ध में व्यवस्था देखनी चाहिए।

**अथ च दर्शे दर्शश्राद्धवर्षश्राद्धयोर्दर्शमासिकयोर्दर्शश्राद्धोदकुम्भश्राद्धयोश्च सम्पाते देवताभेदाच्छ्राद्धद्वयं कार्यम्। तत्रादौ मासिकाब्दिकादिश्राद्धं कृत्वा**

**पाकान्तरेण दर्शश्राद्धं कार्यम्, वैश्वदेव आब्दिकादिश्राद्धशेषेण पृथक्पाकेन वा दर्शश्राद्धात् प्राग्भवति। आहिताग्निस्तु वैश्वदेवं पिण्डपितृयज्ञं च कृत्वाब्दिकं कुर्यात्। दर्शश्राद्धमनुपनीतविधुरप्रवासस्थैरपि कार्यम्। इत्यमाश्राद्धनिर्णयः।**

अब दर्श में दर्शश्राद्ध व दर्शवार्षिक श्राद्ध या दर्शश्राद्ध व मासिक श्राद्ध, दर्शश्राद्ध व उदककुम्भ श्राद्धों के सम्पात में (एक में दूसरे की उपस्थिति) देवता भेद होने में दो पृथक्-पृथक् श्राद्ध करना चाहिए। उसमें प्रथम मासिक व वार्षिक श्राद्ध करके पाकान्त से दर्शश्राद्ध करना चाहिए। वैश्वदेव श्राद्ध आब्दिकादि श्राद्ध शेष से अथवा पृथक् पाक से करें। यह दर्शश्राद्ध से पूर्व वार्षिक श्राद्ध के साथ होता है। यहाँ पर वार्षिक श्राद्ध एकोद्दिष्ट से प्रयोजन नहीं है; क्योंकि एकोद्दिष्ट में वैश्वदेव श्राद्ध नहीं होता है। अग्निहोत्री वैश्वदेव व पितृपिण्ड कार्य करके आब्दिक श्राद्ध करते हैं। दर्श-श्राद्ध अनुपनीत (जिसका यज्ञोपवीत नहीं हुआ है), विधुर व प्रवासी भी कर सकते हैं।

**अथ संक्रान्तीनां पुण्यकालनिर्णयः। तत्र मेषसंक्रान्तौ पूर्वाः पराश्च दश दश नाड्यः पुण्यकालः, रात्रौ त्वर्द्धरात्रात् प्राक् सङ्क्रमे पूर्वदिनोत्तरार्द्धं पुण्यम्, अर्द्धरात्रात्परतः सङ्क्रमे उत्तरदिनस्य पूर्वार्द्धं पुण्यम्, अर्द्धरात्रे सङ्क्रमे दिनद्वयं परपूर्वभागे पुण्यमिति। अथ वृषसङ्क्रमे पूर्वाः षोडशनाडिकाः पुण्यकालः, रात्रौ च प्रागुक्तवदिति। अथ मिथुनसंक्रान्तिः। अत्र पराः षोडशनाड्यः पुण्यकालः, रात्रौ च प्रागुक्तवदिति। अथ दक्षिणायनसंज्ञा कर्कसंक्रान्तिः। कर्कसंक्रान्तौ पूर्वं त्रिंशन्नाड्यः पुण्यकालः। तत्रापि संक्रान्तिसन्निहिता नाड्यः पुण्यतमाः। रात्रावर्द्धरात्रात्प्राक्परतश्च सङ्क्रमेऽपि पूर्वदिने पुण्यकालः, तत्रापि मध्याह्नात् परतः पुण्यतमत्वम्, सूर्योदयोत्तरं घटिकाद्वयात् प्राक् सङ्क्रमे परत एव पुण्यम्। ज्योतिर्ग्रन्थे तु सूर्योदयात्**

**प्राग् घटिकात्रयात्मकसन्ध्यासमयेऽपि कर्कसङ्क्रमे परदिन एव पुण्यमित्युक्तमिति। कर्ककन्याधनुःकुम्भस्थे रवौ केशकर्त्तनादिकं निषिद्धमिति। अथ सिंहसङ्क्रान्तिः। एतस्याः पराः षोडशनाड्यः पुण्यकालः। रात्रौ तूक्तं ज्ञेयम्। अत्र मासे एकभक्तव्रतम्, नक्तव्रतम्, विष्णुशिवाद्यभिषेकश्चोक्तः। अत्र गोप्रसूतिस्तु महदनिष्टदा (यच्च) "सिंहराशिगते सूर्ये यस्य गौश्च प्रसूयते"। तेन व्याहृतिभिर्घृताक्तायुतसंख्यया सर्षपहोमं कृत्वा सा गौर्ब्राह्मणाय देया। एवं निशीथे गोः क्रन्दनेऽपि मृत्युञ्जयमन्त्रेण होमादिरूपा शान्तिः कार्य्या।**

संक्रान्ति के पुण्यकाल का निर्णय। मेष की सूर्य संक्रान्ति में पूर्वापर १०-१० घटिका पुण्यकाल रहता है। इसमें अर्धरात्रि से पूर्व संक्रान्ति में पूर्व दिन के मध्याह्नोत्तर काल तथा अर्धरात्रि के बाद की संक्रान्ति में पर दिन के पूर्वार्द्ध में पुण्यकाल होता है और अर्धरात्रि के समय में दोनों पूर्व दिन के परार्ध व उत्तर दिन के पूर्वार्द्ध में पुण्यकाल होता है। वृष संक्रान्ति में पूर्व १६ घटिका पुण्यकाल होता है। रात्रि की संक्रान्ति में पूर्ववत् निर्णय दिया जाय। मिथुन की संक्रान्ति के पर में १६ घटिका पुण्यकाल होता है। रात्रि में पूर्व की भाँति निर्णय करें। दक्षिणायनसंज्ञक कर्क संक्रान्ति में पूर्व तीस घटिका पुण्यकाल होता है। इसमें भी संक्रान्ति काल की सन्निकटतम घटी विशेष पुण्यदायक होती है। रात्रि में अर्धरात्रि के पूर्व या पर संक्रान्ति में पूर्व ही मध्याह्नोत्तर पुण्यकाल होता है। सूर्योदय के बाद दो घटी के अन्दर कर्क-संक्रान्ति में पर में पुण्यकाल होता है। ज्योतिषग्रन्थों के अनुसार सूर्योदय से पूर्व तीन घटिका सन्ध्याकाल में भी कर्क-संक्रान्ति में दूसरे दिन ही पुण्यकाल होता है। ऐसा निर्दिष्ट है। कर्क, कन्या, धनु व कुम्भ के सूर्य में क्षौरकर्म निषिद्ध है। सिंहसंक्रान्ति में संक्रान्ति काल के बाद १६ घटिका पुण्यकाल होता है। रात्रिसङ्क्रम में मेष-संक्रान्ति विहित रात्रिकाल का अध्याहार किया जाय। इस सूर्यसंक्रम मास में एकभक्त (एक समय भोजन) व्रत, नक्तव्रत (रात्रि भोजन का व्रत), भगवान् विष्णु व शिव का

अभिषेक होता है। इस मास में गोप्रसव महान् अनिष्टकारी है। अतः व्याहृति से घृताक्त सर्षप होम दश हजार होना चाहिए और गो का दान करना चाहिए। इसी प्रकार निशीथ में गोक्रन्दन होने पर भी मृत्युञ्जय मन्त्र से होमादिरूप शान्ति करनी चाहिए।

**एवं श्रावणे मासे दिवाश्विनीप्रसवोऽपि निषिद्धः, यच्च—**

**"माघे बुधे च महिषी श्रावणे वडवा दिवा।**

**सिंहे गावः प्रसूयन्ते स्वामिनो मृत्युदायकाः"॥ इति।**

**एषूत्पातेषु शान्तिप्रकरणोक्ता शान्तिर्विधेयेति।**

पूर्वोक्त रीति के अनुसार श्रावण में घोड़ी के प्रसव का निषेध है। जैसा कि "माघ मास में बुध के दिन भैंस, सिंहस्थ सूर्य में गाय, श्रावण मास में दिन में घोड़ी के प्रसव से स्वामी की मृत्यु होती है"। इस प्रकार के उत्पातों में शान्ति प्रकरण विहित शान्ति करानी चाहिए।

**अथ कन्यासंक्रान्तिः। अत्र पराः षोडशनाड्यः पुण्यकालः। अथ तुलासंक्रान्तिः। तुलामेषसंक्रान्ती विषुवत्संज्ञे। तस्याः पूर्वापराः पञ्चदशनाड्यः पुण्यकालः। विशेषः प्रागुक्त एव। अथ वृश्चिकसंक्रान्तिः। अस्याः पूर्वाः षोडशनाड्यः पुण्याः। शेषं प्राग्वत्। अथ धनुःसंक्रान्तिः। अत्र पराः षोडशनाड्यः पुण्याः। प्रागुक्तमन्यत्। अथोत्तरायणमकरसंक्रान्तिः। अत्र दिवा मकरसङ्क्रमे संक्रान्त्यनन्तरं चत्वारिंशन्नाड्यः पुण्याः। घटिकाद्यल्पदिनशेषे मकरसंक्रान्तौ संक्रान्त्यासन्नपूर्वकाले दिवैव स्नानश्राद्धदानभोजनानि कार्याणि, रात्रौ श्राद्धदानादेर्निषेधात्, स्वल्पदिनभागे स्नानश्राद्धभोजनादेः कर्त्तुमशक्यत्वाद् रात्रौ भोजननिषेधात् पुत्रवद्गृहिण उपवासनिषेधाच्च। तस्मादीदृशे विषये परपुण्यकालत्वं बाधित्वा मकरसंक्रान्तेः पूर्वभाग एव पुण्यकालत्वं ज्ञेयम्। रात्रौ**

**पूर्वभागे परभागे निशीथे वा मकरसङ्क्रमे उत्तरदिनं पुण्यम्, तत्राप्युत्तरदिनपूर्वार्द्धं पुण्यतरम्, तत्रापि सूर्योदयोत्तरं पञ्चनाड्यः पुण्यतमाः। एवं रात्रिसंक्रान्तिविषयेऽन्यत्रापि यत्र पूर्वदिनोत्तरार्द्धस्य पुण्यत्वं तत्र दिनान्ते पञ्चनाडीनां पुण्यतमत्वम्, यत्रोत्तरदिनपूर्वार्द्धस्य पुण्यत्वं तत्रोदयोत्तरं पञ्चनाडीनां पुण्यतमत्वम्। एवं दिवासङ्क्रमेऽपि संक्रान्तिसन्निहितनाडीनां मकरादिषूत्तरासां पुण्यतमत्वं ज्ञेयम्। यच्च—**

**"यां याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः"॥ इत्युक्तेः।**

कन्या की संक्रान्ति में परा षोडश घटिका पुण्यकाल होता है। तुला व मेष संक्रान्ति ही विषुवत् संक्रान्ति कही जाती है। इसमें पूर्व-पर में १५ घटिका पुण्यकाल होता है। अन्य विशेष प्रागुक्त है। वृश्चिक संक्रान्ति में भी पूर्व में षोडश घटी पुण्यकाल होता है। शेष पूर्ववत् है। धनु-संक्रान्ति में पर १६ घटिका पुण्यकाल होता है। अन्य प्रथमोक्त है। उत्तरायण मकर-संक्रान्ति के संक्रमणकाल के बाद ४० घटिका पुण्यकाल होता है। एक घटी से अल्प दिन शेष काल में यदि मकरसंक्रान्ति होती है, तो संक्रान्ति के अतिसन्निकट पूर्व दिन में ही स्नान, श्राद्ध, दान और भोजन आदि कार्य कर सकते हैं। रात्रि में श्राद्ध-दानादि का निषेध होने से स्वल्प दिन शेष में ही स्नानादि कृत्य करना चाहिए।

विशेष – यदि अवशेष दिन के स्वल्पकाल में स्नानादि कृत्य सम्भव न हो और रात्रि में श्राद्ध-दानादि तथा पुत्रवान् गृहस्थ के लिए उपवास निषेध है, तो ऐसी विषम परिस्थिति में मकर के पर पुण्य का अपवाद करके पूर्व काल में ही पुण्यकाल सम्बन्धित समस्त कार्य कर लेना चाहिए। रात्रि के पूर्व या पर भाग अथवा निशीथ के किसी भाग में संक्रान्ति

होने पर दूसरे दिन के पूर्व भाग में पुण्यकाल होता है। उसमें भी सूर्योदय के बाद ५ घटिका तक अतिपुण्यतम पुण्यकाल होता है। इसी प्रकार रात्रि संक्रान्ति के विषय में जहाँ पूर्व दिन उत्तरार्ध में पुण्य-काल है, वहाँ दिनान्त में पाँच घटिका अतिपुण्यतम काल होता है। एवं उत्तर दिन में सूर्योदय के बाद ५ घटी तक पुण्यतम काल होता है। इस प्रकार दिवा संक्रान्ति में भी संक्रान्तिकाल की सन्निकटतम परा नाडी मकरादि संक्रान्तियों में अतिपुण्यतम काल की होती हैं; क्योंकि संक्रान्ति का अतिसन्निकट काल पुण्यातिशयदायक है।

**मुहूर्त्तचिन्तामण्यादौ तु सूर्य्यास्तादूर्ध्वं घटीत्रयं सन्ध्याकालस्तत्र मकरसङ्क्रमे परदिनपुण्यत्वं बाधित्वा पूर्वदिनं पुण्यत्वमुक्तम्, नेदं सर्वत्र धर्मशास्त्रग्रन्थेषु दृश्यते। "शुक्लपक्षे तु सप्तम्यां संक्रान्तिर्ग्रहणाधिका" इति। अथ कुम्भसंक्रान्तिः। अत्र पूर्वं षोडशनाड्यः पुण्या इति। अथ मीनसंक्रान्तिः। अत्र पराः षोडशनाड्यः पुण्याः। रात्रौ तु प्राग्वत्। इति संक्रान्तिनिर्णयः। प्रत्येकसंक्रान्तौ दानं तत्प्रक्रिया च बृहन्निबन्धेभ्यो ज्ञेयेति।**

मुहूर्तचिन्तामणि के अनुसार सूर्यास्त के बाद तीन घटी सन्ध्या काल रहता है। उसमें मकर संक्रान्ति के पर दिन का पुण्यकाल बाधित होता है और पूर्व दिन पुण्यकाल माना जाता है। ऐसा निर्णय धर्मशास्त्रादि ग्रन्थों में नहीं मिलता है। शुक्लपक्ष की सप्तमी में संक्रान्ति होने पर वह ग्रहण से भी अधिक पुण्यप्रदा होती है। कुम्भ की संक्रान्ति में पूर्व १६ घटिका काल पुण्यप्रद होता है। मीन संक्रान्ति की परा १६ नाड़ी पुण्यकाल होता है। रात्रि की संक्रान्ति पूर्ववत् समझें, यह संक्रान्ति-निर्णय है। प्रत्येक संक्रान्ति में दानादि कार्य की जानकारी बृहन्निबन्ध से प्राप्त करें।

**अथ ग्रहणनिर्णयः। चन्द्रसूर्य्यग्रहणं यावच्चाक्षुषदर्शनयोग्यं तावत् पुण्यकालः। अतो ग्रस्तास्तस्थलेऽस्तोत्तरं द्वीपान्तरे ग्रहणसत्त्वेऽपि दर्शन-योग्यत्वाभावान्न पुण्यकालः। एवं ग्रस्तोदये उदयात्पूर्वं न तु पुण्यकालः। मेघादिप्रतिबन्धेन चाक्षुषदर्शनासम्भवे शास्त्रादिना स्पर्शमोक्षकालौ ज्ञात्वा स्नानदानाद्याचरेत्। रविवारे सूर्यग्रहश्चन्द्रवारे चन्द्रग्रहश्चूडामणिसंज्ञकस्तत्र दानादिकमनन्तफलम्, ग्रहस्पर्शकाले स्नानम्, मध्ये होमः सुरार्चनं श्राद्धञ्च, मुच्यमाने दानम्, मुक्ते स्नानमिति क्रमः।**

अथ ग्रहण निर्णय। सूर्य-चन्द्र-ग्रहण जब तक चक्षुगोचर होता है, तब तक पुण्यकाल होता है। इसलिए अस्तकालिक ग्रहण (अस्त के बाद ग्रहण) व द्वीपान्तरीय ग्रहण में चाक्षुषगोचर के अभाव में पुण्यकाल भी अनपेक्ष्य है। इस प्रकार ग्रस्तोदय में उदय के पूर्व पुण्यकाल का अभाव रहता है; किन्तु आकाश के मेघादिछन्न होने पर दर्शनाभाव में भी शास्त्रादि से स्पर्श व मोक्ष के काल को जानकर स्नानादि कार्य करना चाहिए। रविवार के दिन सूर्यग्रहण व सोम के दिन चन्द्रग्रहण होने पर चूड़ामणि नाम का पुण्ययोगयुक्त ग्रहण होता है, इसमें स्नान-दान का अनन्त फल होता है। ग्रहण के स्पर्श के समय स्नान, मध्य काल में होम, देवार्चन व मोक्ष के समय दान व श्राद्ध और मुक्त होने पर पुनः स्नान करना चाहिए।

**तत्र स्नानजलेषु तारतम्यम्—**

**"शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात्।**
**भूनिष्टमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम्॥**
**ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम्।**
**ततस्तीर्थनदीगङ्गा पुण्या पुण्यस्ततोऽम्बुधिः"॥ इति।**

**ग्रहणे स्नानं सचैलम्, सचैलत्वं मुक्तिस्नानपरमिति केचित्, मुक्तिस्नानाभावे सूतकित्वानुपगमः, ग्रहणेऽमन्त्रकस्नानम्, सुवासिनीभिः स्त्रीभिरशिरःस्नानं**

**शिष्टस्त्रियस्तु सशिरस्कमपि। जातमृताशौचे ग्रहणानिमित्तं स्नानदान-श्राद्धादिकार्यमेव। तच्च—**

**"स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला।**

**पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत्॥**

**न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत्।**

**त्रिरात्रमेकरात्रं वा तथैवोपोष्य यापयेत्"॥इति।**

**एकरात्रपक्षे ग्रहणदिनात्पूर्वदिन उपवास इति केचित्।**

स्नानार्थ जल में तारतम्य प्रतिपादित करते हैं। उष्ण जल से शीत जल पवित्र है। दूसरे के कूपादि जल से स्वनिर्मित कूपादि का जल पवित्र है। कूपादि के जल से भूमिस्थ जल उत्तम है। भूमिस्थ जल से झरना, झरना से तालाब, तालाब से नदी, नदी से तीर्थनदी उससे भी गंगा का जल पवित्रतम है। नदी के जल से समुद्र का जल पवित्र है। ग्रहण में सचैल स्नान करें। कोई कहते हैं कि मुक्त होने पर सचैल स्नान करना चाहिए। मुक्ति तक सूतक रहता है। ग्रहण में अमन्त्रक स्नान, सुवासिनियों को अशिर-स्नान करना चाहिए। शिष्ट स्त्रियों (बड़ी-बूढ़ी) को सशिरस्क स्नान करना चाहिए। मृत व सूतक अशौच में ग्रहण के निमित्त स्नान, दान, श्राद्ध अवश्य करें। (कारण) निमित्त उपस्थित होने पर रजस्वला स्त्री नदी से जल लेकर पात्रान्तर से स्नान व व्रत कर सकती है; किन्तु रजस्वला वस्त्र प्रक्षालन व दूसरा वस्त्र धारण नहीं कर सकती है और ग्रहण के अवसर पर तीन या एक दिन व्रत उपवास करके समय व्यतीत करने का विधान है। एक दिन के पक्ष में ग्रहण के दिन से पूर्व दिन उपवास करना चाहिए। यह कोई कहते हैं।

**ग्रहणसम्बन्धाहोरात्र उपवास इत्यपरे, पुत्रवद्गृहिणो ग्रहणसंक्रान्त्यादौ नोपवासः, पुत्रवत्पदेन कन्यावानपि ग्राह्य इति केचित्, ग्रहणे पितृदेवतर्प्पणं**

कार्यमिति केचित्, "सर्वेषामेव वर्णानां सूतकं राहुदर्शने"। तेन ग्रहणकाले स्पृष्टवस्त्रादेः क्षालनादिना शुद्धिः। अत्र गोभूहिरण्यादिदानं महाफलम्—

"सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः।

सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्य्ययोः"॥ इति।

"सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।

श्रोत्रिये शतसाहस्रं पात्रे त्वानन्त्यमश्नुते"॥ इति।

अयमर्थः—अब्राह्मणे संस्कारादिरहिते जातिमात्रे, ब्राह्मणब्रुवे गर्भाधानादिसंस्कारयुते वेदाध्ययनहीने, संस्कारवेदाध्ययनयुते श्रोत्रिये, विद्यासदाचरणादियुते पात्रे इति। ग्रहणे श्राद्धमामान्नेन हेम्ना वापान्नेनेति केचित्। ग्रहणेऽवश्यं गायत्रीस्वेष्टादिमन्त्रजपः, तद्विना मन्त्रमालिन्यम्, ग्रहणे शयनाद्रोगी, मूत्रे कृते दारिद्र्यम्, पुरीषे कृमिः, मैथुने ग्रामशूकरः, अभ्यङ्गे कुष्टी, भोजने नरक इति। पूर्वपक्वान्नं ग्रहणोत्तरं त्याज्यम्, ग्रहणे जलपाने पादकृच्छ्रकथनाज्जलमपि त्याज्यम्, काञ्जिकं तक्रं तैलघृतपाचितमन्नं क्षीरं च पूर्वसिद्धं ग्रहणोत्तरं ग्राह्यम्, घृते सन्धिते गोरसेषु ग्रहणकाले कुशान्तरायं कार्यम्।

कुछ का मत है कि जिस दिन ग्रहण हो उस दिन अहोरात्र व्रत उपवास करें। किन्तु सन्तान वाले गृहस्थ ग्रहण व संक्रान्ति का उपवास न करें। ग्रहण में किसी के मत से देव-पितृ-तर्पण करना चाहिए। "ग्रहण का सूतक सभी वर्णों के लिए होता है"। ग्रहण में स्पृष्ट वस्त्र की प्रक्षालन से शुद्धि होती है। ग्रहण में गो-भूमि-सुवर्ण के दान से महाफल होता है। ग्रहण में सभी जल गंगाजल व सभी ब्राह्मण व्यास के समान माने जाते हैं। यत्किञ्चित् दान सभी भूमिदान के बराबर होता है। ग्रहण में अब्राह्मण को दिया दान दान मात्र होता है, ब्राह्मण को दिया दान दूना व श्रोत्रिय ब्राह्मण को दिया दान लाख गुना होता है और सत्पात्र को दिया दान अनन्त होता है। संस्काररहित

जाति से ब्राह्मण ही अब्राह्मण है। गर्भाधानादि संस्कारसम्पन ब्राह्मण किन्तु वेदाध्ययन से विमुख ब्राह्मण है और संस्कारयुक्त वेदाध्ययन करने वाला ब्राह्मण श्रोत्रिय है तथा सभी संस्कारों से युक्त सर्वदा अध्ययन करने वाला ब्राह्मण पात्र है। ग्रहण में श्राद्ध आमान्न (अपक्व) व सुवर्ण से करना चाहिए। कोई पक्वान्न से श्राद्ध करने को कहते हैं। ग्रहण में गायत्री व अभीष्ट देवता के मन्त्र का जप करने का विधान है। अन्यथा मन्त्र में मलिनता आती है। ग्रहण में शयन से रोगी, मूत्रोत्सर्ग से दरिद्रता, शौच (मलत्याग) से कृमि, मैथुन से ग्रामशूकर, तेललेपन से कुष्ठी, भोजन आदि करने से नरक होता है। ग्रहण के पूर्व निर्मित पक्वान्न ग्रहण में अपवित्र हो जाता है। उसे त्याग देना चाहिए। ग्रहण में जलपान से पादकृच्छ्रव्रत से शुद्धि होती है, अर्थात् ग्रहण में जल भी नहीं लेना चाहिए। अचार, तेल या घृत से पके अन्न, दूध आदि ग्रहणोत्तर ग्राह्य हैं। घी-दूध या इनसे पकी वस्तु में ग्रहणकाल में कुशा डाल देना चाहिए।

**अथ वेधविचारः। सूर्यग्रहे ग्रहणप्रहरादर्वाग् यामचतुष्टयं वेधः। चन्द्रग्रहे तु प्रहरत्रयम्। तत्र दिनप्रथमप्रहरे सूर्यग्रहे पूर्वरात्रिप्रहरचतुष्टये न भोक्तव्यम्, द्वितीययामे ग्रहणे रात्रिद्वितीययामादौ न भोक्तव्यम्, एवं रात्रिप्रथमयामे चन्द्रग्रहे दिनद्वितीययामादौ न भुञ्जीत।**

ग्रहण में वेध। वेध अर्थात् सूतक की प्रवृत्ति, जिस प्रहर में सूर्यग्रहण हो, उसके पूर्व के चार प्रहर सूतक व्याप्त रहते हैं। जैसे दिन के प्रथम प्रहर में सूर्यग्रहण हो तो पूर्व रात्रि के चारों प्रहर में भोजन निषिद्ध है। यदि द्वितीय प्रहर (दिन) में ग्रहण हो, तो पूर्व रात्रि के दूसरे प्रहर के प्रारम्भ से सूतक प्रारम्भ हो जाता है। इसमें भोजन व देवपूजन निषिद्ध है। इसी प्रकार चन्द्रग्रहण में तीन याम पूर्व सूतक लगता है। जैसे रात्रि के प्रथम प्रहर में चन्द्रग्रहण हो तो पूर्वदिन के

दूसरे प्रहर से सूतक प्रारम्भ हो जाएगा एवं रात्रि के द्वितीय प्रहर के ग्रहण में सूतक पूर्व दिन के तृतीय प्रहर से प्रारम्भ हो जायेगा। वेधकाल में भोजन निषिद्ध है।

**बालवृद्धातुरविषये तु सार्द्धप्रहरात्मको मुहूर्त्तत्रयात्मको वा वेधः। शक्तस्य वेधकाले भोजने त्रिदिनमुपोषणं प्रायश्चित्तं ग्रहणकाले भोजने प्राजापत्यमिति। चन्द्रास्तग्रस्तोदये तु यामचतुष्टयवेधात्तत्पूर्वं दिवा न भुञ्जीत। केचित्तु चन्द्रपूर्णमण्डलग्रासे यामचतुष्टयं वेधः। एकदेशग्रासे यामत्रयमिति। ग्रस्तास्ते तु—**

**"ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि।**
**परेद्युरुदये स्नात्वा शुद्धोऽभ्यवहरेन्नरः"॥**

**अत्र स्नात्वा शुद्ध इत्युक्त्या शुद्धमण्डलदर्शनकालिकस्नानात् पूर्वमशुद्धि-प्रतिपादनाज्जलाहरणपाकादिकं शुद्धबिम्बोदयकालिकस्नानात्पूर्वं न कार्यम्, सूर्यग्रस्तास्तादौ पुत्रवद्‌गृहिण उपवासनिषेधात्तेन षण्मुहूर्त्तात्मकं वेधं त्यक्त्वा ग्रहणात्पूर्वं भोक्तव्यमिति। पुत्रवद्‌गृहिणापि तत्रोपवास एव कार्यमिति माधवमतमेव तु शिष्टाचारानुसृतं युक्तम्। ग्रहणदिने पित्रादेर्वार्षिकश्राद्धप्राप्तौ सति सम्भवेऽन्नेनैव कार्यम्। ब्राह्मणाद्यलाभेनासम्भवे त्वामेन हेम्ना वा कार्यम्। जन्मराशेर्ग्रहणफलं ग्रहप्रकरणे शुभं मध्यममशुभं च ज्ञेयम्।**

बाल-वृद्ध और रोगी को छोड़कर अन्य के लिए वेधकाल में भोजन निषिद्ध है। बाल, वृद्ध, रोगी के लिए १¹/₂ प्रहर या तीन मुहूर्त सूतक लगता है। यदि सामर्थ्यवान् सूतक में भोजन करे, तो उसे तीन दिन तक उपवासरूप प्रायश्चित्त करना चाहिए और ग्रहण के समय भोजन से प्राजापत्य व्रतरूप प्रायश्चित्त करना चाहिए। यदि चन्द्रमा ग्रस्तोदय ग्रहण के साथ अर्थात् उदय हो, तो पूर्व की चार प्रहर की घटिकाओं में सूतक रहता है। अर्थात् ग्रहण लगा हुआ उदय हो, तो ग्रहण प्रहर के पूर्व चार प्रहर सूतक रहता है। कोई कहते हैं कि

पूर्ण चन्द्रग्रहण में चार प्रहर एकदेश ग्रहण में तीन याम सूतक होता है। चन्द्र या सूर्य ग्रहण के साथ अस्त हो जाँय, तो अग्रिम दिन उदय के बाद मोक्षस्नान व भोजनादि कार्य किये जाते हैं। यहाँ विशेष वचन स्मरण करें – "ग्रस्तास्त में दूसरे दिन बिम्बोदय दर्शन काल तक विहित सूतक सम्बन्धी कार्य (मोक्षस्नान, जलपान व भोजनादि) न करें। बिम्बोदय के बाद समस्त दैहिक व धार्मिक कार्य करने का अधिकार प्राप्त है। सूर्य के ग्रस्तास्त में पुत्रवान् गृही के लिए उपवास निषिद्ध है। अतः ग्रहण से ६ मुहूर्त पूर्व सूर्यग्रस्तास्त में भोजन कर सकता है। अर्थात् ग्रस्तास्त से ६ घटिका से पहले भोजनादि कार्य विहित हैं। यह माधव का मत ही शिष्टाचारानुगत है। समस्त प्राणी व गृही के लिए ग्रहण-सूतक में भोजन निषिद्ध है। यही पक्ष युक्त भी है। ग्रहण के दिन यदि एकोद्दिष्ट पितृ-श्राद्ध प्राप्त हो जाय, तो यथासम्भव अन्न से वार्षिक श्राद्ध करें। यदि ब्राह्मण (भोजनार्थ) न मिले तो सुवर्ण या आमान्न से श्राद्ध करें। जन्म-राशि से किस स्थान पर ग्रहण लगता है, उसका शुभ, मध्यम, अनिष्ट फल ग्रहप्रकरण से जानें।

**जन्मराशौ तन्नक्षत्रे वा चन्द्रग्रहणे रजतमयं चन्द्रबिम्बं सूर्ये स्वर्णमयं सूर्यबिम्बं नागं चोभयत्र स्वर्णमयं घृतपूर्णे ताम्रपात्रे कांस्यपात्रे वा तत्तन्मण्डले तं तं पूज्य दुःस्थानस्थितदोषशान्तये ब्राह्मणाय देयम्, दुष्टराशिजं ग्रहणं नावलोक्यम्, शुभमपि जलपटादिव्यवधानेनावलोकनीयम्।**

जन्मराशि या जन्मनक्षत्र पर चन्द्र-ग्रहण में चाँदी का चन्द्रबिम्ब व सूर्यग्रहण में सुवर्ण का सूर्यबिम्ब व नाग बनाकर अथवा दोनों ग्रहण में सुवर्ण का नाग व बिम्ब बनावे, उस बिम्ब का घृतपूर्ण ताँबे या काँसे के पात्र में पूजन करके दान देवे। अथवा ग्रह-मण्डल बनाकर उस मण्डल में तत्तद् ग्रह स्थापित कर पूजनोत्तर दुःस्थान स्थित ग्रहण दोष निवृत्ति हेतु ब्राह्मण को दान देवे। अथवा अनिष्ट फलप्रद ग्रहण को न देखे। शुभ फलदायक ग्रहण को भी जल व वस्त्र के आवरण से देखना चाहिए, प्रत्यक्ष देखना दोष है।

**मङ्गलकार्येषु पूर्णग्रासे चन्द्रग्रहे द्वादश्यादितृतीयान्तं दिनसप्तकं निन्द्यम्, सूर्यपूर्णग्रासे एकादश्यादिचतुर्थ्यन्तदिनानि वर्ज्यानि, खण्डग्रहणे चतुर्दश्यादि-दिनत्रयं वर्ज्यम्, ज्योतिर्निबन्धेषु ग्रासपादतारतम्येन दिनाधिक्योनत्व-व्यवस्था, ग्रस्तास्ते पूर्वं दिनत्रयं ग्रस्तोदये परं दिनत्रयं च वर्ज्यम्, पूर्णग्रासे षण्मासं ग्रहणर्क्षं वर्ज्यम्, पादादिग्रासे सार्द्धमासादितारतम्येन योज्यम्। ग्रहणसङ्कल्पितद्रव्यस्य ग्रहणोत्तरं दाने तद्द्विगुणं देयम्। इति ग्रहणनिर्णयः।**

पूर्ण चन्द्रग्रास में द्वादशी से तृतीया तक सात दिन मंगलादि शुभ कार्य न करें। पूर्ण सूर्यग्रास में एकादशी से चतुर्थी तक नव दिन शुभ कार्य में निषिद्ध हैं। खण्ड ग्रहण में चतुर्दशी से तीन दिन निषिद्ध हैं। ज्यौतिर्निबन्ध में ग्रास के पाद के अनुसार दिन की संख्या निश्चय करनी चाहिए। ग्रस्तास्त में पूर्व तीन दिन व ग्रस्तोदय में बाद तीन व ग्रहण का दिन शुभ कार्य में त्याज्य है। जिस नक्षत्र पर पूर्ण ग्रहण हो, उस नक्षत्र में ६ मास तक शुभ कार्य न करें। पादग्रास क्रम से डेढ़ मासादि क्रम तारतम्य से निषिद्ध मानें। जैसे पादग्रास में १<sup>१</sup>/<sub>२</sub> मास, अर्ध में ३ मास, त्रिपाद में ४<sup>१</sup>/<sub>२</sub> मास व पूर्णग्रास में ६ मास तक ग्रास का नक्षत्र निषिद्ध है। ग्रहण में संकल्पित द्रव्य ग्रहण के बाद देने से द्विगुणित देना चाहिए।

**अथ मलमासनिर्णयः। स द्विविधः — अधिमासः क्षयमासश्च। संक्रान्तिरहितो मासोऽधिमासः, संक्रान्तिद्वययुक्तो मासः क्षयाख्यः। पूर्वाधिमासादुत्तरोऽधि-मासस्त्रिंशत्तममासमारभ्याष्टसु नवसु वा मासेष्वन्यतमो भवति। क्षयमासस्तु एकचत्वारिंशदधिकशतसंख्यैर्वर्षैरेकोनविंशतिवर्षैर्वा भवति, न त्वधिकमास-वदल्पकालेन कार्त्तिकादिमासत्रयेष्वेव, अन्यत्र यस्मिन्वर्षे क्षयमासस्तत्राधिमास-**

द्वयं भवति। क्षयमासात्पूर्वो ह्येकस्तदनन्तरमन्यः, मध्ये क्षयः। यथा चैत्रामावास्यायां मेषसंक्रान्तिः, ततः शुक्लप्रतिपदमारभ्यामापर्यन्तं संक्रान्तिर्नास्ति, ततश्शुक्लप्रतिपदि वृषसंक्रान्तिरिति, पूर्वः संक्रान्तिरहितो मासोऽधिकवैशाखसंज्ञकः, वृषभसंक्रान्तियुतस्तु शुद्धवैशाखसंज्ञकः।

क्षय व मलमास दो प्रकार का है! जिस चान्द्रमास में सूर्य की संक्रान्ति नहीं होती है, वह अधिमास है और जिस चान्द्रमास में दो अमा के अन्दर दो संक्रान्ति हो, वह क्षयमास है। प्रथम अधिमास से ३० मास के बाद आठ या नव मास के अन्दर किसी मास में अगला अधिमास होता है। १९ वर्ष या १४१ वर्षों के बाद क्षयमास होता है। यद्यपि यह क्षयमास व अधिमास का समय स्थूल है, सर्वदा ठीक नहीं होता है, इसके लिए सिद्धान्तगणित प्रमाण है। अधिकमास जैसे स्वल्प काल में क्षयमास सम्भव नहीं है। यह प्रायः कार्तिक, मार्गशीर्ष या पौष मासों में होता है। जिस वर्ष में क्षयमास होता है, उस वर्ष क्षयमास के पूर्व एक व क्षयमास के बाद दूसरा मलमास होता है। अर्थात् क्षयमास के वर्ष में पूर्व-पर दो मलमास होते हैं। जैसे चैत्र अमावास्या में मेष-संक्रान्ति, पुनः चैत्रशुक्ल प्रतिपदा से अमा के अन्दर कोई संक्रान्ति नहीं हुई, पुनः वैशाख शुक्ल प्रतिपदा में वृष की संक्रान्ति होने से पूर्व संक्रान्ति-रहित मास वैशाख मास अधिमास हुआ और वृष-संक्रान्ति वाला शुद्ध वैशाख मास हुआ।

अथ क्षयमासोदाहरणम्। भाद्रपदकृष्णामावास्यायां कन्यासंक्रान्तिस्तत आश्विनोऽधिमासः, शुद्धाश्विनप्रतिपदि तुलासंक्रान्तिः, कार्त्तिकशुक्लप्रतिपदि वृश्चिकसंक्रान्तिः, ततो मार्गशीर्षशुद्धप्रतिपदि धनुःसंक्रान्तिः, तस्मिन्नेव मासेऽमावास्यायां मकरसंक्रान्तिरिति, धनुर्मकरसंक्रान्तिद्वयमुक्त एको मासः क्षयमाससंज्ञः, स च मार्गशीर्षपौषाख्यमासद्वयात्मक एको मासो ज्ञेयः, तस्य

**प्रतिपदादितिथीनां पूर्वार्द्धे मार्गशीर्ष उत्तरार्द्धे पौष इत्येवं सर्वतिथीनां मासद्वयात्मकत्वम्। अत्र तिथिपूर्वार्द्धे मृतस्य मार्गशीर्षे प्रत्यब्दश्राद्धम्, उत्तरार्द्धे मृतस्य पौषे, एवं जनने वर्द्धापनादिविधिरपि, तत ऊर्ध्वं माघामावास्यायां कुम्भसंक्रान्तिः, ततः फाल्गुनोऽधिमासः, शुद्धफाल्गुनस्य शुक्लप्रतिपदि मीनसंक्रान्तिः, एवं पूर्वापराधिमासद्वययुक्तः क्षयमासो यस्मिन्वर्षे तत्र त्रयोदशमासात्मकं किञ्चिदूननवत्यधिकशतत्रयदिनैर्वर्षम्, तत्र क्षयमासात्पूर्वोऽधिमासः संसर्पसंज्ञः सर्वकर्मार्हः शुभकर्मणि न त्याज्यः, अंहस्पतिसंज्ञः क्षयस्तदुत्तरभाव्यधिमासश्च सर्वकर्मसु वर्ज्यः, एवं त्रिवत्सरान्तस्थः केवलोऽधिकमासोऽपि वर्ज्यः।**

क्षममास का उदाहरण – भाद्रपद कृष्ण अमा को कन्या की संक्रान्ति, आश्विन में मलमास, शुद्ध आश्विन प्रतिपदा में तुलासंक्रान्ति व कार्तिक-शुक्ल प्रतिपदा में वृश्चिक-संक्रान्ति, इसके बाद मार्गशीर्षशुक्ल प्रतिपदा में धनु-संक्रान्ति, इसी मास की अमा में पुनः मकर-संक्रान्ति, इस प्रकार दोनों धनु-मकर संक्रान्ति से युक्त एक मास क्षयमास हुआ। यह मार्गशीर्ष-पौष-मासात्मक एक मास क्षयमास हुआ। क्षयमास की तिथियों के दो भाग कर पूर्व भाग प्रथम मास और उत्तरार्द्ध अग्रिम मास, यथा पूर्व मार्गशीर्ष व उत्तर भाग पौष होगा। इसमें (क्षयमासात्मक) जन्म, मृत्यु होने पर जिस तिथि में जन्म, मृत्यु हो, उसका बराबर दो भाग करने पर यदि तिथि के पूर्वार्द्ध में जन्म-मृत्यु हुआ, तो अग्रिम वर्ष मार्गशीर्ष में उसी तिथि में वर्धापन व वार्षिक श्राद्ध होगा। शुक्लपक्ष से शुक्ल व कृष्णपक्ष से कृष्ण होता है। इसके बाद माघ की अमा में कुम्भ की संक्रान्ति होगी और फाल्गुन अधिमास शुद्ध फाल्गुन प्रतिपदा में मीन-संक्रान्ति होगी, इस प्रकार क्षयमास के पूर्वापर में दो अधिमास का होना युक्तियुक्त है।

जिस वर्ष क्षयमास होगा उस वर्ष में १३ मास व थोड़ा न्यून ३९० दिन होंगे, उसमें क्षयमास के पूर्व अधिमास को संसर्प व उत्तर के अधिमास को अंहस्पति संज्ञक कहेंगे। दोनों अधिमास व क्षयमास शुभ कार्यों में त्याज्य हैं।

**अत्र वर्ज्यावर्ज्यनिर्णयः। अनन्यगतिकं नित्यं नैमित्तिकं काम्यं चाधिमासक्षयमासयोः कर्त्तव्यम्। सङ्गतिकं नित्यं नैमित्तिकं काम्यं च वर्ज्यम्। (तथा हि) सन्ध्याग्निहोत्रादि नित्यम्, ग्रहणस्नानादि नैमित्तिकम्, शारीर्यादिकं रक्षोग्रहगृहीतजीवनार्थं रक्षोघ्नेष्ट्यादिकं च मलमासेऽपि कार्यम्, ज्योतिष्टोमादि निमित्तं जातेष्ट्यादि नैमित्तिकं पुत्रकामेष्ट्यादि काम्यं च मलमासोत्तरं शुद्धमास्येव कार्यम्। आरब्धकाम्यस्य मलमासेऽप्यनुष्ठानम्, नूतनारम्भसमाप्तिश्च न कर्त्तव्या तथा पूजालोपादिनिमित्तकं पुनर्मूर्त्तिप्रतिष्ठागर्भाधानाद्यन्नप्राशनान्तसंस्कारान् प्राप्तकालानन्यगतिकान् ज्वरादिरोगशान्तिमलभ्ययोगे श्राद्धं व्रतादिकं नैमित्तिकं प्रायश्चित्तं नित्यश्राद्धमूनमासिकादिश्राद्धानि दर्शश्राद्धं च मलमासेऽपि कुर्यात्।**

अनन्य स्वतन्त्र, जिसका दूसरा विकल्प न हो ऐसा, नित्य नैमित्तिक काम्य कार्य क्षयमास व मलमास में भी होता है और सगतिक अर्थात् जिसका दूसरा विकल्प हो सकता है, ऐसे नित्य, नैमित्तिक व काम्य आदि कार्य क्षयमास व मलनास में नहीं होते हैं। जैसे सन्ध्या, अग्निहोत्र आदि नित्य हैं, ग्रहणस्नान, दान आदि नैमित्तिक और शारीर (क्षुद्र ग्रह, भूत-प्रेत-पिशाच आदि बाधित) रक्षासम्बन्धी काम्य कार्य की शान्ति मलमास में की जा सकती है। ज्योतिष्टोमादि में जातकेष्टि आदि निमित्त और पुत्रेष्ट्यादि काम्य कर्म मलमास के बाद शुद्ध समय में किये जायेंगे। आरम्भ काम्यव्रत मलमास में भी कर सकते हैं। नूतन कर्म का आरम्भ व समाप्ति मलमास में नहीं करेंगे तथा पूजालोप-निमित्तक पुनर्मूर्तिप्रतिष्ठा, गर्भाधान

से अन्नप्राशनान्त संस्कार निश्चितकालात्मक होने से मलमासादि में वर्ज्य नहीं हैं; किन्तु ये कार्य अपने यथोक्त समय में नहीं हुए हैं; तो पुनः संस्कार में मलमासादि त्याज्य होगा। ज्वरादि रोग की शान्ति, नैमित्तिक प्रायश्चित्त, नित्यश्राद्ध (ऊनमासिकादि श्राद्ध दर्शश्राद्ध) मलमास में भी करने चाहिए।

**चैत्रादौ मलमासे मृतानां कदाचिद्बहुकालेन तस्मिन्नेव चैत्रादौ मलमासे प्राप्ते मलमास एव प्रतिसांवत्सरिकं श्राद्धं कर्त्तव्यम्। चैत्रादौ शुद्धमासे मृतानां तु प्रत्याब्दिकं श्राद्धं मलमासे न कर्त्तव्यम्, शुद्ध एव कार्यम्। शुद्धमासे मृतानां प्रथमाब्दिकं मलमास एव कार्यम्, न तु शुद्धे, द्वितीयाब्दिकं तु शुद्ध एव, एकादशाहान्तं कर्म सपिण्डीकरणं च मलेऽपि कार्यम्, द्वितीयमासिकादिश्राद्धन्तु मले शुद्धे चावृत्त्या द्विवारं कर्त्तव्यम्। एवं च यत्र द्वादशमासिकमधिकमासे प्राप्तं तस्य मले शुद्धे च द्विवारं कृत्वा ऊनाब्दकाले ऊनाब्दिकं च कृत्वा चतुर्दशे मासे प्रथमाब्दिकं कार्यम्। यस्मिन्वर्षे क्षयमासाव्यवहितोऽधिमासः, यथा कार्त्तिकोऽधिमासस्तदुत्तरो मासो वृश्चिकधनुःसंक्रान्तियुक्तत्वात्क्षयसंज्ञकः, तत्र कार्त्तिकमासस्थं प्रत्याब्दिकं पूर्वेऽधिमासे उत्तरे क्षयमासे च कार्यम्, तत्रापि क्षयाद् व्यवहितपूर्वोऽधिमासो यथाऽऽश्विनोऽधिमासो मार्गशीर्षः क्षयमासस्तत्रापि आश्विनमासगतं श्राद्धमधिके शुद्धे त्वाश्विने च कार्यम्, द्वयोरपि कर्मार्हत्वादिति भाति। व्यवहितक्षयमासगतं त्वाब्दिकं क्षयमास एव कार्यं तथा पूर्वमार्गशीर्षक्षयोदाहरणे मार्गशीर्षगतं पौषगतं चाब्दिकमेकस्मिन्नेव मासे तिथिपूर्वार्द्धादिभागं विनैव कार्यमिति फलितम्।**

**"नभो वाथ नभस्यो वा मलमासो यदा भवेत्।**
**आषाढ्यः सप्तमः पक्षः पितृपक्षस्तदा भवेत्"॥इति।**

**॥इति मलमासनिर्णयः॥**

चैत्रादि मासों में मलमास हो व उसमें यदि कोई मर जाय और कदाचित् पुनः कालान्तर में उसी मास में मलमास आ जाय, तो बहुत

दिनों में प्राप्त मलमास में मृत का एकोद्दिष्ट श्राद्ध मलमास में ही करेंगे और प्रतिवार्षिक श्राद्ध (एकोद्दिष्टादि) शुद्ध चैत्र में करेंगे; किन्तु शुद्ध मास में मृत का वार्षिक श्राद्ध मलमास में नहीं करेंगे। शुद्ध मास में मरने वाले का प्रथमाब्दिक श्राद्ध मलमास में ही करेंगे, शुद्ध में नहीं। द्वितीय आब्दिक (वार्षिक) श्राद्ध शुद्ध मास में ही करेंगे। आपतित एकादशाहादि सपिण्डी श्राद्ध मलमास में भी करेंगे। द्वितीय मासिकादि श्राद्ध मलमास व शुद्ध मास दोनों में करना चाहिए। इस प्रकार यदि द्वादशमासिक श्राद्ध अधिमास में प्राप्त हो जाय, तो मलमास व शुद्ध मास दोनों में करेंगे। ऊनाब्दकाल में ऊनाब्दिक श्राद्ध करके चौदहवें मास में प्रथमाब्दिक श्राद्ध करेंगे। जिस वर्ष में क्षय-मास अव्यवहित मलमास हो, जैसे कार्तिक में अधिमास हो और उसके बाद का मास मार्गशीर्ष वृश्चिक व धनु की संक्रान्तियुक्त क्षयमास हो गया हो, तो कार्तिक मास में होने वाला प्रत्याब्दिक श्राद्ध पूर्वाधिमास और उत्तर क्षयमास दोनों में करेंगे। इसमें भी क्षय से व्यवहित पूर्वाधिमास (यथा आश्विन अधिमास हो, मार्गशीर्ष क्षय हो, तो भी आश्विनमास में प्राप्त श्राद्ध अधिक व शुद्ध दोनों में करेंगे। दोनों कर्म में योग्य हैं। अव्यवहित क्षयमास होने से आब्दिक श्राद्ध क्षयमास में ही करेंगे और पूर्व मार्गशीर्ष मास के क्षयात्मक उदाहरण में मार्गशीर्षगत और पौषमासगत आब्दिक श्राद्ध इसी मास में तिथि पूर्वार्द्धादि भाग के विना ही मार्गशीर्ष का मार्गशीर्ष में व पौष का पौष में करेंगे। यह सिद्ध है। श्रावण या भाद्रपद यदि मलमास हो जाय, तो आषाढी पूर्णिमा से सातवाँ पक्ष पितृपक्ष होगा। यह मलमास का निर्णय है।

**अथ सिंहस्थापवादः। मघानक्षत्रगते सिंहांशगते च गुरौ सर्वदेशेषु सर्वमाङ्गलिककर्मणां निषेधः। सिंहांशोत्तरं गोदादक्षिणे भागीरथ्युत्तरे सिंहदोषो नास्ति। गङ्गागोदामध्यदेशे तु सर्वसिंहस्थे विवाहव्रतबन्धयोर्दोषः। अन्यकर्माणि सिंहांशोत्तरं सर्वदेशेषु कार्याणि। मेषस्थे सूर्ये सर्वदेशेषु सर्वमाङ्गलिककर्मणां**

**सर्वसिंहस्थे न दोषः। क्वचिद् वृषस्थेऽर्केऽपि दोषाभाव उक्तः। अत्र सिंहस्थे गुरौ गोदावरीस्नानम्, कन्यागते कृष्णास्नानं महापुण्यम्, गोदावर्यां यात्रिकाणां मुण्डनोपवासावावश्यकौ, न तु तत्तीरवासिनाम्। गर्भिण्यामपि भार्यायां विवाहादिमङ्गलोत्तरमपि गोदावर्यां मुण्डने दोषो नास्ति। गयागोदावरीयात्रायां मलमासगुरुशुक्रास्तादिदोषो नास्तीति सिंहस्थगुरुनिर्णयः।**

सिंहस्थ गुरु का अपवाद। मघानक्षत्र व सिंहांश (पूर्वाफाल्गुनी के प्रथम चरण) का गुरु सभी देशों के शुभ कार्यों में निषिद्ध है। सिंहांश के बाद सिंहस्थ गुरु गोदावरी के दक्षिण व गंगा के उत्तर निषिद्ध नहीं है। गंगा-गोदावरी के मध्य में सिंहस्थ गुरु समस्त विवाह व व्रतबन्धादि (जनेऊ आदि) में निषिद्ध है। अन्य शुभ कार्यों में सिंहांशोत्तर गुरु सर्वत्र ग्राह्य है; किन्तु मेषस्थ सूर्य में सभी देशों में सभी मंगल कार्यों में सर्वसिंह गुरु दोष-रहित हो जाता है। किसी के मत से वृषस्थ सूर्य में भी सिंहस्थ गुरु का दोष नहीं होता है। सिंहस्थ गुरु में गोदावरी का स्नान व कन्या के गुरु में कृष्णा नदी में स्नान महापुण्यदायक है। गोदावरी के यात्रियों को मुण्डन व उपवास आवश्यक है। किन्तु तीरवासियों के लिए मुण्डन आवश्यक नहीं है। भार्या के गर्भवती होने पर विवाहादि मंगल कार्यों के बाद भी गोदावरी पर मुण्डन का दोष नहीं होता है। गया व गोदावरी की यात्रा में मलमास, गुरु-शुक्रास्तादि दोष नहीं होता है।

**अथ सर्वकालोपयोगित्वादाशौचनिर्णयस्त्र्यम्बकीयाशौचात्सङ्गृह्यते। तत्र सपिण्डाः सप्तपुरुषावधयः। सकुल्या दशपुरुषावधयः। बान्धवास्त्रयः– आत्मपितृमातृ-संज्ञकाः, तत्रात्मबान्धवाः–**

**"आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः।**

**आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः"॥**

**अथ पितृबान्धवाः—**

**"पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः।**
**पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः"॥**

**अथ मातृबान्धवाः—**

**"मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः।**
**मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः"॥ इति।**

अशौच-निर्णय। यह अशौच-निर्णय त्र्यम्बकीय अशौच-निर्णय से ग्रहण किया जाता है। इस सम्बन्ध में प्रथम अशौच श्रेणी का विभाग किया जाता है। सात पुरुष तक सपिण्ड होता है। सात से ऊपर दश पुरुष तक सकुल्य कहा जाता है। आत्म-पितृ-मातृ ये तीन बान्धव होते हैं।

**बान्धवों का विभाग**

| | |
|---|---|
| **आत्मबान्धव** | १. पिता की बहन के पुत्र<br>२. माता की बहन के पुत्र<br>३. मामा के पुत्र |
| **पितृबान्धव** | १. पितामह की बहन के पुत्र<br>२. पिता की मौसी के पुत्र<br>३. पिता के मामा के पुत्र |
| **मातृबान्धव** | १. नाना की बहन के पुत्र<br>२. नानी की बहन के पुत्र<br>३. माता के मामा के पुत्र |

**अथाशौचाधिकारिणः। अत्र प्रागुपनयनात्कामचारकामवादकामभक्षा इति गौतमोक्तेरनुपनीतस्य पित्रादिसंस्कारं विनाऽशौचे नाधिकारः,**

**उपनयनोत्तरमपि ब्रह्मचारिणः पित्राद्यन्त्यकर्मकरण एवाशौचाधिकारो नान्यत्र, तस्माद् द्विजानां समावर्त्तनोत्तरं निरङ्कुशोऽशौचाधिकारः, स्त्रीशूद्रयोस्तु विवाहस्योपनयनस्थानापन्नत्वेन विवाहोत्तरमेवाशौचाधिकार इति।**

अशौच के अधिकारियों की गणना निम्न है। कौन-कौन अशौच के पात्र हैं ? उपनयन के पूर्व वार्ता, आचार, भक्षण (बात , व्यवहार व भोजन) में स्वतन्त्रता रहती है। ऋषि गौतम के अनुसार पिता के द्वारा संस्कार न कराये गए बालक अशौच केअधिकारी नहीं है। अर्थात् संस्कारहीन अल्पवयस्क बालक अशौच-भागी नहीं होते हैं। उपनयन के बाद भी ब्रह्मचारी को पिता-माता का अन्त्य कर्म करने पर ही अशौच लगता है, दूसरे का अशौच नहीं लगता है। इसलिए द्विजों का समावर्तन के बाद निरंकुश सर्वथा अशौच का अधिकार हो जाता है। स्त्री, शूद्रों को उपनयन के स्थानापन्न विवाह के बाद अशौच का अधिकार होता है। यह सभी वर्णों के लिए सामान्य नियम है।

**अथ सर्ववर्णसाधारणाशौचम्। १. जनने विपत्तौ च सपिण्डानां ब्राह्मणस्य दशाहमशौचम्। क्षत्रियस्य द्वादशाहम्। वैश्यस्य पञ्चदशाहम्। शूद्रस्य मासमिति। सकुल्ये मृते जाते वा सर्वेषां त्रिरात्रं तदूर्ध्वं ज्ञातपुरुषपंक्तिके कुलजे मृते पक्षिणी, अहोरात्रमित्यर्थः। अज्ञातपरम्पराके अस्मत्कुले जाता इत्येवं ज्ञानविषये गोत्रजे मृते सति स्नानेन शुद्धिः। २. प्रसूता द्विजस्त्री दशभिर्दिनैः स्पृश्या, शूद्रा तु त्रयोदशभिः। जनने विंशतिरात्रेण पुत्रजननी कर्मार्हा, कन्याजननी मासेन, शूद्रां भिन्नमिदम्, भर्ता सपत्न्यश्च जनयितॄं स्पृष्ट्वा दशाहमस्पृश्याः, तद्विना सचैलं स्नात्वा स्पृश्या भवन्ति। अशौचस्य तृतीयभागमस्पृश्यत्वम्।**

**"प्रथमेह्नि तृतीये च सप्तमे नवमे तथा।**
**चतुर्थेऽहनि कर्त्तव्यमस्थिसञ्चयनं द्विजैः"॥**

**अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शो विधीयते। प्रभातात्प्रागशौचपाते पूर्वदिनेन समं रात्रिर्ग्राह्या। अधमवर्णासु स्त्रीषूत्तमवर्णेन जाता वर्णसङ्करा स्वमातृजात्युक्तमशौचं कुर्वीरन्, अधमेनोत्तमासु जातानां शूद्रवदशौचं स्यादिति।**

१. जननाशौच व मृताशौच ब्राह्मणों को सपिण्ड तक १० दिन का अशौच होता है और क्षत्रियों को १२, वैश्यों को १५ व शूद्रों को एक मास तक सपिण्ड (सात पीढ़ी तक) अशौच लगता है। सात से १० तक सकुल्य में वही अशौच तीन दिन का होता है। सकुल्य के ऊपर १७ पुरुष (पुस्त) के बाद ज्ञात पंक्ति तक (जहाँ तक ज्ञान हो) पक्षिणी अशौच होता है, अर्थात् प्राप्त अशौच यदि दिन में है, तो वह दिन, उसकी रात्रि और अग्रिम दिन तथा यदि रात्रि में प्राप्त हुआ, तो वह रात्रि, दूसरा दिन व दूसरे दिन भी रात्रि पक्षिणी कहलाती है। यदि परम्परागत पीढ़ी का ज्ञान न हो, केवल यही ज्ञान हो कि हमारे कुल के हैं। ऐसी स्थिति में (कुल मात्र के ज्ञान में) गोत्रज के मरने में स्नानमात्र से शुद्धि हो जाती है। २. प्रसूता द्विज की स्त्री दश दिन में स्पृश्य हो जाती है। शूद्र-स्त्री १३ दिन में स्पृश्य होती है। कर्म का अधिकार २० दिन में होता है, यदि पुत्र का जन्म है, अन्यथा कन्या के जन्म से माता एक मास (३० दिन) में कर्म की अधिकारिणी होती है। परन्तु यह नियम शूद्र-स्त्री से भिन्न का है। पति व सापत्नी (सौति) यदि प्रसूता को स्पर्श करते हैं, तो वे दश दिन तक अस्पृश्य रहेंगे। यदि स्पर्श नहीं करते हैं तो सचैल स्नान से स्पृश्य हो जाते हैं। अशौच का तीसरा भाग अस्पृश्य है। प्रथम, तीसरा, सातवाँ या चौथे दिन अस्थिसञ्चय करना चाहिए। अस्थिसञ्चयन के बाद अस्पृश्यत्व की निवृत्ति हो जाती है।

प्रातःकाल के पूर्व यदि अशौच प्रारम्भ हो जाय तो रात्रि के पूर्वदिन के साथ अशौच की गणना होगी। नीच वर्ण की स्त्रियों से उत्तम वर्ण

के पुरुष से उत्पन्न सन्तान वर्ण-संकर होते हैं। माता के जातीय (वर्ण-संकर) अशौच के अधिकारी हैं। अधम जाति के पुरुष से उत्तम जाति की स्त्री से उत्पन्न सन्तान शूद्रों के अशौच के अधिकारी हैं।

**अथ जननाशौचम्। ३. गर्भिण्या मासचतुष्टयपर्यन्तं गर्भनाशः स्राव इत्युच्यते, तदा गर्भिण्या मासत्रयपर्यन्तं त्रिरात्रं चतुर्थमासे चतूरात्रमशौचम् अस्पृश्यत्वं च, पित्रादिसपिण्डानां स्रावमात्रे स्नानाच्छुद्धिरिति। ४. गर्भिण्याः पञ्चमषष्ठमासयोर्गर्भनाशः पात इत्युच्यते, तत्र गर्भिण्या माससंख्यया पञ्च षट् च दिनानि क्रमेणास्पृश्यत्वावहमशौचम्, पित्रादिसपिण्डानां तु त्रिरात्रं जननाशौचं मृताशौचं तु नास्ति, इदमेतावत्पर्यन्तं सर्वसाधारणं वयोऽवस्थानिमित्तत्वादिति। ५. गर्भिण्याः सप्तममासप्रभृतिप्रसवे सर्वेषां मातृपित्रादीनां सपिण्डानां विप्राणां दशाहम्, क्षत्रियाणां द्वादशाहम्, वैश्यानां पञ्चदशाहम्, शूद्राणां मासम्, सच्छूद्रस्य मासार्द्धं जननाशौचम्, मृताशौचं तु नास्ति। इदमेतावत्पर्यन्तं सापत्न्यमातुः सर्वत्र पितृवदिति। ६. जननाशौचे गर्भिण्या दशाहमस्पृश्यत्वम्, पितुः सापत्न्यमातुश्च स्नानात्प्रागस्पृश्यत्वम्, स्नानोत्तरं स्पृश्यत्वमेव, किन्तु सर्वत्र सपिण्डानां कर्मानधिकारमात्रम्, तत्रापि नालच्छेदनात्पूर्वं जातकर्मादौ पितुरधिकारः, एवं प्रथमषष्ठदशमदिवसेषु जन्मदाख्यदेवतापूजायां च पितुर्वचनादधिकारः, कूटस्थमारभ्य सप्तपुरुषपर्यन्तं सपिण्डाः। ततस्सप्त सोदकाः। ततस्सप्त गोत्राः। सोदकानां तु त्रिरात्रमशौचम्। सगोत्राणां स्नानमात्रमिति। ७. गर्भिण्या दशाहोत्तरं पुत्रोत्पत्तौ विंशतिदिनानि कन्योत्पत्तौ मासपर्यन्तं कर्मानधिकारः, इदं तु शूद्रातिरिक्तविषयमिति गौडा इति।**

जननाशौच का विचार। ३. तीन से चार मास तक गर्भ नष्ट हो जाय तो उसे स्राव कहते हैं। यह तीन मास के अन्दर हो तो तीन रात्रि, चौथे मास चार रात्रि का अशौच व अस्पृश्यत्व रहता है। स्रावमात्र में पित्रादि सपिण्डों की स्नान मात्र से शुद्धि हो जाती है।

४. यदि पाँच या छः मास में गर्भ नष्ट होता है तो उसे पात या गर्भपात कहेंगे। इसमें मास की संख्यातुल्य दिन का अशौच व अस्पृश्यता रहती है। पिता आदि सपिण्डों के लिए त्रिरात्र अशौच है। यह मात्र जननाशौच होगा। इसे मृताशौच नहीं कहेंगे। अशौच निर्णय प्रारम्भ से यहाँ तक सर्वसाधारण वय (अवस्था) निमित्तक है।

५. सात मास प्रभृति मासों में प्रसव से माता-पिता व सपिण्ड सभी को ब्राह्मण के लिए १० दिन, क्षत्रिय १२ दिन, वैश्य १५ दिन, शूद्र १ मास, सत्‌शूद्रों के लिए मासार्ध जनन अशौच होता है। यहाँ पर मृताशौच नहीं होगा। यहाँ तक अशौच की व्यवस्था में सपत्न माता को पिता जैसा ही अशौच लगेगा। ६. जननाशौच में माता दश दिन तक अस्पृश्यत्व, पिता व सपत्नमाता को स्नान के पूर्व अस्पृश्यत्व, स्नान के बाद स्पृश्यत्व हो जाता है। किन्तु सर्वत्र सपिण्डों के लिए कर्म में अधिकार नहीं होगा। इसमें भी नालच्छेदन के पूर्व जातकर्म करने के लिए पिता अधिकारी है। एवं प्रथम, षष्ठ, दशम दिनों तक जन्मकाल के अधिकारी देवताओं की पूजा (षष्ठी देवी पूजनादि) पिता की आज्ञा से अधिकार प्राप्त है। सपिण्डादिकों का विभाग इस प्रकार है– मूलपुरुष से सात पीढ़ी सपिण्ड और उससे ऊपर ७ पीढ़ी सोदक, उसके ७ पीढ़ी सगोत्र हैं। सोदक को त्रिरात्रि व सगोत्र वालों को स्नान मात्र से शुद्धि हो जाती है। ७. पुत्रोत्पत्ति में गर्भिणी को १० दिन के बाद बीस २० दिन तक कन्या की उत्पत्ति में १ मास पर्यन्त कर्म का अधिकार नहीं प्राप्त होता है। यह शूद्रों के अतिरिक्त का विषय है। यह गौडों का मत है।

**अथ मृताशौचम्। तत्र तद्वतामस्पृश्यत्वं कर्मानधिकारश्चेत्युभयं भवति। मृतजाते शिशौ सर्वेषां सपिण्डानां दशाहं जननाशौचम्, मृताशौचं तु नास्तीति,**

**जननाशौचमपि नेति गौडाः। ८. नालच्छेदनात्पूर्वं शिशौ मृते मातुर्दशाहं पित्रादिसपिण्डानां त्रिरात्रं जननाशौचम्, मृताशौचं तु नास्तीति जातमृते मृतजाते नालच्छेदेऽपि मृतकसूतकयोरभाव इति गौडाः। ९. नालच्छेदादूर्ध्वं शिशुमरणे दशाहं जननाशौचं सर्वेषां सपिण्डानामस्तीति मृताशौचं तु नास्तीति। १०. दशाहानन्तरं नामकरणात्प्राक् शिशुमरणे स्नानमात्रेण सपिण्डानां शुद्धिः। मातापित्रोस्त्रिरात्रं पुत्रमृतौ, कन्यामृतौ तु एकाहः, नाम्नः पूर्वं खननमेव नित्यम्, नोदकदानादि, अलङ्करणन्तु सर्वत्र भवतीति।**

मृताशौच-विचार । ८. मृताशौच में अस्पृश्यता व कर्म का अनधिकार दोनों प्राप्त हैं। मृत बालक की उत्पत्ति में जननाशौच सपिण्ड मात्र को होगा, इसमें मृताशौच की प्रवृत्ति नहीं है। गौडों के अनुसार जननाशौच भी नहीं होता है। ९. नालच्छेदन के पूर्व बालक के मरने पर माता को दश दिन व पित्रादि सपिण्डों को त्रिरात्र जननाशौच मात्र है, न कि मृताशौच। जन्म के बाद मर जाय या मरा हुआ जन्म ले, नालच्छेद होने पर भी मृतक सूतक नहीं लगता है। यह गौड सम्प्रदाय है। १०. नालच्छेद के बाद शिशु के मर जाने पर दशाह अशौच सपिण्डमात्र के लिए होगा, मृताशौच नहीं होगा। दश दिन के बाद नामकरण से पूर्व शिशु के मरने पर सपिण्डों की स्नान मात्र से शुद्धि हो जाती है। माता-पिता को त्रिरात्र अशौच लगता है। यह स्थिति पुत्र की मृत्यु में है, कन्या के मरने पर एक दिन का अशौच लगता है। नामकरण के पूर्व तक शव को भूमिसमाधि देना होगा। जलदानादि कार्य नहीं होते हैं। अलङ्करण तो सर्वत्र होता है।

**११. नामकरणोत्तरं वर्षपर्यन्तं दाहखननयोर्विकल्प इति। १२. नामोत्तरं दन्तोत्पत्तेः प्राक् पुत्रमरणे दाहे सपिण्डानामेकाहः, खनने तु स्नानाच्छुद्धिः,**

मातापित्रोरुभयत्रापि त्रिरात्रम्। कन्यामृतौ तु त्रिपुरुषसपिण्डानामुभयत्रापि स्नानाच्छुद्धिः, मातापित्रोरुभयत्राप्येकाह इति। १३. दन्तोत्पत्तेरूर्ध्वं वर्षत्रयपर्यन्तं पुत्रमरणे दाहे खनने वा सपिण्डानामेकाहः, मातापित्रोस्त्रिरात्रम्। कन्यामृतौ तु त्रिपुरुषसपिण्डानामुभयत्रापि स्नानाच्छुद्धिः, मातापित्रोस्त्रिदिनमशौचमिति। १४. प्रथमवर्षादौ कृतचूडस्य पुत्रस्य मरणे पित्रादिसपिण्डानां त्रिदिनमशौचं नियतं दाहश्च नियत इति। १५. त्रिवर्षोर्ध्वं कृतचूडस्याकृतचूडस्य वा पुत्रस्य मरणे प्रागुपनयनात्पित्रादिसपिण्डानां त्रिदिनमाशौचं दाहश्च नियतः, उदकदानादिस्तूष्णीम्, कृतचूडस्य भूमौ पिण्डदानमपि तूष्णीमिति। १६. कन्यायाः वर्षत्रयानन्तरं वाग्दनात् प्राग् मरणे त्रिपुरुषसपिण्डानामेकाहः, मातापित्रोस्त्रिदिनम्, दाहोदकदानादि तु तूष्णीमेवेति। १७. वाग्दानोत्तरं विवाहात् प्राग् मृतासु कन्यासु भर्तृकुले पितृकुले च सप्तपुरुष-सपिण्डानां पित्रादीनां सर्वेषां त्रिदिनमशौचम्, दाहोदकदानादिकं तूष्णीमिति। १८. उपनयनोत्तरं मृतस्य पुरुषस्य सर्वेषां सपिण्डादीनां विप्राणां दशाहम्, क्षत्रियाणां द्वादशाहम्, वैश्यानां पञ्चदशाहम्, शूद्राणां मासम्, सच्छूद्राणां मासार्द्धम्, सोदकानां त्रिरात्रम्, गोत्रजानां स्नानाच्छुद्धिरिति। १९. विवाहोर्ध्वं कन्यायाः पितृगृहे मरणे मातापित्रोः सोदरभ्रातुश्च त्रिरात्रम्, पितृव्यादीनामेकाह इति। २०. ऊढायाः कन्यायाः पितृगृहे प्रसवे माता-पित्रोस्त्रिरात्रम्, सहोदरस्यैकरात्रम्, पितृव्यादीनामप्येकाह इति केचिदिति।

११. नामकरण के बाद एक वर्ष तक खनन, दाह दोनों का विधान है। १२. नामकरण के बाद दन्तोत्पत्ति के पूर्व पुत्रमरण का दाह करने पर सपिण्डों को एक दिन व खनन करने पर स्नानमात्र से शुद्धि है। दोनों अवस्था (दाह-खनन) में माता-पिता को त्रिरात्र अशौच लगता है। कन्या के मरने पर उभयत्र (खनन-दाह) त्रिपुरुष

सपिण्डों की स्नानमात्र से शुद्धि व माता-पिता को उभयत्र (खनन-दाह) एक दिन का अशौच होता है।१३. दन्तोत्पत्ति के बाद तीन वर्ष तक पुत्र के मरण में दाह या खनन दोनों में सपिण्ड को एक दिन, माता-पिता को त्रिरात्र अशौच लगता है। कन्या के मरने पर उभयत्र (दाह-खनन) त्रिपुरुष सपिण्डों की स्नानमात्र से शुद्धि होती है तथा माता पिता को त्रिरात्र अशौच होता है।१४. प्रथमादि वर्षों में चूड़ाकर्म करने के बाद पुत्र के मरण में पिता प्रभृति सपिण्डों को तीन दिन का अशौच होता है और दाह भी नियत है।१५.तीन वर्ष के बाद चूड़ाकरण हुआ या नहीं, दोनों अवस्थाओं में उपनयन के पूर्व पिता प्रभृति सपिण्ड को तीन दिन का अशौच होता है। दाह अवश्य करना चाहिए। जलदान आदि कर्म का उल्लेख न होने से अमन्त्रक किया जा सकता है। यदि चूड़ाकर्म हो गया हो, तो भूमि पर अमन्त्रक पिण्डदान करें।१६. कन्या के तीन वर्ष के बाद वाग्दान के पूर्व मरने पर त्रिपुरुष सपिण्डों के लिए एक दिन व माता-पिता को तीन दिन, दाह-जलदान आदि अमन्त्रक होगा। १७. वाग्दान के बाद विवाह के पूर्व कन्या के मरने पर पितृकुल या भर्तृकुल में सात पुरुषों (सपिण्डों) माता-पिता प्रभृति को तीन दिन अशौच व दाह, जलदानादि अमन्त्रक होता है। १८. यज्ञोपवीत के बाद मृत पुरुष का अशौच सपिण्ड ब्राह्मणों को १० दिन का, क्षत्रियों को १२, वैश्यों को १५, शूद्रों को १ मास, सत् शूद्र को १५ दिन का, सोदकों को त्रिरात्र होता है और गोत्रजों की स्नान मात्र से शुद्धि होती है। १९. विवाह के बाद पिता के घर में कन्या के मरने पर माता-पिता व सहोदर भाई के लिए त्रिरात्र, पितृव्य प्रभृति को एक दिन का अशौच होता है। २०. विवाहित कन्या पिता के घर में प्रसूता होने पर माता-पिता को तीन व सहोदर को एक रात्रि का अशौच होता है और पितृव्य आदि को एक दिन का अशौच होता है, यह कोई कहते हैं।

**२१. पतिगृहे प्रसवे पित्रादीनामशौचं नास्तीति। २२. ऊढायाः कन्यायाः पतिगृहे मरणे मातापित्रोस्त्रिरात्रं नान्येषामिति। २३. मातापित्रोर्मरणे ऊढपुत्र्यास्त्रिरात्रं दशाहान्तम्, दशाहोर्ध्वं कालान्तरे वत्सरान्तेऽपि पक्षिणी, अत्रैवातिक्रान्ताशौचं ब्राह्मणवचनाद्भवति नान्यत्रेति। २४. भ्रातृभगिन्योः परस्परगृहमरणे परस्परस्य त्रिरात्रं गृहान्तरमृतौ परस्परस्य पक्षिणीति। २५. मातुलमरणे भगिन्यपत्यस्य पक्षिणी, उपकारिमातुलमरणे त्रिरात्रमिति। २६. मातुलान्या मरणे भर्तृभगिन्यपत्यस्य पक्षिणीति। २७. उपनीतभागिनेयमरणे मातुलस्य मातुलभगिन्याश्च त्रिरात्रम्, अनुपनीते मृते तु मातुलस्य मातुलभगिन्याश्च पक्षिणीति।**

२१. पति के गृह में प्रसव से पिता-माता आदि को अशौच नहीं लगता है। २२. ऊढा (विवाहिता) कन्या यदि पति के घर मरती है, तो माता-पिता को त्रिरात्र अशौच लगता है व दूसरे को नहीं लगता है। २३. माता-पिता के मरने पर विवाहिता कन्या को त्रिरात्र अशौच होता है, यदि उनके मरने की सूचना १० दिन के अन्दर प्राप्त है। दश दिनों के बाद कालान्तर (वर्षान्तर या वर्षान्त) में मरण की सूचना से पक्षिणी अशौच होता है। यहाँ पर अतिक्रान्त अशौच काल में ब्राह्मण के वचन के अनुसार शुद्धि हो जाती है। किन्तु यह नियम सार्वत्रिक नहीं है। २४. भाई-बहन के परस्पर एक दूसरे के घर में मरने पर त्रिरात्र अशौच लगता है। किन्तु गृहान्तर मृत में पक्षिणी। २५. मामा के मरने में भगिनी-अपत्य (भांजे) को पक्षिणी, सहायक मामा के मरने पर त्रिरात्राशौच लगता है। २६. मामी के मरने पर मामा के भागिनेय (भांजा) व भागिनेयी (भांजी) दोनों को पक्षिणी अशौच लगता है। २७. उपनीत भागिनेय (भांजे) के मरने पर मामा-मौसी को त्रिरात्र अशौच होता है और अनुपनीत भागिनेय के मरने पर मामा व मौसी को पक्षिणी अशौच होता है।

**२८. मातामहमरणे दुहित्रपत्यस्य त्रिरात्रमिति। २९. अनुपनीतदौहित्र-मरणे मातामहस्य मातामह्याश्च पक्षिणी, उपनीते मृते तु त्रिरात्र-मिति केचिदिति। ३०. मातामह्यां मृतायां दुहित्रपत्यस्य पक्षिणीति। ३१. श्वश्रूश्वशुरयोर्मृतौ सत्यां जामातुः सन्निधौ त्रिरात्रम्, असन्निधौ पक्षिणी, ग्रामान्तरे चैकरात्रमिति। ३२. जामातरि मृते तु श्वश्रूश्वशुरयोः स्नानाच्छुद्धिः, एकाहमशौचमिति केचिदिति। ३३. श्यालके मृते भगिनीभर्त्तुरेकाहः, श्यालकसुतमरणे तु स्नानमात्रमिति। ३४. पितृष्वसरि मृतायां भ्रात्रपत्यस्य पक्षिणीति। ३५. मातृष्वसरि मृतायां भ्रात्रपत्यस्य पक्षिणीति।**

२८. मातामह (नाना) के मरने पर दौहित्र (नाती) को त्रिरात्र अशौच लगता है। २९. अनुपनीत दौहित्र (नाती) के मरने पर नाना-नानी को पक्षिणी अशौच लगता है, उपनीत दौहित्र के मरने पर त्रिरात्र अशौच लगता है, ऐसा भी कोई कहते हैं। ३०. नानी के मरने पर दौहित्र (नाती) को पक्षिणी अशौच होता है। ३१. दामाद के घर या सन्निधि में श्वसुर या सासु के मरने पर जामाता (दामाद) को त्रिरात्र और यदि सन्निधि नहीं है, तो पक्षिणी, ग्रामान्त में एकरात्र अशौच होता है। ३२. दामाद के मरने में श्वसुर व सासु की स्नान से शुद्धि होती है। कोई कहते हैं कि एकाह अशौच होता है। ३३. साले के मरने में भगिनी-पति (जीजा) को एकाह अशौच है। साले के पुत्र के मरण में स्नान से शुद्धि होती है। ३४. पिता की बहन (फूआ) के मरने पर भाई-बहन की सन्तान को पक्षिणी अशौच होता है। ३५. माता की बहन (मौसी) के मरने पर बहन की सन्तान को पक्षिणी अशौच होता है।

**३६. आत्मबन्धुपितृबन्धुमातृबन्धूनां मरणेषु पक्षिणी, पितृष्वस्रादिकन्यानामूढानां मरणे एकाहः, दत्तकमृतौ तु पूर्वापरपित्रोस्त्रिरात्रं सपिण्डानामेकाह इति। ३७. पूर्वापरपित्रोर्मृतौ दत्तकस्य त्रिरात्रम्। ३८. दत्तकस्य पुत्रपौत्राणां मरणे जनने वा सपिण्डानामेकाहः। ३९. सपिण्डे पुत्रीकृते दत्तके मृते तु सपिण्डानां दशाह एव। ४०. आचार्यमरणे शिष्यस्य त्रिरात्रम्, तत्पुत्रपत्न्योर्मरणे एकाहः, उपनीयाध्यापक आचार्य इत्युच्यते, वेदैकदेशाध्यापक उपाध्यायः, तन्मरणे शिष्यस्यैकरात्रमिति। ४१. शिष्यस्योपनीतस्य मरणे गुरोस्त्रिरात्रम्, परोपनीतस्य मरणे त्वेकरात्रमिति।**

३६. आत्मबन्धु, पितृबन्धु, मातृबन्धुओं में से किसी के मरने पर पक्षिणी अशौच लगता है। पिता की बहन आदि की अविवाहित कन्या के मरने पर एक दिन का अशौच होता है। दत्तक पुत्र के मरने पर पूर्वपिता व परपिता को त्रिरात्र अशौच होता है और सपिण्डकों को एक दिन का अशौच होता है। ३७. पूर्व व अपर पिता के मरने पर दत्तक पुत्र को त्रिरात्राशौच होता है। ३८. दत्तक पुत्र के पुत्र या पौत्र के मरने व जनन होने पर सपिण्डकों को एक दिन का अशौच होता है। ३९. सपिण्ड का लड़का यदि दत्तक है, उसके मरने में सपिण्ड को दश दिन का अशौच होता है। ४०. आचार्य के मरने पर शिष्य को त्रिरात्र अशौच होता है। आचार्य की पत्नी या पुत्र के मरने में एक दिन का अशौच होता है। ४१. उपाध्याय (अध्यापक) के मरने पर एक दिन का अशौच होता है। आचार्य द्वारा उपनीत शिष्य के मरने पर गुरु को त्रिरात्राशौच होता है। परोपनीत शिष्य के मरने पर एक दिन का अशौच होता है।

**४२. सहाध्यायिनो मृतौ एकग्रामीणयोरनूचानश्रोत्रिययोर्मृतौ तु चैकाहः, साङ्गवेदाध्यायी अनूचानः, वेदमात्राध्यायी श्रोत्रियः, अध्ययनशब्दार्थस्यार्थज्ञान-पर्यवसायित्वं न्यायसिद्धमिति। ४३. असपिण्डस्यापि श्रोत्रियस्य मैत्रादिसम्बन्धस्य यद्गृहे मरणम्, तद्गृहस्वामिनमेकरात्रमिति। ४४. वानप्रस्थे यतौ षण्ढे च मृते सपिण्डानां स्नानमात्रमिति। ४५. अथातिक्रान्ताशौचम्। तत्र जनने अतिक्रान्ताशौचं नास्ति, पितुःस्नानं तत्रापि भवति। मृतके तु अनुपनीत-मरणादिषु भगिनीमातुलादिमरणनिमित्तकत्रिरात्रादिषु चातिक्रान्ताशौचं नास्ति; किन्तु दशाहादिमृताशौचविषयमेव।**

४२. सहाध्यायी (सहपाठी) व एक ग्राम के अनूचान श्रोत्रियों के मरने पर एक दिन का अशौच होता है। साङ्गवेद पढ़ने वाले अनूचान, व मात्र वेदाध्यायी श्रोत्रिय कहे जाते हैं। अध्ययन शब्द का अर्थ अर्थज्ञानपूर्वक अभ्यास (अध्ययन) है। ४३. यदि असपिण्ड श्रोत्रिय अथवा मित्रादि सम्बन्धी अपने गृह में मर जाँय, तो गृहस्वामी को एक रात्रि का अशौच लगता है। ४४. वानप्रस्थी, यति (संन्यासी) या नंपुसक के मरने पर उनके सपिण्डों की स्नानमात्र से शुद्धि होती है। अतिक्रान्त अशौच श्रवण से स्नानमात्र से शुद्धि है। ४५. अतिक्रान्त जननाशौच नहीं लगता है; किन्तु पिता को स्नानमात्र का अशौच होता है। मृताशौच – अनुपनीत मरणनिमित्तक त्रिरात्र आदि अशौच में भगिनी-मातुलादि निमित्तक त्रिरात्राशौच, अतिक्रान्त अशौच नहीं लगता है। अर्थात् जहाँ पर अनुपनीत भगिनी या मामा आदि के मरने में त्रिरात्राशौच की प्राप्ति है, वहाँ पर अशौच के निवृत्त होने पर यदि श्रवण हो तो किसी प्रकार का अशौच नहीं होता है; किन्तु यह नियम दशाहादि मृत अशौच विषय का ही है।

**४६. दशाहमध्ये जनने मरणे ज्ञाते पुत्रादीनां च सर्वेषां शेषेणैव शुद्धिः, संस्कारमपि शेषेणैव समापयेत्, अस्थिपर्णशरसंस्कारमपि शेषेणैव समापयेदिति । ४७. आद्यत्रिरात्रमध्ये समानोदकमरणे ज्ञाते समानोदकानां शेषेणैव शुद्धिः, त्रिरात्रेऽतिक्रान्ते तु दशाहमध्ये ज्ञातेऽपि नाशौचम्; किन्तु स्नानमात्रम्, अयमेव न्यायो मातुलादित्रिरात्रादिषु ज्ञेय इति । ४८. मातापित्रोर्मरणे दूरदेशेऽपि संवत्सरान्तरमपि पुत्रो दशाहादि पूर्णमेवाशौचं कुर्यादिति । ४९. स्त्रीपुंसयोः परस्परमरणे परस्परं देशान्तरे वत्सरान्तेऽपि पूर्णं दशाहादि भवतीति । ५०. सपत्नीषु परस्परमृतौ परस्परदेशकालावनपेक्ष्य दशाहं पूर्णमेवाशौचं भवतीति ।**

४६. जनन-मरण अशौच की दशाह के मध्य में जानकारी होने पर पुत्रादि सभी व्यक्तियों के शेष अशौच से अशौच की समाप्ति हो जाती है और दशाह के मध्य में कुशपुत्र का संस्कार किया जाय, तो भी अवशिष्टाशौच से ही शुद्धि हो जाती है । ४७. अशौच के प्रथम त्रिभाग के अन्दर समानोदक के मरण का ज्ञान होने पर समानोदकों की शेष अशौच से ही शुद्धि हो जाती है और त्रिरात्र अशौच व्यतीत होने पर दश दिन के अन्दर ज्ञान होने पर अशौच नहीं होता है; अपि तु स्नानमात्र से शुद्धि हो जाती है । यह न्याय है । यह मामा आदिकों के त्रिरात्र आदि अशौच के विषय का निर्णय है । ४८. दूरदेश में संवत्सर व्यतीत होने पर माता-पिता के मरने का ज्ञान हो, तो पुत्र दशाह्निक पूर्ण अशौच का कार्य करेगा । ४९. स्त्री या पुरुष के परस्पर देशान्तर मरण की सूचना एक वर्ष के बाद प्राप्त होती है, तो कुशपर्णादि संस्कार में पूर्ण दशाहादि अशौच होगा । ५०. सपत्नियों के परस्पर देशान्तर मृत होने व एक वर्ष के बाद ज्ञान होने पर भी पूर्ण दश दिन का अशौच होगा ।

**५१. सापत्नमातुर्मरणे संवत्सरोर्ध्वमपि देशान्तरेऽपि त्रिरात्रमिति। ५२. औरसपुत्रे मृते संवत्सरोर्ध्वमपि मातापित्रोश्च त्रिरात्रमिति। ५३. दशाहोर्ध्वमेव देशे ज्ञातिमरणे ज्ञाते मासत्रयपर्यन्तं त्रिरात्रम्, षण्मासपर्यन्तं पक्षिणी, नवमासपर्यन्तमेकदिनम्, तदनन्तरं स्नानमात्रमिति वृद्धवसिष्ठः। पक्षत्रयपर्यन्तं त्रिरात्रम्, षण्मासपर्यन्तं पक्षिणी, वर्षपर्यन्तमेकरात्रम्, तदूर्ध्वं स्नानमात्रमिति माधवीये देवलः। अत्रापदनापद्विषयत्वेन व्यवस्था द्रष्टव्येति। ५४. दशाहोर्ध्वं देशान्तरे ज्ञातिमरणे ज्ञाते त्रिपक्षपर्यन्तं त्रिरात्रं ततो मासषट्कपर्यन्तमहोरात्रं ततो वर्षपर्यन्तं दिवाश्रवणे आसायं रात्रिश्रवणे आप्रातराशौचम्, वत्सरान्ते तु स्नानाच्छुद्धिः। इदं सर्वमतिक्रान्ताशौचं सर्ववर्णसाधारणम्। अत्र देशान्तरे ज्ञातिमृते ज्ञाते स्नानाच्छुद्धिरिति केचित्, तन्माधवोदाहृतविष्णुस्मृत्यज्ञानविलसितमिति ज्ञेयम्, देशान्तरं तु विप्रस्य विंशतियोजनान्तरं क्षत्रियस्य चतुर्विंशतियोजनान्तरं वैश्यस्य सच्छूद्रस्य च त्रिंशद्योजनान्तरमसच्छूद्रस्य षष्टियोजनान्तरं ज्ञेयम्, पक्षान्तराणि तूक्तपक्षानुसारेण ज्ञातव्यानीति।**

५१. देशान्तर में विमाता के मरने का वर्षान्त में ज्ञान हो, तो त्रिरात्र अशौच होगा। ५२. औरस पुत्र की मृत्यु होने पर एक वर्ष बाद भी माता-पिता को त्रिरात्र अशौच होता है। ५३. दश दिन के बाद तीन मास तक अपने देश में अपनी ज्ञाति की मृत्यु ज्ञात होने पर त्रिरात्र, ६ मास पर्यन्त पक्षिणी, नव मास पर्यन्त एक दिन, नव मास के बाद स्नानमात्र से शुद्धि हो जाती है। यह वृद्धवसिष्ठ का मत है। तीन पक्ष के बाद त्रिरात्र, छः मासपर्यन्त पक्षिणी, वर्षपर्यन्त एक रात्रि, उसके बाद स्नान से शुद्धि हो जाती है। यह माधवीय निर्णय में देवल का मत है और यहाँ पर आपत्ति-अनापत्ति के अनुसार भी व्यवस्था देखनी चाहिए। ५४. देशान्तर मे स्वज्ञाति का मरण दश दिन

के बाद ज्ञात हो तो तीन पक्ष तक त्रिरात्र, ६ मास पर्यन्त अहोरात्र, उसके बाद वर्षपर्यन्त दिन में श्रवण से सायंकाल तक और रात्रि में श्रवण से प्रातः तक अशौच होता है। वर्ष के बाद स्नान मात्र से शुद्धि हो जाती है। यही सभी वर्णों के लिए अतिक्रान्त अशौच (व्यतीत अशौच ज्ञात होने पर) की सामान्य व्यवस्था है। यहाँ पर देशान्तर में सम्बन्धी की मृत्यु का ज्ञान होने पर स्नानमात्र से शुद्धि होती है। यह कोई कहते हैं। इसकी अपेक्षा माधव मत उचित है। देशान्तर मरण, अतिक्रान्त अशौच में ब्राह्मण के लिए बीस योजन के बाद देशान्तर मानते हैं और क्षत्रिय आदिकों के लिए क्रमशः २४, ३० और ६० योजनों के बाद देशान्तर माना जाता है। यहाँ पक्षान्तर का ज्ञान उक्त पक्ष के अनुसार जानना चाहिए।

**५६. अत्रायं निष्कर्षः – यानि एकगोत्रविषयकजननमरणातिक्रान्ताशौचानि, तानि जायापतिभ्यामुभाभ्यामविशेषेणानुष्ठेयानि , यानि पुनर्भगिनीमातुलादिभिन्नगोत्राशौचानि, तेषु जायापतिमध्ये यत्सम्बन्धं तत्तेनैवानुष्ठेयं नोभाभ्यामिति। ५६. आहिताग्नेर्मन्त्रवद्दाहदिनमारभ्य पुत्रादिभिरशौचं कार्यमिति।**

५६. यहाँ इसका निष्कर्ष निकला कि सगोत्रीय का अशौच पति-पत्नी दोनों विकल्प-रहित पालन करें और मातुल-भगिनी आदि जो भिन्न गोत्रों का अशौच है, उसे परिवार में जिससे मृत व्यक्ति का सम्बन्ध है, केवल वही उसका पालन करे, ऐसे अशौच का पति-पत्नी दोनों को पालन करने की आवश्यकता नहीं है। ५७. आहिताग्नि (अग्निहोत्री) के मन्त्र-सहित दाह-संस्कार के दिन से पुत्रादिक को अशौच का पालन करना चाहिए।

**५७. आहिताग्नौ प्रोषिते मृते मन्त्रवद्दाहात्पूर्वं पुत्रादीनां नाशौचम्, सन्ध्यादिकर्मलोपश्च नास्तीति। ५८. अनाहिताग्नेस्तु मरणदिनमारभ्य पुत्रादिभिरशौचं कार्यमिति। ५९. अथ रात्रौ जनने मरणे वा रात्रिं त्रिभागां कृत्वा, आद्यभागद्वये चेत्पूर्वदिनं तृतीयभागे चेदुत्तरदिनमारभ्याशौचं कार्यम्, अर्द्धरात्रात्प्राक्पूर्वदिनं परत उत्तरदिनम्, प्राक्सूर्योदयात्पूर्वं दिनमूर्ध्वमुत्तरमिति पक्षत्रयं देशान्तरतो व्यस्थितं महाराष्ट्रे त्वाद्यपक्ष एव चरतीति।**

५७. यदि अग्निहोत्री विदेश में मरा है, तब भी कुशपुत्र का समन्त्रक दाह करने के दिन से ही अशौच की प्रवृत्ति होती है। समन्त्रक दाह के पूर्व अशौच नहीं लगता है और दाह के पूर्व सन्ध्यादि कर्म का लोप भी नहीं होता। ५८. जो अग्निहोत्री नहीं हैं, उनकी मृत्यु के दिन से ही पुत्रादि सपिण्डों को अशौच का पालन करना चाहिए। ५९. रात्रि में जन्म या मृत्यु होने पर रात्रि का त्रिभाग करके प्रथम दो भागों में यदि जन्म या मृत्यु है, तो पूर्व दिन से अशौच की गणना करें और यदि तृतीय भाग में जन्म या मृत्यु है, तो अगले दिन से अशौच की गणना करें। अर्धरात्रि से पूर्व जन्म या मृत्यु होने पर पूर्व दिन से अर्धरात्रि के बाद अगले दिन से अशौच गिनें। तीसरा पक्ष यह है कि सूर्योदय से पूर्व हो तो पूर्व दिन व सूर्योदय के बाद हो तो अगले सूर्योदय वाले दिन से अशौच गिना जाना चाहिए। देशान्तर की व्यवस्था से तीन पक्षों की व्यवस्था की गई है। महाराष्ट्र में प्रथम पक्ष का आचरण किया जाता है। यहाँ काशी-सन्निकट के स्थानों में महामहोपाध्याय भारत-प्रसिद्ध विद्वान् पं० श्री शिवकुमार शास्त्री की अध्यक्षता में काशी-पण्डित-सभा में तृतीय पक्ष ही निर्णीत है, जिसे उत्तर प्रदेश वासियों को अपनाना चाहिए।

**६०. अथाशौचसम्पाते निर्णयः। तत्र दशाहमृतके दशाहं ततो न्यूनं वा मृतकमुपस्थितं भवति, तदा पूर्वशेषेण शुद्धिरिति। ६१. दशाहे सूतके दशाहं ततो न्यूनं वा सूतकं पतति तदा पूर्वशेषेण शुद्धिरिति। ६२. सूतकमध्ये दशाहन्यूनं वा मृतकं पतति तस्य पूर्वेण शुद्धिः। तत्र सूतकस्यावशिष्टत्वे तु मृतकसमाप्त्या सूतकमपि समापनीयमिति। ६३. त्र्यहादिरूपे मृतके सूतके च दशाहमृतकपाते च दशाहसूतकपाते च न पूर्वेण शुद्धिरिति।**

६०. अथ अशौच सम्पात-निर्णय। यदि एक अशौच के प्रवृत्त होने पर उसी के बीच में दूसरा अशौच आ जाय, तो कर्तव्य का निश्चय होना परमावश्यक है। यहाँ पर दशाह मृताशौच के अन्दर दूसरा दशाह अशौच या दशाह से न्यून मृतकाशौच उत्पन्न हो जाय, तो पूर्व अशौच के शेष से उत्तर की भी शुद्धि हो जाएगी। ६१. दश दिन के जननाशौच के मध्य में यदि दूसरा दशाह अशौच या दशाह से न्यून जननाशौच उत्पन्न हो जाय, तो पूर्व के शेष दिन में उत्तर की भी निवृत्ति हो जाएगी। ६२. जन्म अशौच के मध्य में दशाह या न्यून दिन वाले (त्रिरात्रादि) मृताशौच के उत्पन्न होने पर पूर्व शेष अशौच के दिन में उत्तराशौच की निवृत्ति हो जाएगी। इसमें सूतक के अवशिष्ट से मृतक की समाप्ति हो जाने पर सूतक को भी समाप्त कर देना चाहिए। ६३. यदि त्रिरात्रादि जनन सूतक या मृतक प्रारम्भ है और उसके मध्य में दश दिन वाला मृतक या जनन सूतक उपस्थित हो जाय, तो पूर्व से पर की शुद्धि नहीं होती है।

**६४. मृतके सूतकस्य समन्यूनस्य वा सम्पाते पूर्वेण शुद्धिरिति। ६५. अधिकस्यापि सूतकस्य शुद्धिरिति शुद्धिविवेककारः। ६६. पूर्वाशौचमध्ये उत्पन्नमपि पूर्वाशौचोत्तरं ज्ञातं चेदुत्तरमेव कार्यं दशाहान्त्यरात्रौ यदि दशाहं सूतकं पतति, तदा दिनद्वयमधिकं कार्यं सा रात्रिः परेद्युश्चेति। ६७. दशाहान्त्यरात्रिचतुर्थयामे यदि दशाहमशौचं पतेत्तदा दिनत्रयमधिकं कार्यमिति। ६८. त्र्यहाद्यशौचानां परस्परं रात्रिशेषे सम्पाते पूर्वेणैव शुद्धिः, न द्व्यहादिवृद्धिरिति।**

६४. पूर्व प्रारम्भ मृताशौच के बीच में मृतकाशौच के दिन के बराबर या न्यून वाले सूतक के उत्पन्न होने पर मृताशौच के शेष अशौच दिन से सूतक की निवृत्ति हो जाएगी। ६५. शुद्धिविवेक के अनुसार न्यून दिनात्मक मृताशौच, मध्यपाती से अधिक दिन वाला सूतक भी अल्प दिन वाले मृताशौच से निवृत्त हो जाता है। ६६. पूर्वाशौच के मध्य में उत्पन्न भी अशौच यदि पूर्वाशौच निवृत्ति के बाद ज्ञात हुआ हो, तो ज्ञात उत्तराशौच से ही पूर्वाशौच की निवृत्ति होगी। दशाहाशौच के दशवें दिन की रात्रि में अन्य दशाह सूतक उत्पन्न हो, तो दो दिन अधिक होने पर पूर्व की निवृत्ति होगी। जैसा कि वह रात्रि और उस रात्रि के बाद का दिन। ६७. यदि दशाहान्त्य रात्रि के चतुर्थ प्रहर में दशाहाशौच उत्पन्न हो, तो तीन दिन की वृद्धि से पूर्वाशौच के साथ उत्तराशौच भी समाप्त हो जाता है। ६८. त्रिरात्रादि अशौच परस्पर एक-दूसरे के रात्रिशेष में उत्पन्न हों, तो पूर्व से शुद्धि हो जाती है। इसमें दो दिनों की वृद्धि अपेक्षित नहीं है।

**६९. वर्द्धिते द्वित्रिदिनमध्ये अशौचान्तरसम्पाते च अधिकस्य न पूर्वेण शुद्धिः, समन्यूनयोस्तु पूर्वेण शुद्धिरिति। ७०. सपिण्डाशौचेन मातृपितृभर्त्तृणामशौचं नापैतीति। ७१. मात्राशौचमध्ये पित्राशौचपाते पूर्वशेषेण शुद्धिरिति। ७२. पितुः सम्पूर्णाशौचेन शुद्धिरित्यन्ये, तेषां शेषपदस्य पूर्णपरत्वं लाक्षणिकम्, पित्राशौचमध्ये मातृमरणे तु पित्राशौचं समाप्य पक्षिणीमधिकं कुर्यादिति। ७३. इदं दशमरात्रेरर्वाग्भवति, दशमरात्र्यां तद्रात्रिचतुर्थयामे तु मातृमरणे द्व्यहं त्र्यहं वेति न पक्षिणी।**

६९. दो या तीन दिन बढ़े अशौच में यदि दूसरे अशौच की प्राप्ति हो जाय, तो अधिक दिन वाला अशौच पूर्व से शुद्ध नहीं होता है। वर्धित अशौच त्रिरात्र, पक्षिणी आदि सम या न्यूनसंख्यक अशौच की ही पूर्व से निवृत्ति होती है। ७०. सपिण्डों के शेष अशौच से माता-पिता या पति-पत्नी का अशौच पूर्व से निवृत्त नहीं होता। ७१. यदि माता के अशौच के बीच में पिता का अशौच आ जाय, तो पूर्व से शुद्धि हो जाती है। ७२. पिता के सम्पूर्ण अशौच की शुद्धि नहीं होती, अर्थात् पिता के अशौच की निवृत्ति होनी चाहिए। यह कोई कहते हैं। इनके शेष पद का पूर्णपरक लाक्षणिक अर्थ है। पिता के अशौच के मध्य में माता का अशौच आ जाय, तो पिता के अशौच को समाप्त करके पक्षिणी अधिक करना चाहिए। ७३. इस पक्षिणी की वृद्धि तभी हो सकती है, जब पिता के अशौच के दशवें दिन के पूर्व माता का अशौच प्रारम्भ हो सके, अन्यथा दशवें की रात्रि में दो दिन और दशवें की रात्रि के चतुर्थ याम में हो, तो अशौच में तीन दिन की वृद्धि करनी चाहिए। यहाँ पक्षिणी वृद्धि नहीं है।

**७४. मातुर्भर्त्रा सहान्वारोहणे तु नाधिका पक्षिणी पूर्वाशौचेन शुद्धिरिति। ७५. सूतिकायामग्निदे प्रेतपुत्रेषु च नास्ति, अत्र प्रेतपुत्रेषु पुनर्ग्रहणं वचनान्तरानुरोधेनेति। ७६. सूतके मृतकपाते न पिण्डदाने प्रतिबन्धः, मृतके सूतकसम्पाते जातकर्मादि तदानीमाशौचान्ते वा कुर्यादिति विकल्प इति। ७७. मातुर्वाधिका पक्षिणी तन्मध्ये पितुरेकादशाहं श्राद्धं कुर्यादिति। ७८. शवस्पर्शे दिवा चेन्नक्षत्रदर्शनाच्छुद्धिः, रात्रौ चेत्सूर्यदर्शनात्, तदन्नाशने तद्गृहवासे वा यावत्तेषामशौचं तावदशौचमिति।**

७४. माता का पति के साथ अन्वारोहण (सती) होना अर्थात् यदि पिता की मृत्यु हो गई और माता पति की मृत्यु से दूसरे-तीसरे दिन सती हो गई, तो पक्षिणी की वृद्धि नहीं होगी, पति के अशौच से ही पत्नी का भी अशौच समाप्त हो जाएगा। ७५. अशौच सम्पात में जो पूर्व से शुद्धि होती है, वह सूतिका व अग्नि देने वाले को प्रभावित नहीं कर सकती है। प्रेत पुत्र का ग्रहण वचनान्तर के अनुरोध से है। ७६. यदि सूतक में मृतक का सम्पात अर्थात् सूतक जननाशौच में किसी की मृत्यु हो जाय, तो पिण्डदानादि अन्त्य कर्म बाधित नहीं होता है, अर्थात् पिण्डदानादि दाह कार्य होंगे। एवं इसी प्रकार मृतकाशौच के अन्दर पुत्र जननादि सूतक उत्पन्न हो जाय, तो जातकर्म बाधित नहीं होता या अशौचान्त में जातकर्म करे। यह विकल्प है। ७७. पिता के अशौच के मध्य में माता का अशौच पात होने पर पूर्व में पक्षिणी की वृद्धि की गई है, उस वृद्धि में पिता का एकादशाहादि कर्म करें। ७८. यदि दिन में शवस्पर्श हो गया हो, तो रात्रि में चन्द्रदर्शन से शुद्धि हो जाती है और यदि रात्रि में हो तो सूर्यदर्शन से शवस्पर्श-जन्य अशौच निवृत्त हो जाता है। अशौची का अन्न खाने और अशौची के गृह में वास करने से अशौच वाले व्यक्ति के अशौच के साथ ही उसका भी अशौच निवृत्त होता है।

**७९. संसर्गाशौचे कर्माधिकारो नास्ति; किन्तु स्पृश्यमात्रमिति। ८०. तद्गृह्याणां तद्द्रव्याणां नाशौचसम्बन्ध इति। ८१. तदन्नाशने तद्गृह-वासे त्र्यह इति। ८२. अगृहवासेऽन्नाभक्षणे निर्हरणमात्रे कृते चैकाह इति। ८३. भृतिग्रहणे सवर्णनिर्हारे दाहे च तज्जात्याशौचं दशाहादिति। ८४. विजातीयनिर्हारे विजातीयदाहे च शवजातीयमशौचम्, भृतिग्रहणे विजातीयनिर्हारे दाहे च शवजातीयाद् द्विगुणमिति। ८५. सोदकनिर्हारे दशाह इति।**

७९. संसर्गज अशौच में कर्म का अधिकार नहीं होता है, किन्तु स्पृश्यता बनी रहेगी। शव का स्पर्श या शवानुगमन को संसर्गाशौच कहते हैं। ८०. किन्तु संसर्गाशौच वाले के पुत्र, भार्या व द्रव्य से अशौच का सम्बन्ध नहीं है। (स्नेहेन सवर्णनिर्हारे तदन्नाशने तद्गृहवासे च दशाहः।) ८१. प्रेम से सजातीय के शव का कन्धे से निर्हरण करने और उसके अन्न का भोजन करने एवं उसके गृह में वास से दश दिन का अशौच लगता है। उस घर का अन्न भक्षण न करने, केवल उस घर में रहने से त्रिरात्र अशौच लगता है। ८२. गृहवास और अन्नभक्षण दोनों न करने पर केवल निर्हरण से एक दिन का अशौच लगता है। ८३. द्रव्य लेकर शव का निर्हरण (ढ़ोने) व दाह करने वाले पुरुष को दाह-संस्कार दिन से शव की जाति के समान दिन तक अशौच लगेगा। ८४. विजातीय शव का निर्हरण करने से व उसका दाह-संस्कार करने से कर्त्ता को शवजातीय अशौच होता है। द्रव्य लेकर विजातीय शव का निर्हरण या दाह-संस्कार करने से तज्जातीय अशौच का द्विगुणित अशौच लगता है। ८५. सोदक शव का निर्हरण करने पर १० दिन का अशौच होता है।

**८६. असपिण्डालङ्करणे अज्ञानादुपवासः, अशक्तौ स्नानम्, ज्ञानतः पादकृच्छ्रमिति। ८७. धर्मार्थमनाथशवसवर्णनिर्हरणे क्रियाकरणेऽग्निदाहे च द्विजस्यानन्तफलम्, स्नानाच्छुद्धिः, प्राणायामः, अग्निस्पर्शश्चेति। ८८. धर्मार्थमनाथसवर्णनिर्हरणादावपि मातुलादिसम्बन्धे सति त्रिरात्रमशौचमिति। ८९. अनुगमने तु सापत्नदोषः, असपिण्डे अनाथक्रियायां न दोष इति। ९०. समोत्कृष्टवर्णीयशवानुगमने स्नात्वा हुताशं स्पृष्ट्वा सर्पिष्प्राश्य पुनः स्नात्वा प्राणायामं कृत्वा शुद्धिरिति। ९१. हीनवर्णशवानुगमने क्षत्रिये एकाहः, वैश्ये पक्षिणी, शूद्रे त्रिरात्रम्, पूर्ववत्स्नानादि चेति। ९२. ब्रह्मचारिणः सपिण्डमरणे नाशौचम्, नान्यस्य निर्हारदाहाद्यौर्ध्वदैहिकेऽधिकारः, तत्करणे पुनरुपनयनं कृच्छ्रप्रायश्चित्तं चेति।**

८६. ज्ञान से असपिण्ड शव को अलङ्कृत करने से पादकृच्छ्र प्रायश्चित्त होता है, अज्ञान से उपवास और उपवास करने में अशक्त की स्नान मात्र से शुद्धि हो जाती है। ८७. अनाथ सवर्ण द्विज के शव का धर्मार्थ निर्हरण व अग्निसंस्कार आदि क्रिया करने वाले पुरुष को अनन्त पुण्य की प्राप्ति होती है और उसकी स्नान, अग्निस्पर्श व प्राणायाम से शुद्धि हो जाती है। ८८. धर्मार्थ अनाथ सवर्ण शव-निर्हरणादि में भी यदि मामा आदि किन्हीं सम्बन्धियों का हो तो त्रिरात्र अशौच होता है। ८९. शवानुगमन सामान्य दोष होता है। असपिण्ड अनाथ शव की क्रिया करने में दोष नहीं होता है। ९०. समान जातीय या उत्कृष्ट जातीय शवयात्रा में स्नान करके, अग्नि स्पर्श कर, घृत पान करके, पुनः स्नान कर प्राणायाम करने से शुद्धि हो जाती है। ९१. हीनवर्ण की शवयात्रा में क्षत्रिय में १, वैश्य में पक्षिणी, शूद्र में तीन रात का अशौच होता है और पूर्ववत् स्नानादि से शुद्धि होती है। ९२. ब्रह्मचारी को सपिण्ड के मरने पर अशौच नहीं होता है और

दूसरे के शव का निर्हरण या और्ध्वदैहिक कर्म करने का अधिकार नहीं है। वैसा करने से ब्रह्मचारी की पुनः उपनयन व कृच्छ्र प्रायश्चित्त करने से शुद्धि होती है।

**९३. ब्रह्मचारिणः पितृमात्राचार्योपाध्यायमातामहानामन्त्यकरणे न दोषः, तत्र दशाहमस्पृश्यत्वलक्षणमशौचं दशदिनं सन्ध्याग्निकार्यादि-कर्माधिकारो नास्त्येव, एकदिनमस्पृश्यत्वमिति माधव इति। ९४. पित्राद्य-शौचेऽपि नाशौचिनामन्नं ब्रह्मचारी भक्षयेत्, भक्षणेऽपि पुनरुपनयनमिति। ९५. ब्रह्मचारिणः पित्राद्यन्तकर्माकरणे तु पित्रादि-मरणेऽपि नाशौचमिति। ९६. समावर्त्तनोत्तरं पूर्वमृतानां त्रिदिनाशौचं कार्यमेवेति। ९७. कृतजीवच्छ्राद्धेन किमप्यशौचं न कार्यमिति हेमाद्रिः।**

९३. पिता, माता, आचार्य, उपाध्याय या नाना-नानी इनमें किसी का अन्त्यकर्म करने पर ब्रह्मचारी को दोष नहीं लगता है। किन्तु दश दिन तक अस्पृश्यत्व लक्षण अशौच होता है और इस अवधि में सन्ध्या, अग्निहोत्र करने का अधिकार नहीं रहता है। माधव के अनुसार एक ही दिन अस्पृश्यत्व रहता है। ९४. पिता आदि के अशौच में भी ब्रह्मचारी अशौचान्न भक्षण न करे। यदि भक्षण करे, तो पुनः उपनयनादि संस्कार करना होगा। ९५. पिता आदि, जिनका अन्त्य कर्म करने का अधिकार है, उनका अन्त्य कर्म न करने पर उनके मरण पर ब्रह्मचारी को अशौच नहीं लगता है। ९६. समावर्तन के बाद पूर्व में मृत सपिण्ड, पिता आदि का त्रिरात्र अशौच का पालन करे। ९७. हेमाद्रि का वचन है कि जिनका जीवितश्राद्ध हो चुका है, उनके मरने के बाद सपिण्डों को अशौचादि कोई भी कार्य पालन करने की आवश्यकता नहीं है।

**९८. वानप्रस्थयतिपतितैरपि किमप्यशौचं न कार्यं तेषामपीतरैर्न कार्यम् । ९९. परेषां सवर्णानामौर्ध्वदैहिककरणे तज्जात्याशौचं कृत्वा कृच्छ्रत्रयाच्छुद्धिरिति । १००. हीनवर्णोर्ध्वदैहिककरणे तु शवजातीयमाशौचं कृत्वा कृच्छ्रत्रयद्वैगुण्याद्घूह्यमिति । १०१. आहिताग्नेरस्थिदाहे प्रतिकृतिदाहे वा सर्वसपिण्डानां दशाद्यशौचमिति । १०२. अनाहिताग्नेस्तु अस्थिदाहे पर्णशरदाहे च पत्नीपुत्रयोः पूर्वमगृहीताशौचयोर्दशाहिकं पूर्णमेवेति । १०३. गृहीताशौचयोस्तु तयोरपि संस्कारकाले त्रिरात्रम्, पत्नीसंस्कारे पत्युश्चैवं समपत्न्योर्मिथश्चैवमिति ।**

९८. वानप्रस्थी, यति, पतित कोई भी अशौचादि का पालन न करें और इनके भी अशौचादि का पालन दूसरे को नहीं करना चाहिए। ९९. दूसरे वर्ण के शव का औध्र्वदैहिक कार्य करने पर उस जाति के अशौच का पालन करके तीन कृच्छ्र प्रायश्चित्त करना चाहिए, तभी शुद्धि होती है । १००. हीन जाति के शव का और्ध्वदैहिक कार्य करने पर शवजातीय अशौच का पालन कर द्विगुणित कृच्छ्रत्रय प्रायश्चित्त करना चाहिए । १०१. अग्निहोत्री के शव या पुतले के दाह में सपिण्ड मात्र को दश दिन का अशौच होता है । १०२. जो अग्निहोत्री नहीं हैं, उनके शव या पुतले के दाह में स्त्री-पुत्र ने यदि पूर्व (मरने के दिन से) अशौच का ग्रहण नहीं किया है, तो पूर्ण दश दिन का अशौच लगेगा (श्रुत या प्रेतक्रिया प्रारम्भ दिन से) । १०३. एवं यदि पूर्व (मृत के दिन) से अशौच का पालन करते हैं, तो पुत्तलादि संस्कार के दिन से त्रिरात्र अशौच लगेगा । पत्नी के संस्कार में पति को भी पूर्ववत् और सपत्नियों को भी परस्पर पूर्ववत् (१०२) का नियम लागू होगा ।

**१०४. अन्यसपिण्डानां पूर्वमगृहीताशौचानां अनाहिताग्निसंस्कार-काले त्रिरात्रं पूर्वगृहीताशौचानां तु सपिण्डानां संस्कारकाले स्नानमात्रमिति। १०५. इदं त्रिरात्रादिकं दशाहोर्ध्वं संस्कारकरणे ज्ञेयम्, दशाहमध्ये तु शेषदिवसैरेवाशौचसिद्धेरुक्तत्वादिति।**

१०४. इसी प्रकार अनाहिताग्निक (जो अग्निहोत्री नहीं है) के संस्कार (पुत्तल-दाह) से सपिण्डों को त्रिरात्र अशौच लगता है, यदि पूर्व में अशौच का पालन न किए हों और यदि पूर्व से अशौच का पालन किए हैं, तो संस्कार के समय स्नानमात्र से शुद्धि हो जाती है। १०५. यह जो त्रिरात्र का विषय है, वह दश दिन के बाद पुत्तलादि संस्कारपरक है। दशाह के मध्य में यदि पुत्तलादि संस्कार किया जाता है, तो शेष दिन में ही अशौच की निवृत्ति हो जाती है।

**१०६. अथ रजोदर्शनम्। तत्र रजस्वलायास्तु विंशतिदिनोत्तरं प्रायशो रजोदर्शनं भवति, तस्याः सप्तदशदिनपर्यन्तं पुना रजोदृष्टौ स्नान-मात्रम्, अष्टादशे एकरात्रम्, एकोनविंशे द्विदिनम्, विंशप्रभृति-दिनत्रय-मिति। १०७. यस्यास्तु विंशतिदिनादर्वाक् प्रायशो रजोदर्शनं भवति, तस्या दशदिनपर्यन्तं स्नानमात्रम्, एकादशे एकरात्रं द्वादशे द्विरात्रं त्रयोदशादारभ्य त्रिरात्रमिति।**

१०६. अथ रजोदर्शन – प्रथम रजोदर्शन के बाद प्रायः बीस दिन बाद पुनः रजोदर्शन होता है। इसके बाद १७ दिन पर पुनः रजोदर्शन होने पर स्नानमात्र व १८ दिन पर एक रात्रि, १९ दिन पर दो दिन, २० दिन प्रभृति में तीन दिन की अशुद्धि रहती है। १०७. जिसका २० दिन के पूर्व प्रायः रजोदर्शन होता है, उसके लिए १० दिन के अन्दर होने में स्नान मात्र से शुद्धि हो जाती है। एकादश में एक रात्र, द्वादश में दो रात्र, तेरह दिन से आरम्भ होने में तीन दिन अशुद्धि होती है।

**१०८. अथ मरणान्तसूतकिनः—**

**"व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा।**
**क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः॥**
**व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।**
**श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत्"॥ इति दक्षः।**

**१०९. अथ वपनविधिः। वर्षीयस्युद्गते तूपरि वपननखच्छेदनं सूतकान्ते मध्ये वा केचिदूचुः। पितृपरमगुरुष्वेव वापादि नित्यम्। अत्र स्मार्त्तं शुभार्थे भणितमभणितं तत्स्वगृह्यैर्विदित्वा कृत्वा दानं च दद्यादशुभभयभिदे भूसुरेभ्यः शुभार्थे इति त्रिंशच्छ्लोकी।**

१०८. जिनका मरणान्त ही अशौच होता है, वे दीर्घ रोगी, कृपण, ऋणी, क्रियाहीन, मूर्ख, स्त्रीजित, दुर्व्यसनी, श्रद्धा व त्याग से विहीन हैं। इन सबका भस्मान्त अशौच होता है। ऐसा दक्ष का कथन है।
१०९. अथ वपन (मुण्डन) विधि। एक वर्ष बीत जाने के बाद मुण्डन, नखच्छेदन सूतकान्त में यहाँ सूतक के मध्य में करवाना चाहिए। यह कोई कहते हैं। पिता, परम गुरु (दीक्षा-दाता गुरु) की मृत्यु में जलाञ्जलि का विधान है। स्मार्तों को चाहिए कि वे कथित व अकथित क्रिया-कल्प अपने गृह्यसूत्र के अनुसार अशुभ दोष-निवृत्ति व शुभ फलप्राप्ति हेतु ब्राह्मणों को दान देकर मुण्डन करायें।

**११०. अथ दाहाधिकारिणः। तत्र श्राद्धादौ औरसः पुत्रो मुख्योऽधिकारी, औरसानां बहुत्वे ज्येष्ठाधिकारी, ज्येष्ठाभावेऽसन्निधौ वा पतितो वा सर्वतः कनिष्ठाधिकारी, पुत्राणां विभक्तत्वे कनिष्ठेभ्यो धनं गृहीत्वा ज्येष्ठेन क्रिया कार्य्येति।**

११०. अथ दाहाधिकारी। दाह आदि कर्म में औरस पुत्र मुख्य अधिकारी है। औरसों की संख्या अधिक हो तो ज्येष्ठ पुत्र अधिकारी होता है। ज्येष्ठ न हो या पतित हो गया हो तो कनिष्ठ पुत्र अधिकारी है। यदि पुत्र विभक्त हैं, तो कनिष्ठों से धन लेकर ज्येष्ठ ही सपिण्डी-पर्यन्त कार्य करे।

**१११. ज्येष्ठासन्निधौ षोडशश्राद्धान्तं कनिष्ठेन कार्यम्, ततो वर्षपर्यन्तं प्रतीक्षां कुर्यात्, वर्षाभ्यन्तरे ज्येष्ठेन कार्यम्, वर्षोत्तरं कनिष्ठेनैव कार्यमिति। ११२. वर्षात् प्राक् पुत्रभिन्नेन कृताः सर्वाः पुनः पुत्रेण दशगात्रं विहाय सपिण्डकरणान्ताः क्रियाः कार्याः। ११३. एवं कनिष्ठेन कृतं चेत् पुनर्ज्येष्ठेन कार्यमिति।**

१११. ज्येष्ठ के दूर रहने पर षोडश-श्राद्धान्त कार्य कनिष्ठ को करना चाहिए और ज्येष्ठ की एक वर्ष तक प्रतीक्षा करनी चाहिए, एक वर्ष के अन्दर ज्येष्ठ के न आने पर, वर्ष के बाद कनिष्ठ को ही शेष कार्य वार्षिक श्राद्धादि करना चाहिए। ११२. पिता की मृत्यु से एक वर्ष के अन्दर पुत्र से अतिरिक्त के द्वारा किये गये कर्म में दशगात्र को छोड़कर सपिण्डीकरणान्त श्राद्ध पुत्र को पुनः करना चाहिए। ११३. इसी प्रकार यदि कनिष्ठ पुत्र श्राद्ध सम्बन्धी सभी कार्य कर चुका है, तब भी वर्षाभ्यन्तर ज्येष्ठ को श्राद्ध की समस्त क्रिया पुनः करनी चाहिए।

**११४. कनिष्ठस्य साग्निकत्वे द्वादशेऽह्नि सपिण्डीकरणमिति। ११५. औरसाभावे दत्तकः, तदभावे पौत्रः, पौत्राभावे प्रपौत्रः, तदभावे दत्तक इति। ११६. उपनीतपौत्रसत्त्वेऽपि अनुपनीतस्यौरसपुत्रस्यैवाधिकारः, स च कृतचूडस्यैव वर्षाधिकवयसः।**

११४. यदि कनिष्ठ साग्निक है, तो उसे द्वादशाह के दिन सपिण्डीकरण करना ही चाहिए। ११५. औरस पुत्र के अभाव में दत्तक पुत्र, दत्तक पुत्र के अभाव में पौत्र, पौत्र के अभाव में प्रपौत्र, प्रपौत्र के अभाव में दत्तक के पुत्रादि श्राद्धकर्माधिकारी होते हैं। ११६. उपनीत पौत्र के रहने पर भी अनुपनीत औरस पुत्र का ही अधिकार है। यदि एक वर्ष से अधिक व मुण्डन-संस्कार हो चुका है।

**११७. पूर्णत्रिवर्षस्य तु अकृतचूडस्यैव अनुपनीतेनापि मन्त्रपाठपूर्वकमेव पित्रोरौर्ध्वदैहिकं सांवत्सरिकादिकं श्राद्धं च का[र्यम्], अशक्तौ तु अग्निदानमात्रं समन्त्रकमनुपनीतेन कार्यमन्यदितरेणेति । ११८. केचिदूनत्रिवर्षेण चूडारहितेनापि दाहमात्रं समन्त्रकं कार्यम्, शेषमन्येनेत्याहुरिति । ११९. दत्तकस्तूपनीत एवाधिकारी, तदभावे (पौत्रप्रपौत्रौ) पौत्रप्रपौत्रयोरप्यभावे भर्त्तुः पत्नी, पत्न्या भर्त्ता च कुर्य्यात्, भर्त्तुरपि सपत्नीपुत्रसत्त्वे नाधिकारः, भार्य्याया अपि समन्त्रकमेव, अशक्तौ अग्निदानमात्रं समन्त्रकं कृत्वा शेषमन्येन, श्राद्धे सङ्कल्पमात्रं शेषमन्येन कार्यमिति ।**

११७. यदि चूड़ाकरण न होने पर भी तीन वर्ष से ऊपर या अनुपनीत औरस पुत्र है, तो उसी को ही मन्त्रपाठपूर्वक पितरों के औध्वदैहिकादि सांवत्सरिकादि समस्त श्राद्ध कर्म करना चाहिए। असमर्थ होने पर अनुपनीत औरस पुत्र समन्त्रक अग्नि-दाह करे, शेष कार्य दूसरे से सम्पन्न कराये, जो अधिकारी हो। ११८. कोई कहते हैं कि तीन वर्ष से न्यून चूड़ाकरण-रहित औरस पुत्र समन्त्रक अग्नि-संस्कार करे और शेष कार्य दूसरे से कराये। ११९. दत्तक उपनीत होने पर ही अधिकारी है। उसके अभाव में पौत्र, प्रपौत्र तथा इनके अभाव में भर्ता पत्नी का व पत्नी भर्ता का संस्कार कर सकती है। सपत्नी के पुत्र रहते पति को भी अधिकार नहीं है। पत्नी यदि मन्त्रपाठ करने में असमर्थ है, तो समन्त्रक अग्निदान करे और शेष कार्य दूसरे से कराये। श्राद्ध में संकल्पमात्र पत्नी करे, शेष दूसरे करें।

**१२०. यद्यपि विभक्तस्य संसृष्टस्य वा भ्रातुरेव धनग्रहाधिकारस्तथापि क्रियाधिकारः पत्न्या एव, विभक्तासंसृष्टे तु भ्रातरि धनाधिकारोऽपि पत्न्या एव, पत्न्या अभावेऽपि विभक्ता संसृष्टस्य कन्या पिण्डदा धनहारिणी च,**

